माध्यमिककक्षायाः पाठ्यक्रमः

# वेदाध्ययनम् - २४५

## पुस्तकम् - १





**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in      निर्मूल्यः दूरभाषः - १८००१८०९३९३

National Institute of Open Schooling
A-२४-२५, Institutional Area, Sector – ६२
NOIDA – २०१ ३०९ (UP)

# माध्यमिककक्षा - वेदाध्ययनम् (२४५)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्रभूषणशर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**समितेः अध्यक्षः**
**डॉ. के. इ. देवनाथन्**
कुलपतिः
श्रीवेङ्कटेश्वर-वैदिक-विश्वविद्यालयः
चन्द्रगिरिपरिमार्गः, अलिपिरि
तिरुपतिः - ५१७ ५०२ (आन्ध्रप्रदेशः)

**समितेः उपाध्यक्षः**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज
दक्षिणेश्वरः, कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. सन्तोषकुमारशुक्लः**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**आचार्यः फूलचन्दः**
वैदिकगुरुकुलम्
पतञ्जलि-योगपीठम् , हरिद्वारम् (उत्तराखण्डः)

**आचार्यः प्रद्युम्नः**
वैदिकगुरुकुलम् , पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज फॉर विमिन
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, ५, ६, १७-२४)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २, ३, ४, ७, ९-१५)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ८)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १६)**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज फॉर विमिन
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**

**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवा इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिक-शिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं वेदाध्ययनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

(डॉ. चन्द्रभूषणशर्मा)
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

वेदाध्ययनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**

**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**

**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

(श्री संजय-कुमार-सिन्हा)
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

अनन्ता वै वेदाः। भारतीयानां गर्वस्थानं श्रद्धास्पादं ज्ञानमूलं जीवनपथप्रदर्शकः इहपरलोकज्ञापकः वेदः। बहुषु शाखासु भिन्नः। वेदाङ्गानि च षट्। उपवेदाः च सन्ति। वैदिकशब्दाः बहुत्र लौकिकशब्देभ्यो भिन्नाः। तत्र व्याकरणस्य विशिष्टा नियमाः। अतः पाठ्यक्रमेऽस्मिन् वैदिकवाङ्मयस्य इतिहासः, सूक्तानि, व्याकरणम् चेति त्रेधा विभागः परिकल्पितः। क्लिष्टविषया अत्यन्तं सरलया गिरा अस्मिन् पाठ्यक्रमे वर्तते।

माध्यमिककक्षायां प्रदत्तः वेदाध्ययनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः तस्य अध्ययनेन ज्ञानेन परिपुष्टः भवेत्। माध्यमिककक्षाया वेदाध्ययनम् इति विषयस्य अध्ययनेन वेदे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री वेदानां सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

(राम-नारायण-मीणा)
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १



## पुस्तकम्- २

# वेदाध्ययनम्

# माध्यमिककक्षा

## प्रथमं स्वाध्यायपर्व

# १

# वेदविषयप्रवेशः

## प्रस्तावना

भारतीयानां धर्मस्य आचारस्य अध्यात्मस्य वाङ्मयस्य च मूलम् वेदः। तत्र आदौ संस्कृतसाहित्यम् किम् भवति इति प्रतिपादयिष्यते। तस्य वैशिष्ट्यम् किम् किं वा अस्य महत्त्वम् इति एतत् सर्वम् अस्मिन् पाठे वक्ष्यते। संस्कृतसाहित्यजगति वैदिकवाङ्मयस्य वैशिष्ट्यं को वा न जानाति। वैदिकवाङ्मयस्य विभूतिविषये अतिशयोक्तिः नास्ति। इदं वाङ्मयं प्राचीनम्, समग्रपृथिवीव्यापि, अस्य परिमाणं विशालम्। अस्य वैभवं निरतिशयम्, अस्य सौन्दर्यगुणः अनन्यतुल्यः। महत् मौलिकं पुरातनं च इदं वाङ्मयम्। तत्र अस्माकम् अभिनिवेशः सर्वदा भवति। न केवलम् एतावन्मात्रम्। अन्यानि अपि निमित्तानि वैदिकवाङ्मयस्य अध्ययने विद्यार्थिनां कृते विशिष्टाम् अभिरुचिं जनयन्ति।

संस्कृतसाहित्ये वेदानां स्थानं मूर्ध्नि वर्त्तते। भारतीयदर्शनस्य धर्मस्य च जीवनं वेदाः एव सन्ति। वैदिकवाङ्मयम् अनादि अपौरुषेयम्। इदं वाङ्मयं मन्त्रब्राह्मणात्मकं वेदवत् चरणाश्रितं सकलसच्छास्त्रतात्पर्यं च अस्ति। इदं वाङ्मयं प्राचीनतमं सकलभाषासाहित्यानां मूलभूतम् इत्यस्मिन् विषये भाषातत्त्वविदां विदुषां न कश्चित् सन्देहलेशः। अस्य वाङ्मयस्य अध्ययनम् अत्यावश्यकम् इति भाषातत्त्वविदः विद्वांसः अनुभवन्ति। भारतीयानां कृते वैदिकवाङ्मयस्य इतिहासः अनुपमः अक्षयधनतुल्यः च अस्ति। तस्मादेव कारणात् भारतीयाः विद्वांसः अस्य विषयस्य अध्ययनेन आह्लादम् अनुभवन्ति।

आर्याणां सभ्यता संस्कृतिश्च वेदान् एव आधारीकृत्य विराजते। वेदान् न केवलं भारतीयाः विद्वांसः वैदेशिकाः अपि विद्वांसः श्रद्धादृष्ट्या सर्वदा अवलोकयन्ति। परमसत्यस्य अनुसन्धातारः महर्षयः यत् महत् तत्त्वम् अनुभूतवन्तः तस्य बोधयितारः विद्वांसः अद्यापि पृथिव्यां विराजन्ते। भारतीयपरम्परानुसारेण वेदाः तु अपौरुषेयाः सन्ति एव। अतिप्राचीनकालाद् एव इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकाः उपायाः तेभ्यः एव ज्ञायन्ते। वेदेषु ज्ञान-विज्ञान-धर्म-दर्शन-सदाचार-संस्कृति-नैतिक-सामाजिक-राजनैतिकप्रभृतीनां जीवनस्य उपयोगिविषयाणां सन्निवेशः वर्तते। यत्र प्रत्यक्षस्य न प्रवेशः न वा अनुमानस्य प्रवेशः तत्रापि वेदाः प्रविशन्ति। स्मृतिपुराणादयः वेदानुगामिनः सन्ति तस्मादेव हेतोः स्मृतिपुराणादयः ग्रहणयोग्याः। एते स्मृतिपुराणादयः विश्वकोषाः इति विदुषां मतम्। वेदाः अस्माकं श्रेयःकर्मणां प्रेयःकर्मणां च साधनमस्ति। प्राचीनधर्मविषये प्राचीनसमाजविषये व्यवहारविषये च बोधं जनयितुं श्रुतयः एव समर्थाः भवन्ति। वेदाः अखिलस्य अपि धर्मस्य मूलभूताः इति हेतोः ते सर्वथा समादृताः भवन्ति। स्मृतिकारेण मनुना अपि उक्तं -

**'वेदोऽखिलो धर्ममूलम्' तथा वेदाद्धर्मो हि निर्बभौ।'इति।**



एवञ्च, महाभाष्यकारः पतञ्जलिः ब्राह्मणस्य षडङ्गवेदाध्ययनम्  अनिवार्यम् इति कथनं समर्थयति। तथाहि-

**'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।'**

वेदेषु आध्यात्मिकदर्शनस्य उत्कृष्टं भाण्डागारं निक्षिप्तम् अस्ति। किञ्च तेषां प्रतिपादनस्य रीतिः अर्वाचीनानां प्रतिपादनशैलीतः सर्वथा भिन्ना एव। मानवानां जीवनस्य दर्शनं वेदेषु एव द्रष्टव्यम्। विश्वसाहित्ये वेदानां महत्त्वं वैशिष्ट्यं च स्पष्टमेव प्रतिभाति। एवम् अग्रे भवन्तः वेदशब्दार्थम् तस्य च पर्यायशब्दान् ज्ञास्यति। अन्ते च वेदः पौरुषेयः अपौरुषेयः वेति विषये सामान्यविचारः प्रदर्शयिष्यते।

अखिलज्ञानराशेः आधारः भवति वेदः। वेदेषु प्राचीनतमः य ऋग्वेदः स एव विश्वस्य प्राचीनतमो ग्रन्थः। नास्ति तादृशं किमपि ज्ञानं यद् वेदे नास्ति। वायुयानाद् आरभ्य ब्रह्मविद्या सर्वमेव वेदे अस्ति। परन्तु कालवशेन अधुना वेदस्य तथा अध्ययनं न लभ्यते। अत्र तु सामान्येन स्थूलांशः स्पृष्टो वर्तते। तत्रापि वेदादिशब्दानां धातु-प्रत्ययादिनिर्देशपुरस्सरं निर्वचनादिकमपि अत्र प्रदर्शितम्। अत्र वेदस्य विभिन्नानां शाखानां नामनिर्देशपूर्वकं तत्र विद्यमानानां मन्त्राणां संख्या अपि प्रदत्ता।

वेदे स्वरस्य महिमा वर्तते। अतः स्वरविषयोऽपि संक्षेपतः अस्मिन्नेव पाठे उपस्थापयिष्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वेदानाम् वैशिष्ट्यम् ज्ञास्यति।
- वेदानां महत्त्वम् किम् इति अवगमिष्यति।
- वैदिकवाङ्मयम् किम् भवति इति जानीयात्।
- वैदिकवाङ्मयविभूतिः का इति बुध्यात्।
- वेदशब्दार्थम् वेदस्य पर्यायशब्दान् च ज्ञास्यति।
- वेदः पौरुषेयः अपौरुषेयः वेति विषये सामान्यविचारम् अवगमिष्यति।
- वेदलक्षणम् किम् इति ज्ञास्यति।

## १.१) वेदानां वैशिष्ट्यम्

अतीव विशिष्टं व्यापकञ्च अस्ति वेदानां महत्त्वम्। वैदिकवाङ्मयस्य महत्त्वं कोऽपि सामान्यतया वर्णयितुं न समर्थः। अत्र सर्वाङ्गपूर्णाः मानवजीवनस्य उद्देश्यभूताः धर्मार्थकाममोक्षाख्याः चत्वारः अपि पुरुषार्थाः आलोचिताः सन्ति। अतः वैदिकवाङ्मये मानवजीवनस्य उपयोगिनः सर्वे अपि विषयाः साधु विवेचिताः इति कथनं समुचितम् एव। अत्र प्रेयःशास्त्रं श्रेयःशास्त्रं च उभयमपि समभावेन वर्धितम्। अत एव अत्र भोगस्य मोक्षस्य च सत्तायाः सकलवाङ्मयापेक्षया विशिष्टता विद्यते। अतिमहत्त्वपूर्णम् इदं वैदिकसाहित्यम्। इदं प्राचीनतायां सर्वातिशायि अस्ति इति सर्वे जानन्ति एव। इदं व्यापकं परिमाणे च

महत् अस्ति इति प्रसिद्धम्। तस्य अध्ययनम् अपरिहार्यम् अनिवार्यं च अभ्युपगतम्। यो हि द्विजः वेदम् अनधीत्य अन्यत्र श्रमं करोति सः इह शूद्रो मतः। यथा-

**'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' - मनु°**

भारतीयविचारधाराया दृढोऽयं विश्वासो यत् वेदतत्त्वज्ञ एव जनः ब्रह्म ज्ञातुम् प्रभवति। यथा-

**'वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥'**

स्वकीयविशिष्टताभिः वैदिकवाङ्मयस्य महत्त्वं प्रतिष्ठितं विद्यते। वेदानां ज्ञानं विना जीवनस्य अन्तिमम् लक्ष्यम् अधिगम्यं न भवति, अतः वैदिकवाङ्मयस्य स्थानं महत्त्वपूर्णमस्ति। ज्ञानस्य विमला धारा समस्ते अपि क्षितिमण्डले सर्वासु अपि दिक्षु वेदेभ्य एव निःसृत्य प्रवहति। वेदाः न केवलं भारतीयानाम् अपि तु पृथिव्यां निवसतीनाम् सर्वासामपि मानवजातीनां हितसाधनाय सन्ति।

अस्मदीयाः पूर्वजाः केन प्रकारेण जीवनयापनं कृतवन्तः। काभिः क्रीडाभिः ते स्वकीयं मनो मोदितवन्तः। काः देवताः ते पूजितवन्तः। विवाहसम्बन्धस्य उद्देश्यं ते किं निर्धारितवन्तः। केन च विधिना ते प्रभाते अग्नौ आहुतिं समर्पितवन्तः इत्यादिविषये हृदये जिज्ञासा वर्तते चेत् तदा तेषां विषये यथार्थं ज्ञानं वेदेभ्य एव लब्धुं शक्यम् अस्ति।

वेदानाम् उपादेयत्वं महत्त्वं च तेषां भाषादृष्ट्यापि अधिकम् दृश्यते। अस्याः वैदिकभाषाया अपि महान् प्रभावः आधुनिकभाषाविज्ञाने अस्ति।इयं वैदिकभाषा भाषाविदां मध्ये विस्तृतं प्राचीनभाषाविषयकं मतभेदं निराकृतवती। भाषाशास्त्रपण्डिताः साम्प्रतिकाः इच्छन्ति यत् तेषाम् अभिमतः विषयः नितरां पूर्णतया परिपक्वतां गच्छेत्, तदा ते वेदस्य अध्ययनं कुर्युः ,वेदज्ञानम् अधिगन्तुं च प्रयत्नं कुर्युः। वेदान् अधीत्य अनुशील्य च ते तत्तद्भाषासु समागतानां पाड्ँ-नाइट-फार्चूनप्रभृतिपदानां मूलरूपं तेषां रूपान्तराणां साधु ज्ञानं लब्धुं शक्नुवन्ति। भूयिष्ठप्रयोजनानां साधकत्वात् वस्तुतः वेदाः सन्ति परममहत्त्वभाजः ग्रन्थाः।

## १.२) वेदानां महत्त्वम्

ऋषयः वेदान् प्रणीतवन्तः इति पाश्चात्याः पण्डिताः चिन्तयन्ति। वेदाः शब्दराशयः इति पाश्चात्यानां पण्डितानाम् आधिभौतिकी दृष्टिः। तस्मात् ते शब्दराशिसमूहात्मकं वेदं सामान्यग्रन्थम् एव अवगच्छन्ति। परन्तु वेदमर्मज्ञाः भारतीयाः मेधाविनः तान् शब्दराशीन् ऋषिकृतान् न मन्यन्ते। भारतीयविदुषां मते ऋषयः वैदिकमन्त्राणां द्रष्टारः सन्ति न तु कर्तारः। अलौकिकसामर्थ्यशालिनः ऋषयः दिव्यया प्रतिभया मन्त्राणां दर्शनं लब्धवन्तः। तेषां मन्त्रराशीनां प्रकाशः तेषां बुद्धौ आविर्भूतः। 'ऋषति पश्यति इति ऋषिः' इति व्युत्पत्त्या लब्धस्य 'ऋषि' इत्येतस्य पदस्य अर्थः 'मन्त्रद्रष्टा' इत्यस्ति एव। ऋषिशब्दः 'इगुपधात् कित्' इत्यनेन औणादिकसुत्रेण इनि प्रत्यये कृते निष्पद्यते। निरुक्ते च विद्यमानाः- 'तद्येनास्तपस्यमानन् ब्रह्मस्वयम्भ्वभ्यानर्षत्।' इत्यादयः पङ्क्तयः ऋषेः मन्त्रद्रष्टृत्वम् समर्थयन्ति।



## वेदाध्ययनम्

प्रधानरूपेण वेदो द्विविधः- मन्त्ररूपः ब्राह्मणरूपः चेति। मन्त्रसमुदायः एव संहिताशब्देन व्यवहृतः। ब्राह्मणरूपः वेदभागस्तु संहिताभागस्य व्याख्यारूपः एव। स च अयं ब्राह्मणभागः यागस्वरुपस्य बोधकः इति प्रथितः। ब्राह्मणग्रन्थः अपि त्रिधा विभक्तः भवति- ब्राह्मणम्, आरण्यकम्, उपनिषत् चेति। यज्ञस्वरूपप्रतिपादकः ब्राह्मणभागः भवति। अरण्ये पठिताः ये च यज्ञस्य आध्यात्मिकं रूपं विवेचयन्ति ते वेदभागाः आरण्यकानि। उपनिषदः ब्रह्मस्वरूपस्य बोधिकाः मोक्षसाधनानि वा, अयम् एव भागः वेदस्य अन्तरूपतया साररूपतया वा वेदान्तः इति उच्यते। ब्राह्मणभागो गृहस्थानामुपयोगी अस्ति, आरण्यकभागो वानप्रस्थम् आश्रितानाम् उपयोगी अस्ति, उपनिषद्भागश्च संन्यस्तानां सन्यासिनां वा उपयोगी इत्यपि कथयितुं शक्यते।



## पाठगतप्रश्नाः

१. द्विजः वेदम् अनधीत्य अन्यत् कर्म करोति चेत् किम् भवति।
२. कः ब्रह्म ज्ञातुम् प्रभवति।
३. वेदशास्त्रार्थ....इत्यादिकारिकां पूरयत।
४. योऽनधीत्य.....इत्यादिकारिकां पूरयत।
५. पाश्चात्याः पण्डिताः वेदान् कैः प्रणीतान् मन्यन्ते।
६. भारतीयविदुषां मते ऋषयः के।
७. ऋषिशब्दस्य व्युत्पत्तिलभ्यः अर्थः कः।
८. ऋषिशब्दः केन प्रत्ययेन निष्पन्नः
९. निरुक्तस्य का पङ्क्तिः ऋषिशब्दस्य मन्त्रद्रष्टृत्वरूपम् अर्थं समर्थयत ।
१०. वेदस्य प्रधानौ विभागौ कौ।
११. मन्त्रसमुदायस्य अपरं नाम किम्।
१२. ब्राह्मणरूपः वेदभागः कः।
१३. ब्राह्मणग्रन्थः कतिधा विभक्तः। के च ते।
१४. ब्राह्मणः कस्य प्रतिपादकः।
१५. आरण्यकं नाम किम्।
१६. का नाम उपनिषत्।
१७. ब्राह्मणभागेषु के भागाः केषाम् उपयोगाय।



## १.३) वैदिकवाङ्मयम्

भारतीयज्ञानप्रवाहः गङ्गायाः प्रवाहः इव। तस्य च स्रोतांसि वेदा एव सन्ति। वेदतुल्यः अपरः कोऽपि दीप्तपुञ्जः ग्रन्थः नास्ति। वेदस्य प्रभया न केवलं वेदः स्वयं भासितः अपि तु तस्य प्रभया समस्तभारतीयवाङ्मयम् एव प्रभासितं वर्त्तते। वेदशब्देन यथा चतसृणां मन्त्रसंहितानां परिग्रहणं भवति तथैव वैदिकशब्देन वेदोत्तरकालिकस्य समस्तस्य वैदिकवाङ्मयस्य अवबोधो भवति। वैदिकशब्दस्तु वेदविषयकाणां बहुविधानां ज्ञानसामग्रीणां सूचकः द्योतको वा भवति। वेदविषयकेण सामग्रीपदेन अत्र षड्वेदाङ्ग-ब्राह्मण-आरण्यक-उपनिषदादीनां बोधो भवति। वेदाद् भिन्नाः अपि एते वैदिकग्रन्थाः वेदोद्धृताः एव इति। वैदिकवाङ्मयस्य अन्तर्गता एव एते षड्वेदाङ्गप्रभृतयः ग्रन्थाः सन्ति।

यद्यपि साहित्यशब्दः सम्प्रति वाङ्मयम् इत्यस्मिन् अर्थे प्रयुज्यते यस्मिन् अर्थे'लिटरेचर'-शब्दो वैदेशिकैः प्रयुज्यते। तथापि अत्र वेदशब्दस्य प्रयोगः मन्त्रब्राह्मणयोः निमित्तेन विधीयते। आपस्तम्बेन प्रोक्तञ्च- 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति। येन हि यागानाम् अनुष्ठानं निष्पन्नतां गच्छति, देवतानां च स्तुतिविधानं यत्र उल्लिखितमस्ति सः मननात् मन्त्र इत्युच्यते। ब्राह्मणपदं तु ग्रन्थविशेषवाचकम् अस्ति। यज्ञानां विविधक्रियाकलापानां प्रतिपादकाः ग्रन्थाः 'ब्राह्मणम्' इति संज्ञां भजन्ते। 'ब्राह्मणम्' इत्येतस्य पदस्यार्थोऽस्ति-'वर्धनं विस्तारो वा वितानो वा यज्ञः' इति। ब्राह्मणमपि त्रिषु भागेषु विभक्तमस्ति। प्रथमो भागः 'ब्राह्मणम्' इति, द्वितीयो भागः 'आरण्यकम्' इति, तृतीयो भागस्तु 'उपनिषदि'ति कथ्यते।

वेदश्च स्वरूपभेदात् त्रिविधः- ऋग्वेदः, यजुर्वेदः सामवेदः च इति। यत्रार्थवशेन पादव्यवस्था अस्ति तेषां छन्दोबद्धानां मन्त्राणां नाम 'ऋक्' इति वेद्यम्। ऋचां समूह एव 'ऋग्वेद' इति पदेन व्यवह्रियते। 'यजुः' इत्येतत्पदं यज्-धातोः उसि प्रत्यये कृते निष्पद्यते। यस्मिन् वेदे यज्ञयागादिक्रियाकलापानाम् अनुरोधेन मन्त्राणां सन्निवेशः अस्ति सः 'यजुर्वेद' इत्युच्यते। यत्र गीतिरूपा मन्त्राः विद्यन्ते स उपासनाकाण्डपरो वेदः 'सामवेद' इति गीयते। मन्त्राः त्रिविधाः अत एव वेदाः 'त्रयी' इति नाम्ना प्रसिद्धाः सन्ति।

मन्त्राणां समूहः 'संहिता' इत्यनेन नाम्ना प्रथितः अस्ति। यज्ञानुष्ठानं दृष्टौ निधाय विभिन्नानाम् ऋत्विजां कृते संहितानां सङ्कलनं वेदव्यासः कृतवान्। मन्त्रसंहितानां सङ्कलनं चतुर्विधतया कृतं, तस्मात् संहिताः चतस्रः एव सन्ति। ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहिता चेति तिस्रः संहिताः। अत एव वेदाश्चत्वारः स्मृताः।

अतिव्यापकं विस्तृतं च अस्माकं वैदिकवाङ्मयम्। इदञ्च सर्वाङ्गपूर्णम्, यतः अत्र मानवजीवनस्य उद्देश्यभूताः धर्मार्थकाममोक्षाख्याः चत्वारः अपि पुरुषार्थाः विवेचिताः। इदं हि वाङ्मयं सुप्राचीनम्, समग्रपृथिवीव्यापि, परिमाणेन दुष्परिच्छेद्यम्, सौन्दर्यस्य उत्कर्षेण अनन्यतुल्यं च अस्ति। महत् मौलिकं पुरातनं च इदं वैदिकवाङ्मयम्। अतः अत्र अस्माकम् अभिनिवेशः सर्वथा खलु समर्थ्यते। न च केवलम् एतावन्मात्रं अन्यानि निमित्तानि तावद् वैदिकवाङ्मयस्य अध्ययने पण्डितानां जिज्ञासूनां छात्राणां च अभिरुचिं सञ्जनयन्ति।





## पाठगतप्रश्नाः

१८. वेदविषयकसामग्रीपदेन केषां बोधो भवति।

१९. साहित्यशब्दः सम्प्रति कस्मिन् अर्थे प्रयुज्यते।

२०. वेदविषये आपस्तम्बे किं प्रोक्तम्।

२१. मन्त्रशब्दस्य कः अर्थः।

२२. ब्राह्मणम् इत्येतस्य पदस्य कः अर्थः।

२३. वेदः स्वरूपभेदात् कतिविधः। के च ते विभागाः।

२४. का नाम ऋक्। कः च ऋग्वेदः।

२५. कः यजुर्वेदः।

२६. कः सामवेदः।

२७. वेदस्य त्रयीति नाम कथं जातम्।

२८. ऋत्विजां कृते संहितानां सङ्कलनं कः कृतवान्।

२९. संहितानां संख्याः कति।

३०. वैदिकवाङ्मये अस्माकम् अभिनिवेशः कथं भवति।

## १.४) वैदिकवाङ्मयस्य विभूतिः

वैदिकवाङ्मयानाम् अध्ययनं तावद् ऐतिहासिकानां परमप्रीतये कल्प्यते। वाङ्मयञ्च एतत् न केवलं विशालभारताभिजनानां जनानाम् अपि तु सहस्रवर्षेभ्यः पूर्वं स्थितानाम् इतिवृत्तम् अद्यावधि रक्षति, तद् विहाय अपि तिब्बत-जापान-चीन-कोरियाप्रभृतिषु देशेषु, लङ्काद्वीप-मलयद्वीपेषु, प्रतीच्येषु च निवसतां जनानां बौद्धिक-प्रवृत्तिषु अपि एतत् पुरा महान्तं प्रभावं विस्तारयति स्म। प्राज्यम् प्रभावम् अपातयत्। प्रतियुगं च अस्य वाङ्मयस्य प्रभावः परिलक्ष्यते।

प्राच्यां तामिल-तेलगु-मलयालम-कनाडीति-भाषाचतुर्वर्गं परित्यज्य प्रायः सकलभारतीयभाषाः वैदिकसंस्कृतेन अन्विताः भवन्ति। प्रतीच्यां प्रायः सकलयूरोपीयभाषाः वैदिकसंस्कृतेन अन्विता भवन्ति। निखिलायाम् अवन्यां धर्मप्रज्ञायाः समुद्भवः एतत्साहित्याश्रयेण यथा परिचीयते न तथा साहित्यान्तराणाम् आश्रयेण।

धर्मदर्शनयोः उभयोः विकासार्थं ज्ञानार्थञ्च वैदिकवाङ्मयस्य अध्ययनम् अपरिहार्यं भवति। मैकडोनलमहोदयेनोक्तम्- 'भारोपीयभाषाभाषिषु जनेषु भारतीयैरेव केवलं वैदिकधर्मो नाम महान् राष्ट्रियधर्मः, अस्य प्रतिपक्षी बौद्धधर्मो नाम महान् सार्वभौमधर्मश्च निरमायि।



उपज्ञासमृद्धं खलु वैदिकवाङ्मयम् इति तु अन्यस्मात् वाङ्मयाद् अस्य विशेषः। ईशवीयपूर्वचतुर्थशताब्द्यां भारतवर्षोपरि यवनानाम् आक्रमणं सञ्जातं ततः पूर्वमेव नूनम् आर्यसभ्यताप्रौढीताम् प्राप्तवती अस्माकं वैदिकवाङ्मयविभूतिः। न च ततःप्रभृति अन्येषां केषाञ्चित् देशानां आक्रमणेन अस्यां संसर्गदोषो जातः। मेकडोनलमहोदयेनोक्तम्-'सर्वेषामपि सनातनानां साहित्यानां मध्ये वैदिकवाङ्मयं मौलिकतामूल्येन सौन्दर्यगुणप्रकर्षेण च महत्त्वपूर्णपदम् अवाप। मानवप्रकृतिविकाशानुशीलनस्य प्रधानसाधनता तु वेदेषु अन्यवाङ्मयेभ्यो निःसंशयम् उत्कृष्टा एव'इति।

भारतीयसाहित्येतिवृत्तं तावत् वैदिककालः लौकिकसंस्कृतकालः च इति कालद्वयेन विभज्यते। पाणिनेः प्राक् प्रथमः कालः, परतश्च अपरः कालः गण्यते। आद्ये हि वेदाः, ब्राह्मणानि, आरण्यकग्रन्थाः, उपनिषदः, कल्पाश्चेति सारस्वतं समावेश्यते। अस्मिन् वैदिकवाङ्मये आर्यसभ्यतायाः विलक्षणं निरन्तरं च गमनं दृश्यते। प्रार्थना ,उपासना, मन्त्रजपः, जननीजठरे शरीरग्रहणम् इति एतस्माद् आरभ्य शरीरत्यागपर्यन्तम् आर्यजीवनं विशेषयन्ति ये षोडश संस्काराः, अरणीभ्यां हव्यवाहोः जननं, श्रौतसूत्राणि गृह्यसूत्राणि चेत्यादीनि बहूनि विध्यन्तराणि अपि ख्रीष्टजन्मपूर्वाद् अद्यावधि प्रवर्तन्ते।

न खलु तावता पर्याप्तम्, यूरोपीयसंस्कृतिदर्शनयोः यः विकाशः जातः तस्य ज्ञानार्थं वैदिकवाङ्मयस्य अध्ययनं नितरां कर्त्तव्यम्। तथा चोक्तं विण्टरनिट्जमहोदयेन-'यद्यस्माकं स्वसंस्कृतेरुपक्रमप्रक्रमाः बुभुत्सिताः, यदि चास्माकं पुराणतमभारोपीयसंस्कृतिः विविदिषिता तदा यत्र भारोपीयजनानां वर्षिष्ठं वाङ्मयं सुरक्षितं तदा भारतवर्षमेव खलु अस्माकं गतिरिति'इति।

भारतीयैः खलु विशेषेण अध्येतव्यः अयम् वाङ्मयेतिहासः। भारतीयानां प्राचीनवाङ्मयस्य संस्कृत्याः च श्रेष्ठं दर्पणं भवति वैदिकवाङ्मयम्। अपि च, आधुनिकीनां हिन्दी-पंजाबी-बंगला-उडिया-गुजराती-मराठी-राजस्थानी-बिहारी-आसामीप्रभृतीनाम् उत्तरभारते भाष्यमाणानां सर्वासां भाषाणां जननी इयं भाषा। दक्षिणभारतेऽपि या तामिल-तेलगु-मलयालम-कन्नडदि आधुनिक्यः भाषाः सन्ति ता अपि वैदिकवाङ्मयेन भृशं प्रभाविताः। तथाहि सूत्रे यथा मणयः ग्रथिताः सन्ति तथैव वैदिकवाङ्मये अस्मिन् भारतीयाः सर्वा भाषाः ग्रथिताः सन्ति। न हि वैदिकवाङ्मयस्य ज्ञानेन विना आधुनिकीनां भाषाणां सम्यक् ज्ञानं सम्भवम्।

'कोऽहम्। कुत आयातः। कथं हि भवेत् सुखप्राप्तिः। दुःखनिराकरणं वा कथं स्यात्।' इति मानवानाम् अध्यात्मविषयिणी सनातनी जिज्ञासा वैदिकवाङ्मये आलोचिता। अतः वैदिकवाङ्मयस्य इतिहासः संक्षेपेण उक्तः।



## पाठगतप्रश्नाः

३१. वैदिकवाङ्मयस्य अध्ययनम् अपरिहार्यं कथम्।

३२. वैदिकसाहित्येतिहासकालः कतिधा विभक्तः।

३३. वैदिकवाङ्मयेन काः भाषाः भृशं प्रभाविताः।



३४. वैदिकवाङ्मये कीदृशी जिज्ञासा आलोचिता।

## १.५) वेदशब्दस्यार्थः

'विद्यन्ते धर्मादयः पुरुषार्थाः यैस्ते वेदाः' इति बह्वृक्प्रातिशाख्यम्। किञ्च वेदानां स्वरूपविषये मनसि जिज्ञासा भवति चेत् तदा तद्विषयकं ज्ञानं वेदेभ्य एव लब्धुं शक्यमस्ति। सायणस्तु 'अपौरुषेयवाक्यं वेद' इत्याह। इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकम् उपायं यो वेदयति सः 'वेदः' इति भाष्यभूमिकायां सायणेन उक्तम्। तस्य प्रमाणमपि तत्रैवोक्तम्-

**"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥"इति।**

आम्नायः, आगमः, श्रुतिः, वेदः, छन्दः इति सर्वे शब्दाः वेदशब्दस्य पर्यायाः सन्ति। ज्ञानार्थकः वेदः इत्येतत् पदम् विद्-धातोः घञ्प्रत्यये कृते निष्पद्यते। वैयाकरणसिद्धान्तकौमुद्यां चुरादिप्रकरणे तु चतुर्षु अर्थेषु विद्-धातोः प्रयोगः अस्ति। तद्यथा-

**"सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।**
**विन्दते विन्दति प्राप्तौ श्यन्लुक्श्यनम्शेष्विदं क्रमात्॥"इति।**

उक्तार्थानां वाचकात् विद्-धातोः वेदः इत्येतस्य पदस्य निष्पत्तिः भवति। सत्तार्थकात् विद्-धातोः घञ्प्रत्यये निष्पन्नस्य 'वेद' इत्येतस्य पदस्य अर्थो भवति- 'विद्यते सत्तां गृह्णाति वस्तु अनेन इति वेदः।' ज्ञानार्थकात् विद्-धातोः घञ्-प्रत्ययेन निष्पन्नस्य 'वेद' इत्येतस्य पदस्य अर्थः अस्ति-'विदन्त्येभिः धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वा इति वेदः।' विचारार्थकात् विद्-धातोः अच्-प्रत्ययेन निष्पन्नस्य वेदशब्दस्य अर्थस्तु -'विन्ते विचारयति धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वेति वेद' इति। लाभार्थकात् विद्-धातोः घञ्-प्रत्ययेन निष्पन्नस्य 'वेद' इत्यस्य अर्थस्तु 'विदन्ते स्वरूपं लभन्ते वस्तु अनेनेति वेदः।' ऋग्वेदभाष्यभूमिकायाम् तु -'विदन्ति जानन्ति, विद्यते भवन्ति, विन्ते विचारयति, विदन्ते लभन्ते सर्वे मनुष्याः सत्त्वविद्यां यैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः'इति। आपस्तम्बानुसारेण- 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'इति।

वेदस्य स्वरूपविषये प्रतीच्या विपश्चितो वेदान् ऋषिप्रणीतान् मन्यन्ते। तेषां हि आधिभौतिकदृष्टिः तान् शब्दराशीन् सामान्यग्रन्थम् एव अवगच्छति। फलतः यः ऋषिः येन मन्त्रविशेषेण सम्बद्धोऽस्ति स तस्य कर्ता। ऋग्वेदे अपि कर्तृत्वपदस्य स्पष्टतया उल्लेखो लभ्यते- 'इदं ब्रह्मक्रियमाणं नवीयः'(ऋ० ७।३५।१४), 'ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः' (ऋ० ७।३७।४), 'ब्रह्मेन्द्राय वज्रिणे अकारि'(ऋ० ७।९७।९) प्रभृतिमन्त्रेषु 'ऋषिप्रणीता एव वेदमन्त्राः सन्ति' अस्य कथनस्योल्लेखः स्पष्टतया प्रतिभाति। भाषाशास्त्रदृष्ट्या मण्डिताः, आध्यात्मिकभावनया विहीनाः कतिपये आधुनिकाः भारतीयपण्डिताः अपि 'ऋषय एव वैदिकमन्त्राणां कर्त्तारः सन्ति' इति मन्यन्ते। किञ्च वेदमर्मज्ञाः भारतीयाः मेधाविनः तान् न ऋषिभिः प्रणीतान् मन्यन्ते। तेषां मतमिदं यद् ऋषयो वैदिकमन्त्राणां द्रष्टारः



सन्ति न च कर्त्तारः। असङ्ख्येयवैदिकमन्त्राणाम् अनुशीलनेन प्रतीतम् भवति यद् अलौकिकसामर्थ्यशालिनः ऋषयो दिव्यया प्रभया मन्त्राणां दर्शनं लब्धवन्तः (द्रष्टव्यः- ऋ० ७।३३,७। १३ मन्त्राः)। कतिपयेषु मन्त्रेषु मुनिवसिष्ठेन प्रदत्तस्य अलौकिकज्ञानस्य उल्लेखः अस्ति (ऋ० ७।८७।४, ७।८८।४)। ऋग्वेदे अनेकत्र वाचः भव्या स्तुतिः दृग्गोचरीभवति। मन्त्राणां प्रकाशः तद्बुद्धौ आविर्भूतः। तद्यथा-

**यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्। ऋ० १०।७१।३**

ऋषिदृष्टप्रार्थनायाः अलौकिकफलस्य निर्देशः अपि वेदे एव उपलभ्यते (ऋ० ३।५३।१२, ७। ३३।३) मन्त्रेष्वेव वैदिकवाण्याः नित्यतायाः प्रमाणं प्राप्यते, तेषु प्रमाणेषु 'वाचा विरूपनित्यता' (ऋ० ८। ७५।६) मुख्योऽस्ति 'ऋषि' इत्येतस्य पदस्य व्युत्पत्तिलभ्यः (ऋषति पश्यति इति ऋषिः) अर्थः एव मन्त्रद्रष्टा इत्यस्ति। एषः ऋषिशब्दः 'इगुपधात् कित्' इत्यनेन औणादिकेन सूत्रेण इनि प्रत्यये कृते निष्पद्यते। निरुक्ते च विद्यमानात् 'तद्येनास्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्....' इत्यादिकाः पङ्क्तयः ऋषेः मन्त्रद्रष्टृत्वम् उपपादयन्ति। अत ऋषयः मन्त्राणां द्रष्टारः सन्ति न तु कर्त्तारः।

'ऋषिर्मन्त्रद्रष्टा। गत्यर्थत्वात् ऋषेर्ज्ञानार्थत्वात् मन्त्रं दृष्टवन्तः ऋषयः।' ('श्वेतवनवासिरचितवृत्तौ' उणादिसूत्रम् ४।१२९ द्रष्टव्यम्) एवञ्च निरुक्तेऽपि 'तद्येनांस्तपस्यमानां ब्राह्मस्वयम्भ्वभ्यानर्षत् त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते ऋषिदर्शनात्। मन्त्रान् ददर्श इत्यौपमन्यवः।'

न्यायवैशेषिकयोः मते वेदाः पौरुषेयाः नित्याश्च सन्ति। परन्तु सांख्य-वेदान्त-मीमांसानाञ्च मतेन ते अपौरुषेयाः सन्ति। इमानि दर्शनानि तेषां नित्यत्वं स्वीकुर्वन्ति। स्मृतिपुराणेषु च वेदसमबन्धिनी तादृशी एव भावना प्रायेण लभ्यते, यादृशी मीमांसायां प्रकाशिता अस्ति। मनुः वेदान् नित्यान् अपौरुषेयान् च मन्यते। तेनोक्तम्-

**'पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।**
**अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥' इति**

विद्-धातोः घञ्-प्रत्यये वेदशब्दो निष्पद्यते। सामान्यतो विद्-धातुरत्र ज्ञानार्थक इति स्वीकृत्य विद्यते ज्ञायते इति वेदः इत्येवं भावे वेदशब्दस्य व्युत्पत्तिं हृदि कृत्वा वेदशब्दो ज्ञानवाची इति व्यवहारो भवति। किन्तु वेदशब्दः ग्रन्थवाचकः चेद् विद्यते ज्ञायते अनेन इति वेदः इत्येवं करणे वेदशब्दस्य व्युत्पत्तिर्विज्ञेया। येन ग्रन्थेन ज्ञायते ज्ञानसाधनीभूतो वा यो ग्रन्थः स वेदः। न च यत्किञ्चित् ज्ञानप्रतिपादको ग्रन्थो वेदः, किन्तु धर्मार्थकाममोक्षाणां प्राप्तिविषये अलौकिकस्य ज्ञानराशेः प्रतिपादको ग्रन्थ एव वेदः। तेन अतीन्द्रियज्ञानप्रतिपादके ग्रन्थे वेदशब्दो रूढः। विद्धातोः सन्ति चत्वारः अर्थाः। तथा चास्ति विद्-धातोः चातुरर्थिकत्वविषये अपरा एका कारिका-

**वेत्ति वेद विद ज्ञाने विन्ते विद विचारणे।**
**विद्यते विद सत्तायां लाभे विन्दति विन्दते॥ इति**

ज्ञानार्थकाद् 'विद ज्ञाने' इति अदादिगणीयाद् विद्धातोः विदन्ति जानन्ति एभिः धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वा इति व्युत्पत्त्या वेदशब्दो निष्पाद्यते। विचारार्थकाद् 'विद विचारणे' इति रुधादिकाद्



विद्धातोः विन्ते विचारयति धर्मादिकमनेनेति व्युत्पत्त्या वेदशब्दो निष्पाद्यते। सत्तार्थकाद् 'विद सत्तायाम्' इति दिवादिकाद् विद्धातोः विद्यते सत्तावद् भवति वस्तु अनेनेति व्युत्पत्त्या वेदशब्दोत्पत्तिः। लाभार्थकाद् 'विदलृ लाभे' इति तुदादिकाद् विद्धातोः विन्दते विन्दति वा स्वरूपं ब्रह्मणः अनेनेति व्युत्पत्त्या वेदशब्दो निष्पाद्यते। केचन तु 'विद चेतानाख्याननिवासेषु' इति चुरादिगणीयादपि धातोः वेदशब्दं निष्पादयन्ति। तेषां नये अर्थसंङ्गतिरेवम् – १.चेत्यते ज्ञायते धर्मब्रह्मतत्त्वं येन स इति २. आख्यायते महतां चरितज्ञातं येन स इति ३. निवसति सर्वदेवगणः पाठकशरीरे येनेति। मनुना उक्तञ्चातः वेदोऽखिलधर्ममूलं स्मृतिशीले च तद्विदाम् इति। सायणेनापि उक्तम् - 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद' इति।

## १.६) वेदशब्दस्य पर्यायाः

पुरा श्रवणपरम्परया गुरुशिष्यैः वेदज्ञानं विधृतमासीत्। अतो वेदस्य श्रुतिरिति अभिधानम्। तदुक्तं गुरुमुखोच्चारणानुच्चारणं वेद इति।

ऋक्सामयजुर्वेदास्त्रयो भेदा वेदस्येति त्रयीति समाख्यान्तरम्। यद्यपि अथर्ववेदः अपि वेदः इति स्वीक्रियते तथापि सामादित्रयान्तर्भूतत्वात् तथा यागे च प्रयोगविशेषाभावात् तस्य पृथगुल्लेखो न कृतः। किन्तु वेदत्वमस्य अक्षतम्। तथा चाम्नातं बृहदारण्यकोपनिषदि - 'अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस' इति। प्रधानयागसम्बन्धाभावेऽपि अभिचारादियागे शान्तिपौष्टिकादिकर्मसु च अथर्वमन्त्राः प्रयुज्यन्ते। पुरुषार्थेषु मोक्षस्यैव मौख्याद् अथर्ववेदे च मोक्षोपायाम्नायात् न केवलं वेदत्वमस्य अस्ति, अपि तु अयमात्मा ब्रह्मेति महावाक्यसत्त्वात्माण्डूक्यादीनाम् आत्मज्ञानोपदेशिनीनाम् उपनिषदां भारेण गुरोरस्य गुरुत्वम् इतरवेदान् अधरीकरोति इति वैदान्तिकानां मतम्।

एतत्सर्वं विहाय आम्नायः आगमः अनुश्रवः छन्दः इत्येतेऽपि वेदपर्यायाः। आ सम्यक् म्नाय्यते अभ्यस्यते इति आम्नायो वेदः। पुरा अध्येतारः गुरुमुखोच्चारणानुच्चारणद्वारा श्रवणेन कण्ठस्थीकरणेन च वेदाभ्यासं कृतवन्तः। अत एव वेदः आम्नाय इति कथ्यते।

वेदस्य अपरं नाम आगमो निगमो वा। तथा हि वेदार्थे आगमनिगमशब्दयोः प्रयोगः बहुत्र दृश्यते। उक्तञ्च पतञ्जलिना रक्षोहागमलघ्वसन्देहाः प्रयोजनम् इति। श्रीधरस्वामिना भागवतव्याख्यायामुक्तं निगमो वेदः, स एव कल्पतरुः सर्वपुरुषार्थोपायत्वादिति। स्वाध्यायोऽपि वेदपर्यायः। तथा हि आम्नातं स्वाध्यायोऽध्येतव्य इति। छन्दांसि छादनात् इति व्युत्पत्त्या छन्दस्-शब्दो वेदमन्त्रवाचकः।



### पाठगतप्रश्नाः

३५. बह्वृक्प्रातिशाख्ये किमुच्यते।

३६. सायणेन भाष्यभूमिकायां वेदशब्दविषये किम् आह।



३७. न्यायवैशेषिकमते वेदः कीदृशः।

३८. केषां मते वेदः अपौरुषेयः।

३९. विद्-धातोः चत्वारः अर्थाः के।

४०. विचारार्थकविद्-धातोः किं रूपम्।

४१. मनुना वेदविषये किमुच्यते।

४२. सायणमते वेदस्य लक्षणं किम्।

४३. भाष्यभूमिकायां वेदस्य लक्षणं किम् अस्ति।

४४. वेदशब्दस्य पर्यायाः शब्दाः के।

४५. वेदशब्दः कस्माद्धातोः आयाति।

४६. वेदशब्दः कथं निष्पन्नः।

४७. वैयाकरणसिद्धान्तकौमुद्यां चुरादिप्रकरणे केषु अर्थेषु विद्-धातोः प्रयोगोऽस्ति। के च ते अर्थाः।

४८. ज्ञानार्थकात् विद्-धातोः घञ्-प्रत्ययेन निष्पन्नस्य 'वेद' इत्येतत्पदस्य अर्थः कः।

४९. विचारार्थकात् विद्-धातोः अच्-प्रत्ययेन निष्पन्नस्य वेदशब्दस्य अर्थः कः।

५०. वेदः ऋषिणा न प्रणीतः इति के मन्यन्ते।

५१. ऋषिशब्दस्य कः अर्थः।

५२. ऋषिशब्दः कथं निष्पन्नः।

५३. न्यायवैशेषिकयोः मते वेदाः कीदृशाः।

५४. मनोः मते वेदाः कीदृशाः।

## १.७) वेदः पौरुषेयः अपौरुषेयः वेति विषये सामान्यविचारः

**मीमासंकसांख्यवैदान्तिकनैयायिकमतम्** - वेदाः अपौरुषेयाः इति वेदान्तिनः स्वीकुर्वन्ति। मीमांसका अपि वेदानाम् अपौरुषेयत्वं स्वीकुर्वन्ति। अतः कोऽपि मर्त्यधर्मा न वेदकर्ता। नापि ईश्वरः तत्कारकः। स स्मर्ता एव। अत आम्नातम् अस्य महतो भूतस्य निःश्वसितं यत् एतत् ऋग्वेदो यजुर्वेदः सामवेद इति। भ्रम-प्रमादादि-पुरुषदोषविरहितत्वाद् वेदा अपौरुषेयाः। भ्रमः प्रमादः विप्रलिप्सा करणापाटवं चेति पुरुषदोषाः। प्रतिकल्पं परमेश्वरो वेदं स्मारं स्मारं ब्रह्मणे उपदिशति।

तदुक्तं पराशरसंहितायाम्-

**"न कश्चिद् वेदकर्तास्ति वेदस्मर्ता चतुर्मुखः।**
**ब्रह्माद्या ऋषयः सर्वे स्मारका न तु कारकाः॥" इति**

न च ऋषयोऽपि वेदकर्तारः। ते हि तपस्यया वेदमन्त्रान् दृष्ट्वा लोकानुग्रहबुद्ध्या लोकेषु प्रचारयन्ति। तदुक्तम्-



**"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।**
**लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवा॥" इति**

तेषाम् अयम् अभिप्रायः वर्तते यत् वेदा अनादयः सन्ति। तेषामुत्पत्तिः कदा अभूत्, केन प्रकारेण अभूत् इति न कश्चित् जानाति। अनादित्वादेव वेदानाम् अनन्तत्वमपि सुतरां सिद्धम्। अनादयो वेदा एव अनाद्यनन्तं ब्रह्म प्रतिपादयन्ति। ब्रह्मविषये पारलौकिकानां विषयाणां वा विषये, मोक्षादिकानां वेदा एव प्रमाणम्। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद् ब्रह्म इति श्रुतिरेव सृष्टेः कारणरूपेण प्रतिपादनं करोति। शास्त्रयोनित्वादिति ब्रह्मसूत्रमपि ब्रह्मणि ब्रह्मशब्दवाच्यभूता वेदा एव प्रमाणमिति प्रतिपादयन्ति। वेदस्य अपौरुषेयतां वदद्भिः अभिधीयते यत् सृष्टेरादौ भगवान् पूर्वकल्पानुपूर्वीकं वेदं स्मारं स्मारं ब्रह्मणे उपदिशति। मीमांसका एवं प्रत्यवतिष्ठन्ते यत् शब्दो नित्यः। नित्यः शब्द उच्चारणद्वारा केवलम् अभिव्यज्यते न तु निर्मीयते। वेदानामपि शब्दात्मकत्वादेव नित्यत्वम्। नित्यत्वाच्च अपौरुषेयत्वम्।

सांख्या वैदान्तिकाश्च वेदस्य कूटस्थनित्यताम् अनङ्गीकुर्वन्तोऽपि प्रवाहनित्यतां स्वीकुर्वन्ति। नैयायिकास्तु विद्वांसः स्वीकुर्वन्ति यत् वेदास्तु पौरुषेयाः सन्ति, वेदवाक्यानां महाभारतादिवाक्यवत् पुरुषबुद्धिपूर्वकत्वम् अस्ति। न च अस्मदादिः वेदकर्ता। भ्रम-प्रमादादिराहित्याद् वेदानां तद्रहित ईश्वर एव वेदकर्ता इति पौरुषेय एव वेदः। ईश्वरप्रणीतत्वाद् एव वेदस्य प्रामाण्यम्। शब्दानाम् अनित्यत्वाद् वेदानामपि अनित्यत्वम्। एवञ्च वेदानां कर्ता सर्वज्ञः ईश्वर एव। सर्वज्ञ एव ईश्वरः सकलप्रकारकज्ञानविज्ञानसम्पन्नं वेदमाविर्भूय ब्रह्मणे प्रददाति। तस्य निःश्वसितं वेदाः इति वाक्यस्याभिप्रायो वर्तते, यत् येन प्रकारेण जीवः विना प्रयासं निःश्वसितानि करोति। तस्य कार्यभूतानि एव निःश्वसितानि भवन्ति। तेनैव प्रकारेण विना प्रयासमेव वेदान् जनयति सर्वज्ञत्वात्।

**अर्वाचीनमतम्** - अर्वाचीनाः वैदेशिकप्रभावप्रभाविताःविचारकाः प्रतिपादयन्ति यत् वेदाः ऋषिभिः कृताः सन्ति। ते प्रतिपादयन्ति यत् यस्य ऋषेः सम्बन्धः येन मन्त्रेण सह अस्ति स एव ऋषिः तस्य मन्त्रस्य प्रणेता अस्ति। 'इदं ब्रह्मक्रियमाणं नवीयः', 'ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः', 'ब्रह्मेन्द्राय वज्रिणे अकारि' इत्यादिभिः वाक्यैः प्रतीयते यत् ऋषिभिः कृता एव वेदाः सन्ति इति।

किन्तु भारतीयानां मनीषिणाम् अभिप्रायो वर्तते यत् ऋषयो मन्त्रकर्तारः न सन्ति, अपि तु ते अपौरुषेयाणां वेदमन्त्राणां साक्षात् कर्तारः सन्ति। मन्त्रद्रष्टृत्वरूपमेव तेषाम् ऋषित्वम् अस्ति। वेदाश्च अपौरुषेयत्वादेव पौरुषेयासु कृतिषु जायमानैः भ्रमप्रमादविप्रलिप्साकरणापाटवरूपैः दोषैः विरहिताः सन्ति।

## १.८) वेदलक्षणम्

आपस्तम्बेन वेदलक्षणमुदीरितं मन्त्रब्राह्मणयोर्वेदनामधेयम् इति। सायणेनापि ऋग्वेदभाष्योपद्घाते वेदलक्षणमुक्तं मन्त्रब्राह्मणात्मकशब्दराशिर्वेद इति। मन्त्रो मननात्। यस्मात् कर्म-तदुपकरणदेवतादेः ज्ञानं भवति स मन्त्रः। मन्त्रेभ्यो हि आध्यात्मिकाधिदैविकाधियाज्ञिकविषयको बोधः सञ्जायते। अतः मन्त्राणां



मन्त्रत्वम्। अथवा येषां मननेन आपदः त्राणम् आप्नोति मनुष्यः ते मन्त्राः। चतुर्वेदानां संहिताः एव मन्त्रपदवाच्याः। मन्त्र एव संहिता। वैदिकी संहिता छन्दोबद्धपदरचनात्मिका भवति प्रायः। ब्राह्मणग्रन्थास्तु सर्वथा गद्यात्मका भवन्ति। इयञ्च वैदिकी संहिता एका अखण्डा च। श्रूयते यत् कृष्णद्वैपायनो व्यास एव वेदं चतुर्धा विभज्य ऋक्संहिता सामसंहिता यजुःसंहिता अथर्वसंहिता चेति नाम कृतवान्।

ऋच्यते स्तूयते यया सा ऋक्। जैमिनिना ऋग्लक्षणं कृतं 'तेषामृक् यत्र अर्थवशेन पादव्यवस्था' इति। ऋग्वेद एव सर्वप्रथमम् आविरासीत्। अत एव ऋङ्मन्त्राणाम् अभ्यर्हितत्वम्। वेदान्तरेण यद् विधीयते तत् शिथिलम्। ऋग्वेदेन तु यद्विधीयते तद् दृढं भवति। तथा हि आम्नातं तैत्तिरीयसंहितायां 'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्, यदृचा तद् दृढमि'ति। सामलक्षणमुक्तं 'गीतिषु सामाख्या' इति। गीतिपरा एव साममन्त्राः। यजुर्लक्षणमुक्तं 'शेषे यजुःशब्द' इति। यजुर्वेदे हि सर्वविधानां यज्ञादीनां वर्णनाः वर्तन्ते। 'अनियताक्षरावसानो यजुः' इति केषाञ्चिन्मते यजुर्लक्षणम्। यत्र अक्षराणां संख्या नियता निश्चिता वा नास्ति तद् यजुः। यजुर्मन्त्रा हि गद्यात्मका भवन्ति। अत एव ऋक्-सामविलक्षणं गद्यात्मकमन्त्राणाम् अभिधानमेव यजुः। शुक्लयजुर्वेदः कृष्णयजुर्वेदश्चेति यजुर्वेदस्य भागद्वयम्। शुक्लयजुर्वेदे हि दर्शपूर्णमासादियागार्थं मन्त्राः संकलिता वर्तन्ते। कृष्णे तु मन्त्रब्राह्मणयोरेकत्र मिश्रणं दृश्यते। अथर्वमन्त्राणां नास्ति कोऽपि लक्षणविशेषः। वेदान्तमन्त्रा अत्र मुख्यतः सन्निविष्टाः। अभिचारादिकर्मसु अथर्ववेदीयमन्त्राणामस्ति उपयोगः।

पुरा महर्षिः वैशम्पायनः ब्रह्महत्यापापेन पातकी सन् तच्छिष्यान् आहूय कस्तेषु गुरोः पापक्षालनाय तपश्चरितुमुत्सहते। याज्ञवल्क्यस्तदा आह - 'भगवन्, हीनविद्यैः तैः इतरैः शिष्यैः तपसा पापक्षालनं दुःशकम्। अहं तु एक एव प्रभवामि तपसा अघस्ते हन्तुम्।' शिष्यस्याविनयेन क्रुद्धो गुरुः दत्तविद्याप्रत्यर्पणपूर्वकं स्वाश्रमत्यागार्थं तमादिदेश। याज्ञवल्क्योऽपि सपद्येव अधीतां वेदविद्याम् उद्गिरति स्म। तदा गुरोराज्ञया अन्ये शिष्याः तित्तिरिपक्षिरूपेण उद्गीर्णां वेदविद्यां स्वीचक्रुः। अत एव तैः प्रचारिता सा वेदसंहिता तैत्तिरीयसंहितेति संज्ञिता। याज्ञवल्क्यस्तदा सूर्याद् वेदविद्याम् आप्तुकामः सवितृदेवं स्तवेन तोषयामास। सूर्योदेवोऽपि वाजिरूपेण याज्ञवल्क्याय उपादिदेश। वाजो नाम सूर्यरश्मिः, सनिशब्दो धनवाची। सूर्यकिरणाद् वेदधनमिदं लब्धमिति वाजसनेयसंहितेति तदभिधानं लोकेषु प्रसिद्धम्। उद्गीर्णस्य वस्तुनः तामसिकत्वात् तैत्तिरीयसंहिता कृष्णयजुर्वेदाभिधया अभिहिता। सूर्यसकाशात् या वेदविद्या अधिगता सा तु सात्त्विकी इति तस्याः शुक्लत्वम्।

वेदवृक्षो हि बहुशाखासमन्वितः। गुरुशिष्यपरम्परायां वेदाध्ययने स्वराद्युच्चारणशैलीभेदः परिलक्ष्यते। तत एव वेदशाखानां समुत्पत्तिः। तथा हि ऋग्वेदे चतुर्विंशतिः ऋक्शाखाः समुपलब्धाः- शाकल-मुद्गल-गालव-वास्कलादयः। तन्मध्ये शाकल-वास्कलशाखे सम्प्रति समुपलभ्येते। जैमिनि-सुमन्तु-सुकर्मप्रभृतयः शाखाः सामवेदे प्रसिद्धाः। त्वरक-कठादयः कृष्णे। जाबालि-काण्व-माध्यन्दिनादिशाखाः शुक्लयजुर्वेदे प्रसिद्धाः। अथर्ववेदस्य पैप्पलाद-प्रभृतिशाखाः प्रसिद्धाः। वस्तुतः कस्य वेदस्य कति शाखा इति विचारणा तु अतीव कठिना। महाभाष्यपस्पशाह्निके भाष्यकृता पतञ्जलिना उक्तम् - 'एकविंशतिधा वा, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेद' इति।





अत शाखाशब्देन न संहिताभेदो बुध्यते। किन्तु अध्ययनभेद एव। तदुक्तं वेदविदा सत्यव्रतसामाश्रमिणा 'अध्ययनभेद एव शाखाभेदनिदानं न तु ग्रन्थभेद' इति। एकैकवेदस्य अनेकशाखात्वेऽपि तात्त्विकभेदाभावात् इति।

तत एवं क्रमेणैव समस्तमन्त्रपदानाम् उच्चारणं भवति। स मालापाठः। लेखापाठे हि क्वचित् यथाक्रमं क्वचिद्वा व्युत्क्रमेण क्वचित् पदद्वयस्य क्वचिद्वा पदत्रयस्य एकत्र पाठो भवति। जटापाठस्यैव आनुरूपं दृश्यते शिखापाठे। अत्र मध्ये मध्ये तृतीये षष्ठे नवमे वा चरणे त्रीणि त्रीणि पदानि वर्तन्ते। ध्वजपाठे हि प्रथमतः क्रमपाठवत् षट्पदानि उच्चार्य व्युत्क्रमेण पुनस्तानि एव षट्पदानि उच्चार्यन्ते। यत्र क्रमपाठस्य द्वे द्वे पदे यथाक्रमं त्रिः त्रिः उच्चार्येते, द्वितीयवारे तु व्युत्क्रमेण पाठो भवति, स दण्डपाठः। रथपाठे हि क्रमपाठस्य तद्विपरीतक्रमस्य च सङ्गमो दृश्यते। घनपाठो हि नितरां विलक्षणः क्लिष्टश्च। तत्र अनुलोम-विलोमक्रमेण पदानाम् असकृदावृत्तिः जायते। एते एकादश पाठाः निर्भुज-प्रतृणभेदेन द्विधा। मूलस्याविकृतः पाठो निर्भुजः। संहितापाठ एव निर्भुजः पाठः। तं वर्जयित्वा अन्ये विकृतपाठाः प्रतृणा इत्युच्यते।

वेदस्य विविधा विभागा अग्रे प्रदर्शयिष्यन्ते।



## पाठगतप्रश्नाः

५५. न्यायमते वेदः पौरुषेयो न वा।

५६. मीमांसामते वेदः पौरुषेयः अपौरुषेयो वा।

५७. वेदस्य प्रवाहनित्यताम् के अङ्गीकुर्वन्ति।

५८. कः निर्भुजपाठः।

५९. शुक्लयजुर्वेदे काः शाखाः प्रसिद्धाः।

६०. वाजः नाम किम्। सनिशब्दार्थश्च कः।

६१. ऋक्शब्दस्य का व्युत्पत्तिः।

६२. कस्मिन् वेदे दर्शपूर्णमासादियागार्थं मन्त्राः संकलिता वर्तन्ते।

६३. अभिचारादिकर्मसु कीदृशमन्त्राणाम् उपयोगः।

६४. जैमिनिना ऋग्लक्षणं किम् कृतम्।

## १.९) अथ संहिता

वेदलक्षणम् आपस्तम्भेन सूचितं **मन्त्रब्राह्मणयोः वेदनामधेयम्** इति। यत्र मन्त्राः पुनश्च तेषां प्रयोगनिर्धारकाणि ब्राह्मणानि च विद्यन्ते स भवति वेदः। उपोद्घातभाष्ये सायणाचार्येणापि अनुरूपं लक्षणम् उक्तम् - '**मन्त्रब्राह्मणात्मकशब्दराशिर्वेदः**' इति। मन्त्रसंहिताभागौ पर्यायौ, सन्निकर्षेण धारयति इति

सम्यक् धृताः मन्त्राः यस्यामिति वा विग्रहे सम्पूर्वकात् डुधाञ् धारणपोषणयोः इति धातोः क्तप्रत्यये स्त्रियां टापि च निष्पद्यते संहिताशब्दः। मन्त्राः यत्र सन्ति सः भागः संहिताभागः इति निष्कर्षः।

**शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदान्ते शाखिनोऽभवन्** इति भागवतवचनात् गुरु-शिष्य-प्रशिष्य-परम्परया वेदस्य रक्षणाद् देशकालव्यक्तिभेदे वेदपाठस्य वैभिन्नत्वात् नाना शाखाः अन्वभवन्। कस्य वेदस्य कति शाखाः इति विषये महाभाष्यकारपतञ्जलिवचनं सुप्रसिद्धम् -

**"एकविंशतिधा बाहवृच्यम् सहस्रवर्त्मा सामवेदः।**

**एकशतमध्वर्युशाखाः नवधाथर्वणो मतः।" इति।**

ऋग्वेदस्य एकविंशतिः शाखाः सन्ति, शाखाविषये तु विदुषां मतभेदः अस्त्येव। वाक्यपदीयकारेण भर्तृहरिणा तु अस्य पञ्चदश शाखाः प्रतिपादिताः। ऋक्संहितायाः प्रसिद्धाः पञ्च शाखाः सन्ति - शाकलः वाष्कलः आश्वलायनः, शांखायनः माण्डूकायनः इति। सामवेदस्य सहस्रं शाखाः आसन् परन्तु इदानीन्तनकाले तस्य केवलं तिस्रः शाखाः प्राप्यन्ते। कौथुमीया रामायणीया जैमिनीया इति।

यजुर्वेदस्य शतं शाखाः आसन् । कृष्णयजुर्वेदस्य प्रसिद्धाः शाखाः सन्ति तैत्तिरीयः मैत्रायणी, कठः, कपिष्ठलः। शुक्लयजुर्वेदस्य च वाजसनेयी, माध्यन्दिनी, काण्वः एते शाखाः प्रसिद्धाः।

अथर्ववेदस्य नव शाखाः आसन् । अधुना द्वे शाखे प्राप्येते शौनकः, पिप्पलादश्च।

## १.१०) अथ ब्राह्मणम्

ब्रह्मन् इति शब्दस्य विविधेषु अर्थेषु ब्राह्मणः अन्यतमः। तस्माद् वेदमधीते तद्वेद वा इति विग्रहे तदधीते तद्वेद इति सूत्रेण ब्रह्मन् शब्दात् अण्प्रत्यये ब्राह्मणशब्दस्य निष्पत्तिः । अथवा ब्रह्म एव ब्रह्मणः। शतपथब्राह्मणे प्राप्यते "**ब्रह्म वै ब्राह्मणः**" इति । दयानन्दसरस्वतीमतेन पुरोहिताः ब्राह्मणाः, तैर्निष्पाद्ययागादिविधिः यत्रोपदिष्टः तद् ब्राह्मणम्। उक्तञ्च तेन – "**चतुर्वेदविद्भिर्ब्रह्मभिर्ब्राह्मणैर्महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानि**" इति। जैमिनिना तु "**शेषे ब्राह्मणशब्दः**" इत्येव ब्राह्मणलक्षणम् उदीरितम्। मन्त्रांशं विहाय वेदस्य अवशिष्टः भागः ब्राह्मणमिति। आपस्तम्भेन सूत्रितं **कर्मचोदना ब्राह्मणानि** इति। यागादिक्रियाविधिः यत्र वर्णितः तद् ब्राह्मणम्। ब्राह्मणेषु वर्ण्यमाणाः विषयास्तावत् षट् - विधिः, अर्थवादः, निन्दा, प्रशंसा, पुराकल्पः, पराकृतिश्चेति।

ऋग्वेदस्य ऐतरेयं कौषीतकि शांख्यायनं वा द्वे ब्राह्मणे । सामवेदस्य ब्राह्मणेषु प्रसिद्धाः भवन्ति पञ्चविंश षड्विंश छान्दोग्यं, जैमिनीयं तलवकारो वा सामविधानम् , आर्षेयः, वंशः, देवताध्यायनम् इति। शुक्लयजुर्वेदस्य शतपथब्राह्मणम्, कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणम् इति। अथर्ववेदस्य गोपथनामकमेकमेव ब्राह्मणमस्ति।



## १.११) अथ आरण्यकम्

आरण्यकानि भवन्ति ब्राह्मणानां परिशिष्टभूतानि। आरण्यके अध्यात्मतत्त्वानि आलोचितानि। अपि च निष्कामतया यागादिकर्माणि तत्र उपदिष्टम्। आरण्ये अनुच्यमानात् आरण्यकमिति तस्य अन्वर्थं नाम अस्ति। तथाहि अरण्यशब्दात् वुञ्प्रत्यये आरण्यकम् इति निष्पद्यते।

आरण्यकविषये भाष्यकारः सायणोऽभाणीत् -

**"अरण्याध्ययनादेतदारण्यकमितीर्यते।**

**अरण्ये तदधीयेतेत्येवं वाक्यं प्रवक्ष्यते।"**

ऋग्वेदस्य आरण्यकद्वयं प्राप्यते ऐतरेयं सांख्यायनञ्च। सामवेदस्य आरण्यकं भवति छान्दोग्यारण्यकम्। शुक्लयजुर्वेदस्यारण्यकमस्ति वृहदारण्यकम्। कृष्णयजुर्वेदस्य तैत्तिरीयं मैत्रायणीयञ्चेति आरण्यकद्वयम्, अथर्ववेदस्य आरण्यकम् नास्ति।

## १.१२) अथोपनिषत्

आरण्यकस्यापि सारभूता वर्तते उपनिषत्। आरण्यके आरब्धा अध्यात्मतत्त्वालोचना उपनिषत्सु एव परां स्फूर्तिं लभमाना परिसमाप्ता। वेदस्य अन्तिमत्वात् लक्ष्यत्वात् वा इयम् उपनिषद् वेदान्त इत्यपि कथ्यते। ( वेदस्यान्तः वेदान्तः, अन्तशब्दस्य द्विविधोऽर्थः सारभागः, अन्तिमांशो वा। ) उपनिपूर्वस्य विशारणगत्यवसादनार्थस्य सद्धातोः णिचि क्विपि उपनिषच्छब्दस्य निष्पत्तिरिति शङ्कराचार्याः। उपशब्दस्य सामीप्यं सत्वरं वार्थः निशब्दश्च निश्चयार्थकः तेन सत्वरं निश्चयेन संसारिणां संसारसारमतिं सादयति विशादयति शिथिलयतीति, परमश्रेयोरूपं प्रत्यगात्मानं सादयति गमयतीति, दुःखजन्मादिमूलमज्ञानं सादयति नाशयतीति वा उपनिषत्पदवाच्या। उपनिषद्विद्या भवति ब्रह्मविद्या रहस्यविद्या वा । ऋग्वेदस्य उपनिषदौ ऐतरेयशांखायनौ , सामवेदस्य च छान्दोग्यकेनोपनिषदौ, कृष्णयजुर्वेदस्य च कठ-श्वेताश्वतर-महानारायणः उपनिषदः सन्ति, शुक्लयजुर्वेदस्य ईशवृहदारण्यकौ, अथर्ववेदस्य च प्रश्नमुण्डकमाण्डुक्योपनिषदः प्रधान्येन उपलब्धाः। शङ्कराचार्येण दशानां प्रसिद्धानाम् उपनिषदां भाष्यं लिखितम्। तथाहि-

**'ईशकेनकठप्रश्नमुण्डमाण्डुक्यतैत्तिरिः।**

**ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा॥'**

श्वेताश्वेतरोपनिषदः अपि भाष्यं शङ्कराचार्येण कृतमिति केचन विद्वांसः कथयन्ति। तन्न इति अपरे।

इदं वेदज्ञानं ब्रह्मा भारद्वाजाय प्रददौ, भारद्वाजादाङ्गिरसः आङ्गिरसाच्च शौनकः एवमुत्तरोत्तरकाले बहवः ऋषयः इदं ज्ञानं प्रापुः। परन्तु कालक्रमेण आयुषः बुद्धेश्च ह्रासत्वाद् एकेन समग्रवेदं गभीरतया अध्येतुं वा अध्यापयितुम्वा न शक्यते अतः व्यासमहर्षिः वेदं चतुर्धा विभज्य स्वशिष्येभ्यः (पैलाय ऋग्वेदं जैमिनये सामवेदं वैशम्पायनर्षये यजुर्वेदं सुमन्तवे च अथर्ववेदं ) तत्तद्वेदरक्षणकार्यं व्यार्पयत् । तथाहि भागवते -



**"पराशरात् सत्यावत्यामंशांशकलया विभुः ।**

**अवतीर्णो महाभागो वेदं चक्रे चतुर्विधम् ।।" इति ।**

## १.१३) पाठगतप्रश्नाः

६५. आपस्तम्भेन सूचितं वेदलक्षणं किम्।

६६. महाभाष्यकारपतञ्जलिमते ऋग्वेदस्य कति शाखाः।

६७. सामवेदस्य एकस्याः शाखायाः नाम किम्।

६८. माध्यन्दिनी शाखा कस्य वेदस्य।

६९. अथर्ववेदस्य कति शाखाः आसन्।

७०. आपस्तम्भेन सूचितं ब्राह्मणलक्षणं किम्।

७१. ब्राह्मणेषु वर्ण्यमाणाः षड् विषयाः के सन्ति।

७२. शतपथब्राह्मणं कस्मिन् वेदे वर्तते।

७३. अथर्ववेदस्य ब्राह्मणस्य नाम किम्।

७४. आरण्यकशब्दः केन प्रत्ययेन निष्पन्नः।

७५. ऋग्वेदस्य आरण्यकद्वयस्य नाम किम्।

७६. उपनिषच्छब्दस्य नामान्तरं लिखत।

७७. उपनिषदित्यत्र सद्धातुः किमर्थकः।

७८. कठोपनिषत् कस्मिन् वेदे वर्तते।

७९. व्यासदेवः सामवेदं कस्मै दत्तवान्।

## १.१४) ऋग्वेदः

ऋच्यते स्तूयते यया सा भवति ऋक् इति ऋच स्तुतौ इति धातोः क्विपि निष्पन्नोऽयं शब्दः। स्तवनपरकाः ऋचः इत्यर्थः । पूर्वमीमांसाकारजैमिनिमतेन यत्र अर्थानुसारं पादव्यवस्था विहिता सा ऋक् भवति। तथाहि तेन प्रोक्तम् - "**तेषामृक् यत्र अर्थवशेन पादव्यवस्था**" ऋचः स्वरूपं तैत्तिरीयोपनिषद्यपि समाम्नातम् - "**यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद् यद् ऋचा तद्दृढमिति**"। ऋक्संहितायाः विभागप्रकारः द्विधा विभज्यते। प्रथमः तावत् - मण्डलः, अनुवाकः, सूक्तम्, ऋक् इति। द्वितीयः- अष्टकम्, अध्यायः, वर्गः, मन्त्रः । प्रथमप्रकारेण ऋक्संहितायां दश(१०) मण्डलाः, पञ्चाशीतिः(८५) अनुवाकाः, सप्तदशोत्तरैकसहस्रं (१०१७) सूक्तानि षट्छताधिकदशसहस्रं (१०६००) ऋचः सन्ति। ऋग्वेदस्य शाकलबाष्कलशाखयोः मध्ये शाकलशाखायां बालखिल्यर्षिदृष्टानि एकादश बालखिल्यसूक्तानि न परिगणितानि, तन्नये ऋक्संहितायां सप्तदशाधिकैकसहस्रं (१०१७) सूक्तानि सन्ति। द्वितीयविभागप्रकारेण ऋक्संहितायाम् अष्टौ (८) अष्टकानि चतुष्षष्टिः (६४) अध्यायाः, षडधिकद्विसहस्रं



(२००६) वर्गाः च सन्ति। सम्पूर्णायाम् ऋक्संहितायाम् द्वात्रिंशत्सहस्राधिकचतुर्लक्ष्यम् (४३२००) अक्षराणि सन्ति।

## १.१५) अथ सामवेदः

स्यति श्रवणमात्रेण पापानि नाशयति इति, स्यति गानसुधासेचनद्वारा यज्ञानुष्ठानकर्तॄणां कर्मानुष्ठानजां श्रान्तिं नाशयितीति वा विग्रहे "षोऽन्तकर्मणि" इति धातोः कर्त्रर्थे मणिन् प्रत्यये सामशब्दस्य निष्पत्तिः। "केचित्तु सामसान्त्वप्रयोगे" इति चुरादिगणीयादपि धातोः सामशब्दोत्पत्तिं मन्वते। तेषां नये सामयति गूढतत्त्वं गीतद्वारा वेदप्रतिपत्तारं बोधयित्वा तं सान्त्वयति इति साम। ऋक्षु गीतोचितस्वराणां निवेशे सति साम उत्पद्यते इति बृहदारण्यके आम्नातम्। तथाहि-**सा (ऋक्) च अमः (गीतोचितस्वरः) च तत्साम्नः सामत्वम्** जैमिनिना तु ऋङ्मन्त्रेषु या ऋक् गीतरूपेणोपस्थापनयोग्या सा भवति सामाख्या इति प्रत्यपादि। तथाहि तस्य निष्कर्षभूतं लक्षणं भवति "**गीतिषु सामाख्या**" इति। सायणाचार्येणापि सामवेदभाष्यभूमिकायां निगदितं- "**गीयमानस्य साम्नः आश्रयभूता ऋचः सामवेदे समाम्नायन्ते**" इति। सामवेदसंहितायां दशाधिकाष्टादशशतं (१८१०) मन्त्राः विद्यन्ते। एतेषु पञ्चसप्तत्तिः केवलं स्वकीयाः अवशिष्टाः ऋग्वेदात् समानीताः। कौथुमीशाखायाः नये सामवेदसंहिता पूर्वाचिकोत्तरार्चिकभेदेन द्विविधा। अत्र प्रथमं पूर्वार्चिकः प्रपाठकैः प्रपाठकाश्च दशतिभिः विभक्ताः। प्रत्येकं दशत्यां दश मन्त्राः सन्ति। एवं साकल्येन सामसंहितायां पूर्वार्चिके पञ्चशीत्यधिकपञ्चशतं (५८५) मन्त्राः विद्यन्ते। एवमुत्तरार्चिके प्रायेण चतुश्शतं (४००) स्तोत्राणि विद्यन्ते। प्रत्येकं स्तोत्रे च तिस्रः चतस्रः वा ऋचः सन्ति। इदं सामगानं चतुर्धा विभक्तम्- ग्रामगेयम्, अरण्यगेयम्, ऊहगानम्, ऊह्यगानञ्च।

## १.१६) अथ यजुर्वेदः

यज्यतेऽस्मिन् इति विग्रहे यज देवपूजासङ्गतिकरणदानेषु इति धातोः उसि-प्रत्यये यजुश्शब्दो निष्पद्यते। यजुर्मन्त्राः देवानाम् आहुतिपरकाः येषु मन्त्रेषु अक्षराणां संख्या नियतरूपेण न विद्यते ते यजुर्मन्त्राः इत्युच्यन्ते। उक्तञ्च- "**अनियताक्षरावसानो यजुः गद्यात्मको यजुः**" इति। जैमिनिना तु ऋङ्मन्त्रान् साममन्त्रान् च विहाय अवशिष्टाः वेदमन्त्राः यजुः पदवाच्याः इति प्रतिपादितम्। तथाहि तल्लक्षणम्- "**शेषे यजुश्शब्दः**" इति। यज्ञेन सह सम्बद्धानां यजुर्मन्त्राणां यजुर्त्वम् इति वायुपुराणे समाख्यातम्-

**"यच्छिष्टञ्च यजुर्वेदे, तेन यज्ञमयुञ्जत।**

**यजनाद्धि यजुर्वेद, इति शास्त्रस्य निर्णयः।।"** इति।

यजुर्वेदः द्विविधः शुक्लः कृष्णश्च। सूर्यात् प्राप्तस्य सात्विकत्वात् मन्त्रब्राह्मणयोश्च पृथक्भूतत्वात् शुक्लत्वम्। उद्गीर्यस्य तामसिकत्वात् मन्त्रब्राह्मणयोः व्यामिश्रीभूताच्च कृष्णत्वम्। शुक्लयजुर्वेदस्य माध्यन्दिनशाखायां चत्वारिंशदध्यायाः (४०) त्र्यधिकत्रिशतम् अनुवाकाः (३०३) तथा पञ्चसप्तत्यधिकोनविंशतिशतं (१९७५) कण्डिकाः सन्ति। काण्वशाखायान्तु चत्वारिंशदध्यायाः (४०)



अष्टाविंशत्याधिकत्रिशतं (३२८) अनुवाकाः त्र्यशीत्यधिकद्विसहस्रं (२००३) मन्त्राः सन्ति। कृष्णयजुर्वेदान्तर्गततैत्तिरीयशाखायां सप्त (७) काण्डाः, चतुश्चत्वारिंशत् (४४) प्रपाठकाः (प्रश्नाः) एकपञ्चाशदधिकषट्शतं (६५१) अनुवाकाः सन्ति।

## १.१७) अथाथर्ववेदः

आनन्तर्ये परब्रह्म गमयति प्रापयतीति वा विग्रहे अथपूर्वकाद् "ऋ गतिप्रापणयोः" इति धातोः वनिप्प्रत्यये अथर्वशब्दस्योत्पत्तिः। सद्य एव परब्रह्मप्राप्तिर्येन भवति तदथर्व इति शेषः।

अथर्ववेदे विंशतिः (२०) कण्डिकाः, अष्टत्रिंशत् (३८) प्रपाठकाः, नवतिः (९०) अनुवाकाः, एकत्रिंशदधिकसप्तशतं (७३१) सूक्तानि तथा प्रायेण षट्सहस्रं मन्त्राः अथर्वेदे विद्यन्ते।

## १.१८) पाठगतप्रश्नाः

८०. ऋक्-शब्दस्य निर्वचनं किम्।
८१. ऋक्संहितायाः द्वौ विभागप्रकारौ कौ।
८२. समग्रायाम् अपि ऋक्संहितायां कति अक्षराणि सन्ति।
८३. सामशब्दः कस्माद् धातोः निष्पन्न।
८४. सामवेदस्य लक्षणं सायणाचार्येण किमुक्तम्।
८५. सामवेदे स्वकीयाः मन्त्राः कति सन्ति।
८६. सामगानं कतिधा विभक्तम्, कानि च तानि।
८७. देवानाम् आहुतिपरकाः मन्त्राः के।
८८. यजुर्वेदः भेदद्वयं किम्।
८९. अथर्वशब्दः कस्माद् धातोः निष्पन्नः।
९०. अथर्ववेदे कति कण्डकाः सन्ति।

## १.१९) वैदिकस्वरः

सर्वाणि अक्षराणि स्वरव्यञ्जनभेदेन द्विविधानि। तत्र स्वयं राजन्ते इति स्वराः। अर्थात् तेषाम् उच्चारणे अन्यवर्णस्य साहाय्यम् अनावश्यकम्। एतेषां स्वराणाम् उदात्तत्व-अनुदात्तत्व-स्वरितत्वभेदेन त्रयो धर्माः सन्ति। यस्य स्वरस्य उदातत्वं धर्मो वर्तते स स्वरः उदात्तः स्वरः कथ्यते। यस्य स्वरस्य अनुदात्तत्वं धर्मो विद्यते स स्वरः अनुदात्तस्वरः उच्यते। यस्य च स्वरस्य स्वरितत्वं धर्मः अस्ति स स्वरः स्वरितस्वरः गद्यते। अयं सर्वोऽपि स्वरप्रपञ्चः शिक्षाग्रन्थेषु विस्तरशः आलोच्यते। पाणिनीयतन्त्रे स्वरस्य अपरं नाम भवति अच् इति।



उदात्तत्वम् अनुदात्तत्वम् इति द्वौ वर्णधर्मौ यस्मिन् स्वरे समाह्रियेते सः स्वरः स्वरितसंज्ञः भवति। यस्मिन् स्वरे उदात्तत्वम् अनुदात्तत्वम् इति द्वौ वर्णधर्मौ मिलितौ सः स्वरः संज्ञी अस्ति। स्वरितः इति संज्ञा अस्ति। स्वरस्य ज्ञानार्थं स्वरस्य उच्चारणस्थानानि बोद्धव्यानि।

**वर्णानाम् उच्चारणस्य स्थानानि -**

वर्णानाम् उच्चारणाय मुखस्य विविधानाम् स्थानानाम् उपयोगः भवति। तानि स्थानानि अष्टौ सन्ति। अत्र पञ्च स्थानानि एव आलोच्यन्ते।

गले ग्रीवायाम् वा सम्मुखे उन्नतः भागः भवति। स चिबुकस्य अधस्तात् भवति। तस्य नाम काकलकः इति। स एव लोके कण्ठमणिः इति कथ्यते। काकलकाद् आरभ्य ओष्ठं यावत् पञ्च स्थानानि उच्चारणाय व्यवह्रियन्ते। तानि च - १) कण्ठः, २) मूर्धा, ३) तालु, ४) दन्ताः, ५) औष्ठौ इति।

अवर्णस्य उच्चारणाय श्वासनलिकायाः आकुञ्चनं क्रियते। नलिकायाः यः अंशः आकुञ्चितः भवति तस्य नाम **कण्ठः** इति। मुखविवरे उपरितने गोलाकारे उन्नततमं स्थानम् **मूर्धा** भवति। ततः परं दन्तं यावत् विस्तीर्णस्य विभागस्य यः मध्यबिन्दुः स **तालु** इति कथ्यते। **दन्ताः** दशनाः इति प्रसिद्धाः। द्वौ **ओष्ठौ** च।

**कः उदात्तः भवति -**

कण्ठस्य यावान् भागः उच्चारणाय उपयोगी भवति तस्य भागद्वयम् कर्तव्यम्। ऊर्ध्वभागः अधोभागः च। पाणिनिसूत्रम् अस्ति - उच्चैरुदात्तः इति।

अत्र उच्चैः इति शब्दस्य अर्थः भवति - ऊर्ध्वभागे इति। उच्चैः इत्यस्य महान् ध्वनिः इति नात्रार्थः। कण्ठस्य ऊर्ध्वभागे अभिघातेन यः स्वरः उत्पद्यते स उदात्तः इति कथ्यते।

यथा कण्ठस्य भागाः कल्प्यन्ते। तस्य ऊर्ध्वभागः अधोभागः च कल्प्येते। तथा तालुनः मूर्ध्नः दन्तानाम् ओष्ठयोः च अपि भागाः कल्पनीयाः।

**कः अनुदात्तः भवति -**

अनुदात्तसंज्ञाविधायकं पाणिनीयं सूत्रं भवति - नीचैरनुदात्तः। सूत्रस्थस्य नीचैः इति शब्दस्य अर्थः भवति - अधोभागे इति। नीचैः इत्यस्य लघीयान् ध्वनिः इति न अत्र अर्थः। कण्ठस्य अधोभागे अभिघातेन यः स्वरः उत्पद्यते सः अनुदात्तः इति कथ्यते।

**कः स्वरितः -**

समाहारः स्वरितः इति पाणिनिसूत्रम्। उदात्तस्य स्वरस्य धर्मः उदात्तत्वम्। अनुदात्तस्य स्वरस्य धर्मः अनुदात्तत्वम्। यस्मिन् स्वरे उदातत्वम् अनुदात्तत्वं च मिलितं भवति स स्वरः स्वरितः स्वरः कथ्यते। अतः स्वरितस्य उच्चारणे कण्ठादीनाम् ऊर्ध्वभागः अधोभागः च अपि व्यवह्रियेते।

**स्वरिते उदात्तत्वस्य अनुदात्तत्वस्य च विभागः -**

स्वरितस्य कस्मिन् भागे उदात्तत्वम् कस्मिन् वा भागे अनुदात्तत्वम् इति ज्ञानम् अपेक्षितम्। स्वरितस्वरे पूर्वार्धभागः उदात्तः भवति। उत्तरार्धभागः अनुदात्तः भवति। स्वरितस्वरात् परं यदि अन्यः



उदात्तः स्वरितः वा स्वरः स्यात् तर्हि अस्य अनुदात्तभागस्य उच्चारणम् अनुदात्तमेव भवति। यदि अस्मात् स्वरितस्वरात् परम् अनुदात्तस्वरः स्यात् तर्हि स्वरितस्य यः अनुदात्तभागः तस्य उदात्ततरम् उच्चारणं भवति। अर्थात् उदात्ताद् अपि ऊर्ध्वभागे निष्पद्यते।

स्वरितात् परम् उदात्तः स्वरितः वा इति स्थितिः चेत् अनुदात्तभागस्य अनुदात्तमेव उच्चारणम्।

स्वरितात् परम् अनुदात्तः प्रचयः वा इति स्थितिः चेत् अनुदात्तभागस्य उदात्ततरम् उच्चारणम्।

**प्रचयः एकश्रुतिः**

स्वरितस्वरानन्तरम् अनुदात्तस्वराः ततः परम् उदात्तः इति यदा स्थितिः भवति तदा उदात्तात् पूर्वं विद्यमानः एकः अनुदात्तः अधोरेखया चिह्नितः भवति। ततः पूर्वं विद्यमानाः अनुदात्ताः स्वरचिह्नहीनाः भवन्ति। तेषामेव चिह्नहीनानाम् अनुदात्तानाम् नाम प्रचयः एकश्रुतिः वा।

**उदाहरणम् -** अ॒ग्निमी॑ळे पु॒रोहि॑तम्(ऋ.१.१.१)। उप॑ त्वाग्ने दि॒वेदि॑वे (ऋ.१.१.७)। अप्र॑युतामेवयावो म॒तिं दाः॑। (ऋ.७.१००.२)

अ॒ग्निमी॑ळे पु॒रोहि॑तम् इति ऋग्वेदस्य अग्निसूक्तस्य प्रथमं शब्दत्रयम्। अस्मिन् अ॒ग्निमी॑ळे इत्यत्र अकारः अनुदात्तः। इकारः उदात्तः। ईकारः स्वरितः। एकारः प्रचयः। अतः एव ईकारस्य यः उत्तरार्धभागः तस्य उदात्ततरम् उच्चारणं भवति। व्यञ्जनस्य उदात्तत्वादिकं नास्ति।

उप॑ त्वाग्ने दि॒वेदि॑वे (ऋ.१.१.७) इत्यत्र उप॑ इत्यस्मिन् उकारः उदात्तः, पकारात् परः अकारः स्वरितः। दि॒वे इत्यत्र दकारात् परः इकारः अनुदात्तः। ' त्वाग्ने ' इत्यत्र सर्वे स्वराः प्रचयाः।

अप्र॑युतामेवयावो म॒तिं दाः॑। (ऋ.७.१००.२) इत्यत्र अप्र॑ इत्यस्मिन् प्रथमः अकारः उदात्तः, द्वितीयः अकारः स्वरितः। म॒तिं इत्यत्र मकारात् परवर्ती अकारः अनुदात्तः। ' युतामेवयावो ' इत्यत्र सर्वे स्वराः प्रचयाः।

पाणिनीयशास्त्रोक्तदिशा प्रत्येकम् उदात्त-अनुदात्त-स्वरिताख्य-त्रिविधस्वराणां त्रिविधम् उच्चारणं सम्भवति। स्वरज्ञानस्य महत् स्थानं विद्यते यतो हि स्वरज्ञानं विना मन्त्रोच्चारणकाले स्वरभेदः जायते, तेन मन्त्रस्य अर्थो भिन्न एव भवति। अस्मिन् विषये इन्द्रशत्रुः इति पदस्य उदाहरणं दीयते। तथाहि उक्तं पाणिनीयशिक्षायाम् -

**"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थम् आह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।"**

इन्द्रशत्रुः इति शब्दे यदि इन्द्र इति पूर्वपदम् आद्युदात्तम् अस्ति तर्हि अस्मिन् पदे बहुव्रीहिसमासः अस्ति इति ज्ञायते। तेन अस्य पदस्य अर्थः भवति - इन्द्रः शत्रुः यस्य इति। तेन अस्य अर्थः भवति एतादृशः वृत्रः वर्धताम् यस्य शत्रुः इन्द्रः अस्ति इति। अर्थात् यस्य हन्ता इन्द्रः इति। शत्रुशब्दस्यार्थो भवति - हननकर्ता, विनाशकः इति। यदि पूर्वपदम् अन्तोदात्तम् भवति तर्हि अस्मिन् पदे तत्पुरुषसमासः इति ज्ञायते। ततश्च इन्द्रस्य शत्रुः इति अस्य विग्रहः भवति। तेन अस्य पदस्य अर्थो भवति इन्द्रस्य विनाशकः इति। तस्मात् एतत् ज्ञायते एव यत् स्वरज्ञानं विना उच्चारितं पदं कथं भिन्नम् एव अर्थम् प्रतिपादयति इति। उदात्तस्वरस्य उच्चारणार्थं कण्ठताल्वादिस्थानानाम् उत्कृष्टता अपेक्षिता।



अनुदात्तस्वरस्य उच्चारणार्थम् अपकृष्टता अपेक्षिता। स्वरितस्वरस्य उच्चारणार्थम् उत्कृष्टापकृष्टयोः सम्मेलनम् अपेक्षितम्। अत्र प्रामाणिकम् अस्ति उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः इति पाणिनीयसूत्रत्रयम्। ऋग्वेदस्य प्रातिशाख्यग्रन्थे एतेषां त्रयाणां स्वराणां क्रमात् आयामः विश्रम्भः आक्षेपः इति नामकरणं विहितम्।

### १.१९.१) स्वराङ्कनपद्धतयः

संहितायां वाक्यम् अर्धर्चं वा आश्रित्य स्वराङ्कनं भवति। किन्तु एतेन साकं प्रत्येकं पदानाम् अपि पृथक् स्वरः सिद्धः अस्ति। यतो हि अनुदात्तं पदमेकं वर्जम् इति पाणिनीयसूत्रानुसारम् एकस्मिन् पदे उदात्तस्वरद्वयं स्थातुम् न अर्हति। ऋग्वेद-शुक्लयजुर्वेद-तैत्तिरीयसंहिता-अथर्ववेद-तैत्तिरीय-ब्राह्मणानुसारम् उदात्ताक्षरात् परं किमपि चिह्नं न भवति, अनुदात्तस्वरस्य प्रकटनार्थम् अक्षरस्य अधः चिह्नं भवति, अ॒ इति उदाहरणम्। स्वरिताक्षरस्य उपरि चिह्नं भवति अ॑ इति उदाहरणम्।

मैत्रायणीसंहितायां किञ्च काठकसंहितायाम् उदात्ताक्षरस्य उपरि दण्डरेखा दीयते उदाहरणं हि प्र॑ तद्विष्णुः(मै.सं.१.२९) चित्तिः स्रुक्(क्र.सं ९.८)। अथर्ववेदस्य पैप्पलादसंहितायां तु उदात्ताक्षरस्य अधः रेखा चिह्नं भवति। स्वरितस्वरस्य अधः बिन्दुः भवति। उदाहरणं यथा देवा॑नाम् (अथर्व. पै. २.३०.१) इत्यत्र नकारोत्तरस्य अकारस्य उदात्तत्वबोधनाय बिन्दुः प्रदत्तः। सामवेदे उदात्त-अनुदात्त-स्वरित-स्वराणां कृते तु अक्षराणाम् उपरि अ१ अ२ अ३ इति चिह्नानि दीयन्ते।

शतपथब्राह्मणे केवलम् उदात्ताक्षरस्य अधः रेखा अङ्क्यते। यदि अनेके उदात्ताः स्वराः एकस्मिन् पदे तिष्ठन्ति, तर्हि अन्तिमस्य एव उदात्तस्वरः इत्थम् अङ्क्यते। सत्यमा॒ज्यम् इत्यत्र सत्यम् इत्यत्र यकारोत्तरः अकारः, आज्यम् इत्यत्र आकारः च उभौ अपि उदात्तौ।



## पाठसारः

वैदिकवाङ्मयस्य परिचयाय अयं प्रथमः पाठः। अत्र केचित् मुख्याः प्रारम्भिकविषयाः च आलोचिताः। तत्रादौ वेदानां वैशिष्ट्यं महिमा च अलोचितः। ततः वैदिकवाङ्मयस्य विभूतिः प्रदर्शिता। वेदशब्दस्य अर्थाः विविधप्रकारैः उपन्यस्ताः। वेदशब्दस्य नैके पर्यायाः सन्ति ये शास्त्रेषु बाहुल्येन प्रयुज्यन्ते ते पर्याया अपि तत्र उपन्यस्ताः। वेदा अपौरुषेयाः सन्ति। अपौरुषेयपदेन किं बोद्धव्यमिति विचारः अपि अत्रैव पाठे वर्तते। वेदस्य विविधानि लक्षणानि सन्ति। विविधैः आचार्यैः कृतानि लक्षणानि अत्र प्रकटितानि सन्ति।

वेदशब्दस्य पञ्चभ्यः धातुभ्यः निष्पत्तिः भवति। ऋग्वेदः सर्वप्राचीनः भवति। संहिता-आरण्यक-ब्राह्मण-उपनिषद्भेदेन प्रत्येकं वेदः चतुर्धा विभज्यते। ऋग्वेदस्य विभागप्रकारस्य भेदेन मन्त्रादिसंख्या अपि भिद्यते। बालखिल्यानि सूक्तानि अपि अत्रि विद्यन्ते। शाखाभेदे पाठभेदे ऋगादिवेदानां मन्त्रादिसंख्या अपि



भिद्यते। यजुर्वेदस्य भेदद्वयं प्राप्यते। सामवेदस्य अधिकाः मन्त्राः ऋग्वेदादेव गृहीताः। अथर्ववेदः बहुपरं वेदेषु संयोजितः इति बहूनां मतमस्ति।

वैदिकमन्त्रेषु स्वरज्ञानम् अनिवार्यमेव। अतः वैदिकस्वराः के, किं तल्लक्षणम्, के तेषां प्रकाराः, किं वा स्वरस्य अर्थनिर्णये पुण्यार्जने च माहात्म्यम् इति एते विषया अपि अत्रैव पाठे सन्निविष्टाः सन्ति।



## पाठान्तप्रश्नाः

१. वेदम् आश्रित्य टिप्पणीं रचयत।
२. वेदलक्षणं संक्षेपेण लिखत।
३. वेदः पौरुषेयः अपौरुषेयो वेति सामान्यरूपेण विचारयत।
४. वेदस्य विभूतिविषये लिखत।
५. वेदशब्दस्यार्थं विशदयत।
६. वेदानां महत्त्वं प्रतिपादयत।
७. दार्शनिकमतप्रतिष्ठापनेन वेदस्य रचनाकालविषये लिखत।
८. वेदलक्षणं लिखत।
९. वेदशब्दस्य लक्षणपुरस्सरं व्युत्पत्तिं प्रतिपादयत।
१०. संहितां प्रतिपादयत।
११. ऋग्वेदं वर्णयत।
१२. यजुर्वेदं वर्णयत।
१३. वेदे कति स्वराः। के च ते।
१४. वैदिकस्वरान् सविस्तरं परिचाययत।
१५. प्रचयस्वरं प्रकटयत।
१६. स्वरितस्य स्वरस्य उत्तरभागस्य कदा कीदृशम् उच्चारणं भवति।
१७. स्वरस्य प्रयोजनानि कानि।



## पाठगतप्रश्नानाम् उत्तराणि

### वेदानां वैशिष्ट्यम् महत्त्वम् च

१. द्विजः वेदम् अनधीत्य अन्यत् कर्म करोति चेत् सः शूद्रो मतः।
२. वेदतत्त्वज्ञ एव जनः ब्रह्म ज्ञातुम् प्रभवति।



३. 'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥'इति

४. 'वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥'इति

५. ऋषिभिः।

६. मन्त्रद्रष्टारः।

७. ऋष्यति पश्यति इति ऋषिः।

८. इनिप्रत्ययेन।

९. 'तद्येनास्तपस्यमानन् ब्रह्मस्वयम्भ्वभ्यानर्षत्' इति पङ्क्तिः।

१०. मन्त्ररुपः भागः ब्राह्मणरूपः भागः च।

११. संहिता इति।

१२. संहिताभागस्य व्याख्यारुपः एव।

१३. त्रिधा विभक्तः, ब्राह्मणम्, आरण्यकम्, उपनिषदश्चेति विभागाः।

१४. यज्ञस्वरूपप्रतिपादकः।

१५. अरण्ये पठिताः यज्ञस्य आध्यात्मिकं रूपं विवेचयन्तः भागाः।

१६. ब्रह्मस्वरूपस्य बोधिकाः मोक्षसाधनानि वा उपनिषद्।

१७. ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थम् आश्रितानाम् उपयोगी, उपनिषद्भाश्च संन्यस्तानां सन्न्यासिनां वा उपयोगी।

**वैदिकवाङ्मयम्**

१८. षड्वेदाङ्ग-ब्राह्मण-आरण्यक-उपनिषदादीनां बोधो भवति।

१९. वाङ्मयम् इत्यस्मिन् अर्थे।

२०. 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'। इति।

२१. येन हि यागानाम् अनुष्ठानं निष्पन्नतां गच्छति, देवतानां च स्तुतिविधानं यत्र उल्लिखितमस्ति सः माननात् मन्त्र इत्युच्यते।

२२. यज्ञानां विविधक्रियाकलापानां प्रतिपादकाः ग्रन्थाः 'ब्राह्मणम्' इति संज्ञां भजन्ते।

२३. वेदश्च स्वरूपभेदात् त्रिविधः- ऋग्वेदः, यजुर्वेदः सामवेदः च इति।

२४. यत्रार्थवशेन पादव्यवस्था अस्ति तेषां छन्दोबद्धानां मन्त्राणां नाम 'ऋक्' इति वेद्यम्। ऋचां समूह एव 'ऋग्वेद' इति।

२५. यस्मिन् वेदे यज्ञयागादिक्रियाकलापानाम् अनुरोधेन मन्त्राणां सन्निवेशः अस्ति सः 'यजुर्वेद' इति।

२६. यत्र गीतिरूपा मन्त्राः विद्यन्ते स उपासनाकाण्डपरो वेदः 'सामवेद' इति।



२७. मन्त्राः त्रिविधाः अत एव वेदानां 'त्रयी' इति नाम।

२८. वेदव्यासः कृतवान्।

२९. तिस्रः संहिताः।

३०. महत् मौलिकं पुरातनं च इदं वैदिकवाङ्मयम्। अतः अत्र अस्माकम् अभिनिवेशः भवति।

### वैदिकवाङ्मविभूतिः

३१. धर्मदर्शनयोः उभयोः विकासार्थं ज्ञानार्थञ्च वैदिकवाङ्मयस्य अध्ययनम् अपरिहार्यं भवति।

३२. कालद्वयेन विभक्तः।

३३. हिन्दी-पंजाबी-बंगला-उडिया-गुजराती-मराठी-राजस्थानी-आसामीप्रभृतयःउत्तरभारतीयभाषाः,दक्षिणभारतेऽपि याः तामिल-तेलगु-मलयालम-कन्नडादि आधुनिक्यः भाषाः सन्ति ता अपि वैदिकवाङ्मयेन भृशं प्रभाविताः।

३४. अध्यात्मविषयिणी सनातनी जिज्ञासा वैदिकवाङ्मये आलोचिता।

### वेदार्थः, पर्यायशब्दः च

३५. 'विद्यन्ते धर्मादयः पुरुषार्थाः यैस्ते वेदाः'इति।

३६. इष्टच्यप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः इति।

३७. पौरुषेयः नित्यश्च।

३८. सांख्य-वेदान्त-मीमांसानाञ्च।

३९. वेत्ति,विचारणा, सत्ता, लाभश्च।

४०. विन्ते इति।

४१. वेदोऽखिलधर्ममूलं स्मृतिशीले च तद्विदाम्।

४२. 'अपौरुषेयवाक्यं वेद' इति।

४३. इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकम् उपायं यो वेदयति सः 'वेदः' इति।

४४. आम्नायः, आगमः, श्रुतिः, वेदः,छन्दः इति सर्वे शब्दाः वेदशब्दस्य पर्यायाः सन्ति।

४५. विद्-धातोः आयाति।

४६. सत्तार्थकात्-विद्धातोः घञ्प्रत्ययेन निष्पन्नः वेदशब्दः।

४७. वैयाकरणसिद्धान्तकौमुद्यां चुरादिप्रकरणे तु चतुर्षु अर्थेषु विद्-धातोः प्रयोगः अस्ति। ते च अर्थाः भवन्ति सत्ता,ज्ञानम्,विचारणम्,प्राप्तिः चेति।

४८. 'विदन्त्येभिः धर्मब्रङ्गणी क्रियाज्ञानमयं ब्रह्म वा इति वेदः।'

४९. 'विन्ते विचारयति धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वेति वेद' इति।

५०. वेदमर्मज्ञाः भारतीयाः मेधाविनः मन्यन्ते।

५१. मन्त्रद्रष्टा इति।

५२. ऋषिशब्दः 'इगुपधात् कित्' इत्यनेन औणादिकेन सूत्रेण इनिप्रत्ययेन निष्पन्नः।



५३. न्यायवैशेषिकयोः मते वेदाः पौरुषेयाः नित्याश्च सन्ति।

५४. मनुः वेदान् नित्यान् अपौरुषेयान् च मन्यते।

**वेदस्य पौरुषेयत्वापौरुषेयत्वविचारः, लक्षणं च**

५५. पौरुषेयः।

५६. अपौरुषेयः।

५७. वेदान्तिनः सांख्याः च।

५८. संहितापाठः।

५९. जाबालि-काण्व-माध्यन्दिनादिशाखाः शुक्लयजुर्वेदे प्रसिद्धाः।

६०. वाजो नाम सूर्यरश्मिः, सनिशब्दो धनवाची।

६१. ऋच्यते स्तूयते यया सा ऋक्।

६२. शुक्लयजुर्वेदे हि दर्शपूर्णमासादियागार्थं मन्त्राः संकलिता वर्तन्ते।

६३. अभिचारादिकर्मसु अथर्ववेदीयमन्त्राणामस्ति उपयोगः।

६४. तेषामृक् यत्र अर्थवशेन पादव्यवस्था' इति।

**संहितादि**

६५. मन्त्रब्राह्मणयोः वेदनामधेयम् इति।

६६. ऋग्वेदस्य एकविंशतिः शाखाः।

६७. कौथुमीयशाखा।

६८. शुक्लयजुर्वेदस्य।

६९. अथर्ववेदस्य नव शाखाः।

७०. कर्मचोदना ब्राह्मणानि इति।

७१. विधिः, अर्थवादः, निन्दा, प्रशंसा, पुराकल्पः, पराकृतिश्चेति।

७२. शुक्लयजुर्वेदे।

७३. गोपथब्राह्मणम्।

७४. वुञ्प्रत्ययेन।

७५. ऋग्वेदस्य आरण्यकद्वयं प्राप्यते ऐतरेयं सांख्यायनञ्च।

७६. वेदान्तः इति।

७७. विशारणगत्यवसादनार्थस्य।

७८. कृष्णयजुर्वेदे।

७९. वैशम्पायनर्षये।



**ऋगादिवेदः**

८०. ऋच्यते स्तूयते यया सा भवति ऋक् इति

८१. प्रथमः तावत् - मण्डलः, अनुवाकः, सूक्तम्, ऋक् इति। द्वितीयः- अष्टकम्, अध्यायः, वर्गः, मन्त्रः इति।

८२. द्वात्रिंशत्सहस्राधिकचतुर्लक्ष्यम् (४३२००) अक्षराणि सन्ति।

८३. षोऽन्तकर्मणि" इति धातोः निष्पन्नः।

८४. "**गीतिषु सामाख्या**" इति।

८५. पञ्चसप्ततिः मन्त्राः।

८६. सामगानं चतुर्धा विभक्तम्, ग्रामगेयम्, अरण्यगेयम्, ऊहगानम्, ऊह्यगानञ्च इति।

८७. यजुर्मन्त्राः इति।

८८. शुक्लः कृष्णश्च इति।

८९. ऋ-धातोः।

९०. विंशतिः।

॥ इति प्रथमः पाठः ॥



# २

# वेदानां कालः पाठप्रकाराः मन्त्राणां च ऋषिच्छन्दोदेवताविनियोगाः

## प्रस्तावना

वेदानां महत्त्वस्य गौरवस्य च विषये वैदिकविद्वत्सु यद्यपि मतसाम्यम् अस्ति तथापि, तेषु वेदस्य आविर्भावकालविषयम् अधिकृत्य गम्भीरः मतभेदः अस्ति। वेदस्य आविर्भावकालविषये अत्र संक्षेपेण आलोचना विहिता वर्तते। तदनन्तरं वेदानां प्रक्षिप्तत्वनिवारणाय पाठप्रकाराः ऋषिभिराविष्कृताः, ते प्रकाराः व्याख्याताः सन्ति। अन्ते च मन्त्राणां निरर्थकत्वापत्तिवारणाय अवश्यमेव ज्ञातव्याः विषयाः वर्तन्ते ऋषिच्छन्दोदेवताविनियोगाश्च। तेऽपि अत्र आलोचिताः वर्तन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- वेदस्य आविर्भावकालविषये अनेकेषाम् आचार्याणां मतविषये ज्ञातुं शक्नुयात्।
- वेदपाठस्य प्रकारान् तथा तेषां वैचित्र्यपूर्णमहिमानां ज्ञातुं शक्नुयात्।
- वेदानाम् ऋषिच्छन्दोदेवताविनियोगानां विषये विस्तरेण ज्ञातुं शक्नुयात्।
- एतेषां वेदानां समाजे विशिष्टमेकं महत्त्वं वर्तते तद् ज्ञातुं शक्नुयात्।
- स्वयमेव वेदानाम् कालविषये लघुप्रबन्धं लेखितुं शक्नुयात्।

## २.१) वेदाविर्भावकालः

भारतीयसभ्यतायाः प्राचीनं रूपं विज्ञातुं वैदिकग्रन्थानाम् उपयोगिता नितान्तं माननीया अस्ति। सिद्धान्तस्य अस्य स्वीकरणे केषाञ्चिद् अपि विदुषां का अपि आपत्तिः नास्ति। किञ्च, अस्याः वैदिकसभ्यतायाः ज्योतिः कदा अस्य भारतवर्षस्य पवित्रां भूमिम् आलोकिताम् अकरोत्। कस्मिन् काले ऋषीणां चित्ते आध्यात्मिकस्य ज्ञानस्य दिव्यसन्देशं दातुम् इयं इच्छा जागृता अभवत्। कदा ते आलोकसामान्येन गूढार्थेन युक्तान् मन्त्रान् विरचितवन्तः इति एतेषां प्रश्नानां समुचितम् उत्तरम् अधुना न कोऽपि दातुं समर्थः, न चापि भविष्यत्कालेऽपि कोऽपि दातुं समर्थो भविष्यति।



भारतीयपरम्परायां ये विद्वांसः श्रद्धां कुर्वन्ति तेषां समक्षे तु वेदस्य कालनिर्णयविषये प्रश्नः एव न उत्तिष्ठति। तेषां दृष्ट्या तु वेदाः सन्ति अनादयः। सन्ति ते नित्याः कालेन अपरिच्छिन्नाः च। परं पाश्चात्त्यानां वेदज्ञानां पण्डितानां किञ्च, तेषाम् अनुगामिनां केषाञ्चन भारतीयानां सम्मत्यां वेदस्य आविर्भावकालसम्बन्धी प्रश्नः समाधेयः एव विद्यते। प्राचीनभारतीयाः विद्वांसः वेदान् अपौरुषेयान् मन्यन्ते, तेषां नये तु वेदस्य रचनायाः कालविचारो निरर्थकः अस्ति। सम्प्रति पाश्चात्याः विद्वांसः यथाबुद्धिवैभवं वेदरचनाकालं निर्धारयन्ति। पाश्चात्यविचाराणां या सरणिः तासां ज्ञातारः च ये भारतीयाः विद्वांसः ते अनुसन्धित्सवः अपि तेनैव मार्गेण वेदकालं निर्णेतुं यतन्ते। अत्र तद्विषयकाः कतिचन विचाराः प्रस्तूयन्ते।



## पाठगतप्रश्नाः

१. केषां नये वेदाः अनादयः।

२. प्राचीनभारतीयाः विद्वांसः वेदान् किं मन्यन्ते।

३. सम्प्रति के वेदरचनाकालं निर्धारयन्ति।

---

## २.१.१) डॉ. मैक्समूलरस्य मतम्

सर्वप्रथमः डॉ. मैक्समूलरमहोदयः १८५९ ख्रीष्टाब्दे स्वकीये प्राचीनसंस्कृतसाहित्याभिधाने ग्रन्थे वेदानां कालं निर्णेतुं प्रशसनीयं प्रयासं विहितवान्। तस्य सम्मतौ वेदेषु प्राचीनतमस्य ऋग्वेदस्य रचना १२०० वि.पू. काले सम्पन्ना अभवत्। तस्य मतेन ऋग्वेदस्य रचना ११५० ई.पू.समीपे एव जाता। मानवकल्याणार्थम् अस्मिन् देशे अभिनवबौद्धधर्मस्य उदयः समस्तवैदिकवाङ्मयस्य अस्तित्त्वम् अङ्गीकरोति। किञ्च अस्य बौद्धधर्मस्य उदयात् प्रागेव ब्राह्मणग्रन्थाः विरचिताः अभवन्। बुद्धेन ब्राह्मणग्रन्थेषु विवेचितानामेव यागविधीनां कठ्वी आलोचना क्रियते स्म। अतो बुद्धात् पूर्वतना(५०० ई.पू.) एव ब्राह्मणोपनिषद्भागाः सम्भवन्ति। वैदिकसाहित्ये चत्वारि युगानि सन्ति- छन्दोयुगम्, मन्त्रयुगम्, ब्राह्मणयुगम्, सूत्रयुगञ्च। प्रत्येकं युगस्य विकासे तेन वर्षशतद्वयात्मकः कालः कल्पितः, तदनुसारेण बुद्धात् ६०० वर्षतः पूर्वं छन्दोयुगस्य सत्ता समायाति। अतः ऋग्वेदस्य रचना ११५० ई.पू. समायात् पश्चात्कालिकी न सम्भवतीति। सम्प्रति जातस्य ऋग्वेदस्य ३२०० वर्षाणि जातानि इति कथयितुं शक्यमिति तदाशयः। डॉ. मैक्समूलरमहोदयः ऋग्वेदस्य उदयविषये कांश्चन विन्दून् आधृत्य एव उक्तां सम्भावनां चकार। सः स्वेन अङ्गीकृते वेदस्य आविर्भावविषये वस्तुतो निश्चितः न आसीत्। यतो हि स एकस्मिन् समये भाषमाणः स्वयमेव उक्तवान् यत्- नात्र भूतले काऽपि शक्तिः ईदृशी या वैदिकमन्त्ररचनायाः कालं वक्तुं शक्नुयात् निश्चितरूपेण। सः इमं विचारं १८८९ शततमे ईशवीये अब्दे भौतिकधर्माख्यायां जिफोर्डव्याख्यानमालायां प्रकटीकृतवान्। किञ्च, तदनुसारिणः पाश्चात्याः तत्सम्बन्धिभिः एव तर्कैः कालम् इमं निश्चयरूपेण कथयितुं प्रवृत्ताः।





## पाठगतप्रश्नाः

४. वेदेषु प्राचीनतमः ग्रन्थः कः।

५. ऋग्वेदस्य रचना कदा सम्पन्ना अभवत्।

६. वैदिकसाहित्ये कति युगानि सन्ति। कानि च तानि।

७. सम्प्रति लभ्यमानस्य ऋग्वेदस्य कति वर्षाणि जातानि।

### २.१.२) ज्यौतिषतत्त्वाधारेण मतम्-

वैदिकसंहितासु ब्राह्मणेषु च निर्दिष्टाः ज्यौतिषसम्बन्धिन्यः सूचनाः सन्ति। ताः सूचनाः अवगम्य लोकमान्यबालगङ्गाधरतिलकः डा. याकोबीनामा जर्मनीयो विद्वान् च आविर्भूतस्य वेदस्य चतुर्विंशतिशतवर्षाणि यातानि इति मन्यन्ते।

भारते षड् ऋतवो भवन्ति। इमे ऋतवः सूर्यसङ्क्रमणस्य निमित्तकाः। इदमपि प्रसिद्धं यत् प्राचीनकालात् अधुना पर्यन्तम् अमी ऋतवः पश्चात् गच्छन्ति। अर्थात् पूर्वं यत्र नक्षत्रे यस्य ऋतोः उदयः जायते स्म सम्प्रति स एव ऋतुः ततः पूर्ववर्तिनि नक्षत्रान्तरे उदितः भवति। पुराकाले वसन्तो वर्षादिः अभवत्। अत एव तस्य सुविशालतया भगवद्विभूतिभावः उक्तो गीतायाम्-"ऋतूनां कुसुमाकरः" इति। सम्प्रति वसन्तसम्पातः मीनसङ्क्रान्तिकालतः आरभते। मीनसङ्क्रान्तिः पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति। सा इयं स्थितिः नक्षत्राणां क्रमशः पश्चाद् गत्या उत्पन्ना। पूर्वं कदाचित् वसन्तसम्पातः उत्तरभाद्रपद-रेवती-अश्विनी-भरणी-कृत्तिका-मृगशिरःप्रभृतिषु नक्षत्रेषु आसीत्। ततः पश्चात् गच्छन् अयं वसन्तसम्पातः साम्प्रतिकीं स्थितिम् प्राप्तः।

ज्योतिर्विदः सूर्यस्य सङ्क्रमणवृत्तं २७ नक्षत्रेषु विभजन्ति। पूर्वसङ्क्रमणवृत्तम् ३६० अंशानाम् अस्ति। तत् प्रत्येकं नक्षत्रम् ३६०÷२७=१३१/२ आंशानां चापं निर्माति। सङ्क्रमणविन्दुः ७२ वर्षेषु एकम् अंशं विहाय अपरम् अंशं गच्छति। एवम् एकस्मात् नक्षत्रात् सङ्क्रमणविन्दुः अपरं नक्षत्रं गच्छति। तत्र ७३×१३१/२=९७२ वर्षात्मकस्य कालस्य प्रयोजनं भवति। सम्प्रति वसन्तसम्पातः पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति। तदा च अयं वसन्तसम्पातः कृत्तिकानक्षत्रे भवति स्म। ततो वर्तमानस्थितेः प्राप्त्यर्थं ४१/२ नक्षत्राणि लङ्घितानि भवन्ति। यदि एकत्र नक्षत्रे लङ्घनीयः १७२ वर्षात्मकः कालः अपेक्षते तदा ४१/२ नक्षत्रातिक्रमे ९७२×४१/२=४३७४ वर्षात्मकः कालः अवश्यम् अपेक्षितः स्यात्। तदेवं वेदोक्तस्य ज्यौतिषतत्त्वस्य अनुसारेण वेदानां २५०० ई.पूर्वकालिकता प्रतीता भवति।





## पाठगतप्रश्नाः

८. भारते कति ऋतवः भवन्ति।

९. सम्प्रति वसन्तसम्पातः कदा आरभते।

१०. मीनसङ्क्रान्तिः कदा भवति।

११. ज्योतिर्विदः सूर्यस्य सङ्क्रमणवृत्तं कति नक्षत्रेषु विभजन्ति।

१२. सङ्क्रमणविन्दुः कतिषु वर्षेषु एकम् अंशं विहाय अपरम् अंशं गच्छति।

१३. वेदोक्तज्योतिषतत्त्वानुसारेण वेदस्य रचनाकालः कः भवति।

---

### २.१.३) शङ्करबालकृष्णदीक्षितस्य मतम्

महाराष्ट्रस्य विख्यातपण्डितः ज्योतिर्विद् श्रीशङ्करबालदीक्षितमहोदयः अस्ति। सः अतिपरिश्रमेण शतपथब्राह्मणात् महत्त्वपूर्णं वर्णनमेकम् अन्विष्टवान्। तेन तस्य ग्रन्थस्य रचनाकालविषये पर्याप्तप्रकाशो मिलति। वैदिकेषु संहितासु नक्षत्रनिर्देशकानि बहूनि वर्णनानि प्राप्यन्ते। शतपथब्राह्मणस्य अस्मिन् सन्दर्भे कथनमिदं द्रष्टव्यम्-

´एकं द्वे त्रीणि चत्वारि वा अन्यानि नक्षत्राणि, अथैता एव भूयिष्ठा यत् कृत्तिकास्तद् भूमानमेव एतदुपैति, तस्मात्कृत्तिकास्वादधीत। एताहवै प्राच्या दिशो न च्यवन्ते सर्वाणि ह वां अन्यानि नक्षत्राणि प्राच्यादिशश्च्यवन्ते।´(शतपथ. २/१/२)

एतेन एतद् उक्तं भवति यत् शतपथब्राह्मणरचनाकाले कृत्तिकानियमाः प्राच्याम् आसन्। सम्प्रति एताः कृत्तिकाः पूर्वदिग्बिन्दुतः ईषद् उत्तरस्यां दिशि उदयं यान्ति। दीक्षितमहोदयस्य गणनया तादृशी ग्रहस्थितिः ३००० ई.पू. काले सम्भवति। अतः स एव शतपथस्य निर्माणकालः। तैत्तिरीयसंहिता शतपथात् प्राचीना अस्ति। ऋग्वेदात् तैत्तिरीयसंहिता अपि प्राचीना अस्ति। ऋग्वेदः ३५०० ई.पू. काले प्रणीतः इति सम्भवति। एवञ्च सम्प्रति ऋग्वेदः ५५०० वर्षात् प्राचीनः इति निश्चीयते।



## पाठगतप्रश्नाः

१४. श्रीशङ्करबालदीक्षितमहोदयः महत्त्वपूर्णं वर्णनमेकं कुतः अन्विष्टवान्।

१५. नक्षत्रनिर्देशकानि बहूनि वर्णनानि कुत्र प्राप्यन्ते।

१६. कृत्तिकाः कस्यां दिशि उदेति।

---



## २.१.४) बालगङ्गाधरतिलकस्य मतम्

तिलकस्य मते वेदकालः इतोऽपि किञ्चित् प्राचीनः सिद्ध्यति। सः मृगशिरनक्षत्रे वसन्तसम्पातस्य साधकानि बहूनि वेदवाक्यानि सङ्गृहीतवान् आसीत्। तैत्तिरीयसंहितायाम् उच्यते फाल्गुनी पूर्णिमा वर्षादिः। तिलकस्य मतमिदम् अनुकूलम्। यतो हि यदि पूर्णचन्द्रः फाल्गुन्यां भवति तदा सूर्यः मृगशिरसि भवेत् एव। तदेव च भावी वसन्तसम्पातः। मृगशिरसि वसन्तसम्पातस्य कालः पूर्वोक्ताया कृत्तिकायाः कालात्प्रायः २००० वर्षपूर्वं सम्भवति। यतः मृगशिरसः कृत्तिकापर्यन्तं पश्चात् गमने द्विसहस्रवर्षात्मकः कालः अपेक्षते। एकस्मात् नक्षत्रात् अपरस्य नक्षत्रस्य गमनाय ९७० वर्षाणि अपेक्षन्ते इति पूर्वम् उक्तमेव अस्ति। अतो येषु मन्त्रेषु मृगशिरसि वसन्तसम्पातस्य उल्लेखो विद्यते। ते मन्त्राः ४५०० ई.पू. समयतः अर्वाचीनाः न सम्भवन्ति। मृगशिरसः अपि पूर्वं पुनर्वसौ वसन्तसम्पातस्य बोधकानि वेदवचनानि तिलकः प्राप्तवान्। तस्मात् वेदमन्त्राणां ततः पूर्वतनः काल इति साधयितुं शक्यते। डा.याकोबी-नामा जार्मानीयो विद्वान् आविर्भूतस्य वेदस्य चतुर्विंशतिवर्षाणि यातानि इति मन्यते। गृह्यसूत्रेषु उल्लेखितस्य ध्रुवदर्शनस्य आधारेण स एव कालः स्वतन्त्ररूपेण वेदानां कालः इति निर्धारितः।

लोकमान्यतिलकमतानुसारेण-

(१)अदितिकालः- ६००० ई.पूर्वतः ४००० पूर्वपर्यन्तम्। अत्र काले उपास्यदेवानाम् गौणमुख्यचरितादिबोधका गद्यपद्यमयाः मन्त्राः रचिताः, ये मन्त्राः यज्ञेषु प्रयुज्यन्ते स्म।

(२)मृगशिरःकालः- ४००० ई.पूर्वतः २५०० ई.पू. पर्यन्तम्। अत्रैव महत्त्वशालिनि काले बहवः ऋग्वेदमन्त्राः रचिताः अभवन्।

(३)कृत्तिकाकालः- २५०० ई.पूर्वतः १४०० ई.पू. पर्यन्तम्। अस्मिन् काले शतपथब्राह्मणगततैत्तिरीयसंहितायाः प्रणयनम् अजायत।

(४)अन्तिमः कालः- १४०० ई.पू. ५०० ई. पूर्वपर्यन्तम्। अत्र काले शौतसूत्रगृह्यसूत्रदर्शनसूत्रादीनाम् आर्षग्रन्थानां रचना जाता। तान् एव ग्रन्थान् विरोद्धुं प्रतिक्रियारूपेण बौद्धधर्मस्य उदयः अभवत्।



## पाठगतप्रश्नाः

१७. तैत्तिरीयसंहितायाम् कः वर्षादिः उच्यते।

१८. एकस्मात् नक्षत्रात् अपरस्मिन् नक्षत्रे गमनार्थं कियत्कालम् अपेक्षते।

१९. आविर्भूतस्य वेदस्य चतुर्विंशतिः वर्षाणि यातानि इति कः मन्यते।

२०. लोकमान्यतिलकेन कति कालाः प्रोक्ताः।

## २.१.५) शिलालेखः

साम्प्रतिकानि शोधकार्यफलानि अपि तिलकमहोदयस्य मतं पुष्टं कुर्वन्ति। सप्ताधिके एकोनविंशतिशततमे ईशवीये (१९०७ ई.पू.)अब्दे डा. हूगोविन्कलर ´बोधाज् कोड्´ नामके वर्तमानटर्कीदेशान्तर्गते खननकार्ये प्राचीनमेकं शिलालेखं प्राप्तवान्। तेन शिलालेखेन ज्ञायते यत् पश्चिम-एशियावयवभूते तत्र टर्कीदेशे द्वयोः कयोश्चित् प्राचीनजात्योः निवासस्थानम् आसीत्। तत्र एकस्याः जातेः नाम ´हित्तिति´ इति अपरस्याश्च´मितानि´ इत्यासीत्। अनयोः द्वयोः जात्योः मध्ये राजानौ पारस्परिककलहस्य निवारणाय सन्धिं कुरुतः स्म । तत्र सन्धौ द्वौ अपि पक्षौ सन्धिसंरक्षकतया देवनामानि निर्दिष्टवन्तौ। तत्र ´मितानि´ जातेः देवेषु मित्रः, वरूणः,इन्द्रः,नासत्यौ च विशिष्टाः अमी देवाः आर्याणाम् एव आसन्। अतः प्रतीयते यत् आर्याः एव केचन तत्रापि अवसन्।

अस्य शिलालेखस्य समयः १४०० ई.पू. विद्यते। आर्याः प्राग् आर्यावर्त्ते स्वधर्मवेदान् च स्थिरीकृत्य कुत्रचिद् गच्छेयुः। अतः १४०० ई.पूर्वतः प्रागेव वैदिकसभ्यताया उदयः चिन्तनीयः। इत्थं वेदानां कालः २००० ई.पूर्व इति सिद्ध्यति। अयं कालनिश्चयः तिलकेन प्रदत्तस्य मतस्य समर्थनं करोति। वस्तुतस्तु इदं सर्वम् अधुनापि नैव स्पष्टम् अस्ति।

केवलमाशास्यते यत् कदाचिदपि जाते निश्चये वेदाः पूर्वोक्तकालतः अपि पूर्वकालिका एव इति सिद्धं भविष्यति एव।



### पाठगतप्रश्नाः

२१. सप्ताधिकैकोनविंशतिशततमेशवीये(१९०७ ई.पू.)अब्दे ´बोधाज् कोड्´ नामके वर्तमानेटर्कीदेशान्तर्गते डा. हूगोविन्कलर महाभागः कुतः किं प्राप्तवान्।

२२. तेन शिलालेखेन किं ज्ञायते।

२३. टर्कीदेशे द्वयोः प्राचीनजात्योः नाम किम् आसीत्।

२४. डा. हूगोविन्कलर-महोदयेन आविष्कृतस्य शिलालेखस्य समयः कः।

२५. वेदानां कालः कः।

## २.२) अथ वेदपाठप्रकाराः

ऋक्षु प्रक्षेपप्रतिषेधाय वैदिकर्षिभिर्विविधा उपायाः परिकल्पिताः। चरणव्यूहग्रन्थे ऋचां संख्यादिकं गणयित्वा उपनिबद्धम्। तथापि समाक्षरपदप्रक्षेपो दुरवरोधः। अतो बहु विचार्य ऋषिभिर्मन्त्राणां पाठभेदाः प्रकल्पिताः। मन्त्रशुद्धिरक्षार्थम् एतादृशी चमत्कृतिः कस्यापि धर्मग्रन्थस्य पुरावृत्तपुस्तकपृष्ठेषु न



दृश्यते। साकल्येन एकादश पाठाः सन्ति। तिस्रः प्रकृतयोऽष्टौ च विकृतयः। संहितापदक्रमपाठाः प्राकृतिकाः। संहितापाठो हि योगा प्रकृतिः पदक्रमयोस्तु रूढा प्रकृतित्वम्।

कालग्रासात् प्रक्षिप्तांशानां प्रवेशः वेदमन्त्रेषु न भवतु इति धिया ऋषिभिरेव उपायाः आविष्कृताः। यथा शौनकर्षिः तदीयचरणव्यूहग्रन्थे संहितायाः सूक्तसंख्या, ऋक्संख्या, पदसंख्या किञ्च समग्रसंहितायाः अक्षरसंख्या अपि व्यरचयत्। भवतु अक्षरसंख्या पदसंख्या वा रचिता, परन्तु द्वे अक्षरे यदि परस्परं वैपरीत्येन लिख्यते तथापि अक्षरसंख्या पदसंख्या वा समाना एव भवति, तेन कः प्रतिषेधोपायः इति चेत्, तदपि ऋषिभिः समाधत्तम्। तदुपशमाय वेदमन्त्राणां भिन्नरीत्या पाठस्य रीतिः आविष्कृता। तेषामियं बुद्धिः वर्तमानान् अपि विदुषः अभिभावयति। ऋक्संहितायां यथा लिखितं तथैव सन्धि-समासादिभिः यः पाठः सः संहितापाठः। पाठस्य एकादश प्रकाराः सन्ति। तेषु त्रयः प्रकृतिपाठाः, अष्टौ विकृतिपाठाश्च। तत्र संहितापाठः, पदपाठः क्रमपाठश्च त्रयः प्रकृतिपाठाः। तत्र च संहितापाठः द्विधा योगा प्रकृतिः, अन्यौ द्वौ रूढा प्रकृतिरिति च उच्यते। अष्टौ विकृतिपाठाः हि जटा-माला-शिखा-रेखा-ध्वज-दण्ड-रथ-घनपाठाः। एषां नाम्नां प्राक् क्रमजटापाठः,क्रममालापाठः एवं सर्वत्र क्रमशब्दः वक्तव्यः। व्याडीमुनिः स्वकृतौ जटापटलाख्ये ग्रन्थे आह-

जटा-माला-शिखा-रेखा-ध्वजो दण्डो रथो घनः।

अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वाः महर्षिभिः।।इति।।

एकादशसु प्रकारेषु संहितापाठात् परं पदपाठः प्राचीनतमः। ऐतरेयारण्यके पदपाठः दृश्यते, तस्मात् ऐतरेयारण्यकात् ऋक्प्रातिशाख्यात् निरुक्ताच्च पदपाठः प्राचीनः। विकृतिपाठेषु जटादण्डौ प्रकृष्टौ, अवशिष्टानां पाठानाम् उद्भवः शिखापाठं जटापाठं च अनुसरति। माला-लेखा-रथ-ध्वजपाठानां दण्डपाठात् उत्पत्तिः भवति। घनपाठस्य उत्पत्तिः जटादण्डाभ्यां उभाभ्याम्। इदानीं वयं सर्वेषां प्रकृति-विकृतिपाठान् लक्षणमुखेन दृष्टान्तमुखेन च अवगमिष्यामः। ऋग्वेदस्य आदिमाम् ऋचम् एव दृष्टान्ततया वयं गृह्णीमः। आदिमाम् ऋचं वयं सर्वे जानीमः-

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।

होतारं रत्नधातमम्।। (ऋ.म.१.१.१)।।इति



## पाठगतप्रश्नाः

२६. विकृतिपाठाः कति के च। अष्टौ

२७. व्याडीमुनेः ग्रन्थः कः।जटापटलाख्ये ग्रन्थे

२८. घनपाठः कस्मादुत्पद्यते।जटादण्डाभ्यां उभाभ्याम्।

२९. ऋग्वेदस्य आदिमं सूक्तं किम्। अग्निसूक्तम्।



३०. अग्निसूक्तस्य एकं श्लोकं लिखत।अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।। (ऋ.म.१.१.१) ।इति

## २.२.१) संहितापाठः-

वेदे संहिताभागे यथा लिखितं, तथैव पाठः भवति चेत् स संहितापाठः। संहितापाठः - संहितायां यथावत् स्थिताया ऋचस्तथात्वेनाम्नानं संहितापाठः। विसंहितव्यस्तपदः पाठः पदपाठः। यथा

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।

होतारं रत्नधातमम्।।(ऋ.म.१.१.१)।।इति

## २.२.२) पदपाठः-

एकस्य मन्त्रस्य प्रत्येकं पदानां स्वतन्त्रतया तथा समासं विभज्य यः पाठः स पदपाठः। प्रकृतायाः ऋचः पदपाठः-

अग्निम्। ईडे। पुरः ऽहितम्। यज्ञस्य। देवम्। ऋत्विजम्।

होतारम्। रत्न ऽधातमम्।।इति।।

अस्मिन् पदपाठे पुरोहितम् तथा रत्नधातमम् इत्यनयोः स्थलयोः अवग्रहेण समासस्य व्यासः कृतः। शाकल्यर्षिः षट् ऋचः परित्यज्य अन्यासां ऋचां पदपाठं व्यरचयत्, अतः शाकल्यसंहिता इत्यपि अस्य नाम वर्तते। ताः षट् ऋचः कथं त्यक्ताः इत्यस्य कारणानि न ज्ञातानि। ऋचां मूलसंहितायां ताः ऋचः न सन्ति इत्यपि केचन मन्वन्ते।

## २.२.३) क्रमपाठः-

क्रमपाठे एकस्याः ऋचः द्वे पदे एकदा गृह्येते, तथा आदिमम् अन्तिमं च परित्यज्य मध्यस्थानि पदानि द्विवारं पठ्यन्ते।

अग्निम् ईळे। इळे पुरोहितम्। पुरोहितं यज्ञस्य।

यज्ञस्य देवम्। देवम् ऋत्विजम्। ऋत्विजम् होतारम्।

होतारम् रत्नधातमम्।।इति।।

अत्र आदिमं पदम् अग्निं तथा अन्तिमं रत्नधातमम् इति च व्यतिरिच्य अन्यानि पदानि वारद्वयं पठितानि। अनेन पाठेन मध्यस्थानां पदानां प्रक्षिप्तत्वशङ्का निरस्ता, परन्तु आदिमान्तिमयोः विकारसम्भावना वर्तत एव। एषा शङ्का जटापाठेन निरस्ता। आङ्गलभाषायां क्रमपाठः इति उच्यते।



### २.२.४) जटापाठः-

वस्त्रवयनस्य आतानप्रतानरीत्या प्रथमान्तिमपदयोः त्रिकृत्वो मध्यस्थानाञ्च षोढोच्चारणं यस्मिन् पाठे विद्यते स जटापाठः। वस्त्रवयने यथा ओतप्रोतत्वं दृश्यते तथा जटापाठे पदानि प्रायः ओतप्रोतरूपेण वर्तन्ते। अतः केचन जटापाठं इति कथयन्ति। अत्र आदिमान्तिमौ वारत्रयं तथा मध्यस्थाः वर्णाः वारषट्कम् उच्चार्यते। यथा-

अग्निम् ईळे ईळे अग्निम् अग्निम् ईळे।

ईळे पुरोहितम् पुरोहितम् ईळे ईळे पुरोहितम्।

पुरोहितम् यज्ञस्य यज्ञस्य पुरोहितम् पुरोहितम् यज्ञस्य।

यज्ञस्य देवम् देवम् यज्ञस्य यज्ञस्य देवम्.........।।इत्यादिवत्।।

### २.२.५) मालापाठः-

प्रथमतः प्रथमद्वितीयपदयोः, ततः षष्ठपञ्चमपदयोः, ततो द्वितीयतृतीयपदयोः ततः पञ्चमचतुर्थपदयोः पाठो मालापाठः। आङ्गले अयं पाठः इति उच्यते। अस्य पाठरीतिः सुकठिना। पञ्चषप्रकाराणि पुष्पाणि संगृह्य एकस्मिन् सूत्रे बध्यते चेत् यथा शोभावर्धनाय क्रमः अवश्यं ज्ञेयः, तथा कतिचन पदानि गृहीत्वा क्रमशः एव भवति अस्य पाठरीतिः। यथा-

अग्निम् ईळे ऋत्विजं देवम्।

ईळे पुरोहितं देवं यज्ञस्य पुरोहितं यज्ञस्य यज्ञस्य पुरोहितम्।

देवम् ऋत्विजम् ईळे अग्निम्।। इत्यादिवत्।।

अस्य पाठस्य विषये एकः श्लोकः-

माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा।

आवर्तन्ते त्रयस्तस्यां क्रम-व्युत्क्रम-संक्रमाः।।इत्यादिवत्।।

### २.२.६) लेखापाठः-

क्रमपाठे हि यथाक्रमं व्युत्क्रमेण वा क्वचित् पदद्वन्द्वस्य, क्वचिच्च पदत्रयस्य पाठो भवति। क्रमपाठस्य विपर्ययः अत्र दृश्यते। यथा-

अग्निम् ईळे ईळे अग्निम् अग्निम् ईळे

ईळे पुरोहितम् यज्ञस्य यज्ञस्य पुरोहितम् ईळे

ईळे पुरोहितम्, पुरोहितम् यज्ञस्य....।।इत्यादिवत्।।

लेखापाठस्य विषये अयं श्लोकः उच्यते-



क्रमाद् द्वित्रिचतुःपञ्चपदक्रममुदाहरेत्।

पृथक् पृथक् विपर्यस्य लेखामाहुः पुनः क्रमात्।।इत्यादिवत्।।

लेखापाठस्य रेखापाठ इति नामापि वर्तते।

## २.२.७) शिखापाठः-

जटानुरूप्यं दधति शिखापाठे। मध्ये मध्ये तृतीये वा षष्ठे वा नवमे वा चरणे त्रीणि त्रीणि पदानि सन्ति। अयं जटापाठवत् भवति प्रायः। यथा-

अग्निम् ईळे। ईळे अग्निम्। अग्निम् ईळे पुरोहितम्।

ईळे पुरोहितम्। पुरोहितम् ईळे। ईळे पुरोहितम् यज्ञस्य।

पुरोहितम् यज्ञस्य। यज्ञस्य पुरोहितम्। पुरोहितम् यज्ञस्य देवम्।

यज्ञस्य देवम्। देवम् यज्ञस्य। यज्ञस्य देवम् ऋत्विजम्।।

## २.२.८) ध्वजपाठः-

क्रमपाठानुरूप्येण पदषट्कमुच्चार्य व्युत्क्रमेण तदावृत्तिर्ध्वजपाठे दृश्यते।अत्र क्रमपाठवत् षट् पदानि भवन्ति, पुनः विपरीतक्रमेण षट् पदानि एवं पाठः भवति। यथा

अग्निम् ईळे ईळे पुरोहितम् पुरोहितम् यज्ञस्य।

पुरोहितम् यज्ञस्य ईळे पुरोहितम् अग्निम् ईळे।

यज्ञस्य देवम् देवम् ऋत्विजम् ऋत्विजम् होतारम्।

ऋत्विजम् होतारम् देवम् ऋत्विजम् यज्ञस्य देवम्।।इत्यादिवत्।।

## २.२.९) दण्डपाठः-

क्रमपाठानुरूप्येण एकस्मिन्नेव काले पदद्वयस्य यथाक्रमं त्रिकृत्वः उच्चारणं, द्वितीयवारे च विपरीतक्रमेण पाठो यत्र दृश्यते स दण्डपाठः। अत्र क्रमपाठस्य पदद्वयम् आदौ यथाक्रमं वारत्रयम्, तदनन्तरम् विपरीतक्रमेण पाठः। यथा

अग्निम् ईळे ईळे अग्निम् अग्निम् ईळे

ईळे पुरोहितम् पुरोहितम् ईळे अग्निम्।।इत्यादिवत्।।

दण्डपाठस्य लक्षणश्लोकस्तावत्-

क्रममुक्ता विपर्यस्य पुनश्च क्रममुत्तमम्।

अर्धर्चादेव मुक्तोयं क्रमदण्डोऽभिधीयते।।इत्यादिवत्।।



## २.२.१) रथपाठः-

क्रमपाठस्य तद्विपरीतस्य च मिश्रणेन रथपाठो भवति। एकस्य चरणस्य एकं पादं सम्पूर्णं वा चरणम् एकस्मिन् काले गृहीत्वात्र पठ्यते। क्रमपाठधारा तथा तद्विपरीतधारां दृष्ट्वा रथपाठस्य सृष्टिः। पङ्क्तेः एकांशम् अनुसृत्य तथा समग्रां पङ्क्तिम् अनुसृत्य च।

**तत्र प्रथमः प्रकारः-**

समिधाग्निम् अग्निम् समिधा।

घृतैर्बोधयेत् बोधयेत् घृतैः समिधा अग्निम्।।इति।।

**द्वितीयः प्रकारस्तावत्-**

अग्निम् ईळे यज्ञस्य देवम्।

ईळे अग्निम् देवम् यज्ञस्य।

अग्निम् ईळे ईळे पुरोहितम्।

यज्ञस्य देवम् देवम् ऋत्विजम्।।इत्यादिवत्।।

## २.२.२) घनपाठः-

अत्र हि आद्यानां चतुर्णां पदानां द्वयं द्वयं गृहीत्वा जटापाठानुसारं पठ्यते। ततश्च त्रिःकृत्वा यथाक्रमं व्युत्क्रमेण विपर्यासेन च पठ्यते। अत्र चतुर्षु पदेषु आदिमद्वयं जटापाठवत्, ततः पदत्रयं यथाक्रमं विपरीतक्रमं विपर्यस्तेन च उच्चारणं क्रियते चेत् स घनपाठः।

अग्निम् ईळे ईळे अग्निम् अग्निम् ईळे पुरोहितम्

पुरोहितम् ईळे अग्निम्, अग्निम् ईळे पुरोहितम्...इत्यादिवत्।।

अत्र उल्लिखिताः एकादश पाठाः निर्भुज-प्रतृणभेदेन द्विधा विभक्ताः। संहिताभागे यथा मन्त्राः सन्ति तदानुपूर्व्येण यः पाठः स निर्भुजपाठः, यथा संहितापाठः। तद्व्यतिक्रमेण यः पाठः स प्रतृणपाठः, यथा पद-क्रम-जटादिः।

एषां पदक्रमादीनां पाठानां फलश्रुतिः प्रशंसा च शिक्षाग्रन्थे दृश्यते। याज्ञवल्क्यशिक्षायां केषुचित् श्लोकेषु एतेषां प्रशस्तिः विहिता-

संहिता नयते सूर्यपदं च शशिनः पदम्।

क्रमश्च नय्ते सूक्ष्मं यत्तत्पदमनामयम्।।

कालिन्दी संहिता ज्ञेया पदयुक्ता सरस्वती।

क्रमेनावर्तते गङ्गा शम्भोर्वाणी तु नान्यथा।।

यथा महाह्रदं प्राप्य क्षिप्तो लोष्ट्रो विनश्यति।



एवं दुश्चरितं सर्वं वेदे त्रिवृत्ति मज्जति।।

संहितापाठेन सूर्यलोकः, पदपाठेन चन्द्रलोकः तथा क्रमपाठेन अक्षयलोकः लभ्यते। संहितापाठः कालिन्दीस्वरूपः यमुनास्वरूपो वा, पदपाठः सरस्वतीस्वरूपः, तथा क्रमपाठः गङ्गास्वरूपो भवति। संहितादिपाठपूर्वकं वेदं पठ्यते चेत् निखिलं पापं नश्यति।

## २.३) अथ ऋषिच्छन्दोदेवताविनियोगाः

प्रतिवेदं प्रतिसूक्तं प्रतिमन्त्रं च ऋषिच्छन्दोदेवताविनियोगाः वर्तन्ते। केवलं मन्त्रार्थज्ञानमेव न अस्माकम् उद्देश्यम्, अपि तु ऋषिच्छन्दोदेवतादीनां ज्ञानमपि अपेक्ष्यते। कोऽपि यदि वेदमन्त्रार्थमात्रं शिक्षते, तदेव केवलमधीते च तर्हि स मन्त्रकण्टकः इति उच्यते-

ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।

अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते।।इति।।

कोऽपि गुरुः यदि ऋषिच्छन्दोदेवताविनियोगान् न ज्ञात्वैव शिष्यान् अध्यापयति, स पापभाग् भवति। तदुक्तम्

अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।

योध्यापयेज्जपेद्वापि पापीयान् जायते तु सः।।इति।।

### २.३.१) ऋषिः-

ऋष्-धातोः इन् प्रत्यये ऋषिशब्दो निष्पन्नः। ऋष्-धातोः गमनम् अर्थः। तथाहि यास्कः-'यदेतान् तपस्यमानान् ब्रह्म स्वयम्भुः अभ्यनार्यत तदृषयो भवन्। तदृषीणामृषित्वमिति विज्ञायते।' इति। स्वयम्भु ब्रह्म स्वयमेव ऋषीणां समक्षं गतवदिति तेषाम् ऋषित्वम् इत्यर्थः। केचन दर्शनार्थकाद् ऋष्-धातोः ऋषिशब्दो निष्पन्नः इति स्वीकुर्वन्ति। तेषाम् अभिप्रायः- तपस्यमानाः ऋषयः ब्रह्मणः आशिषि वेदमन्त्रान् दृष्टवन्तः इति तेषाम् ऋषित्वम्। तथाहि यास्क आह-'ऋषिर्दर्शनात्। स्तोमान् ददर्श इति औपमन्यवः'इति। यास्कः ऋष्-धातुः दर्शनार्थकः इति स्व्यकरोत्, तथाहि - 'साक्षात्कृतधर्माणः ऋषयो बभूवुः' इति। मन्त्रदर्शनस्य मन्त्ररचयितुः च मध्ये किं पार्थक्यम् इति प्रतिपादयता यास्केन मतानि दर्शितानि। वेदः अपौरुषेयः, न केनापि वेदः रचितः। मीमांसकाः अपि स्वीकुर्वन्ति यत् पुरुषसृष्टस्य वस्तुनः नाशः ध्रुवः एवेति, वेदः अपौरुषेयः अनादिः अनन्तः पुरुषकर्तृकत्वाभावात् इति। ऋषीणां तपःफलेन एव ब्रह्मणः आशिषि वेदः तेषां हृदये स्वतः आविर्बभूव। एवञ्च यस्य ऋषेः हृदये यो मन्त्रः, सूक्तं, क्षेत्रविशेषशो वा आविर्बभूव स तन्मन्त्रस्य द्रष्टा सञ्जातः। यथा ऋग्वेदस्य आदिमसूक्तस्य द्रष्टा मधुच्छन्दा ऋषिः। एवमेव ऋग्वेदस्य गृत्समद-विश्वामित्र-वामदेव-अत्रि-भारद्वाज-वसिष्ठ-कण्वाः ऋषयो बभूवुः। युगान्ते कल्पारम्भे ऋषिभिः वेदः तपसा लभ्यते इति विषये उच्यते-

युगान्तेऽन्तर्हितान्वेदान् सेतिहासान् महर्षयः।



लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवा।।इति।।



## पाठगतप्रश्नाः

३१. मन्त्रकण्टकः क उच्यते।

३२. ऋषिशब्दः कस्मान् निष्पद्यते।

३३. कः ऋषिः।

३४. ऋग्वेदस्य ऋषयः के।

---

## २.३.२) देवता-

प्रत्येकं मन्त्रस्य वर्तते कापि देवता। तत्तन्मन्त्रेण तत्तद्देवः प्रशस्यते, आहूयते वा। देवता, देवः, देवी इत्यादयः शब्दाः प्रकाशार्थकस्य विद्-धातोः निष्पन्नः। यः स्वयं प्रकाशते, स देवः। निरुक्ते यास्कः देवशब्दनिर्वचनप्रसङ्गे आह-'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा भवति'इति। अस्यार्थः यः दाता, स्वयंप्रकाशः, स्वतेजसा अन्येषामपि प्रकाशकः स देवः इति। एवञ्च मन्त्रस्य चैतन्यमेव स देवः। यतो हि चैतन्यं स्वयं प्रकाशते, चैतन्याभासेन एव अन्यमपि वस्तु प्रकाशते। अतः सच्चिदानन्दस्वरूपः आत्मचैतन्यमेव देवतेति विद्वांसः। ऋग्वेदे अपि आम्नातम्

एकं सद्विप्रा बहुधा वदन्ति, अग्निं यमं मातरिश्वानमाहुः।इति।।

यथा एकस्यैव वायोः अग्नि-यम-मातरिश्वादिनामानि वर्तन्ते, तथैव एकस्यैव ब्रह्मणः भिन्नानि नामानि विप्रैः उच्यन्ते। वेदे बहूनां देवानां नामानि प्राप्यन्ते। यास्केन तु अग्नि-इन्द्र-सूर्याः त्रय एव देवाः स्वीक्रियन्ते। एषां विषये पूर्वमेव विस्तारेण निरूपितम्। त्रिभ्यः एव देवेभ्यः अन्ये देवाः सृष्टाः, उक्तञ्च-'तासामेव भक्तिसाहचर्याद् बहूनि नामधेयानि भवन्ति कर्मपृथक्त्वाद्वा'। इति।



## पाठगतप्रश्नाः

३५. यास्केन देवतानिर्वचनप्रसङ्गे किमुक्तम्।

३६. एकं सद्विप्राः कं बहुधा वदन्ति।

३७. यास्केन कति देवाः स्वीक्रियन्ते, के च ते।

---

## २.३.३) छन्दः

निरुक्ते ब्राह्मणग्रन्थे च छन्दःशब्दस्य बहूनि व्याख्यानानि प्राप्यन्ते। यत् पापानि आच्छादयति तत् छन्दः। तैत्तिरीयसंहितायां छन्दस उत्पत्तिविषये एषा आख्यायिका प्राप्यते यत् पुरा प्रजापतिः अग्निं ससर्ज, स अग्निः भीषणं रूपं गृहीत्वा देवान् भाययितवान्। तस्मात् आत्मानं परित्रातुं छन्दःशरीरेण देवाः अग्नेः समीपं गतवन्तः। एवं छन्दस उत्पत्तिरिति केचन। अन्ये च ऋषीणां पुरस्तात् आविर्भूतस्य मन्त्रस्य यः स्पन्दः ऋषिभिः अनुभूतः, स एव छन्दः इत्याहुः।

वेदे सप्त प्रधानानि छन्दांसि वर्तन्ते। तानि छन्दांसि गायत्री-उष्णिक्-अनुष्टुप्-बृहती-पङ्क्ती-त्रिष्टुभ्-जगत्यः। वैदिकच्छन्दः अक्षरच्छन्दनाम्ना अभिधीयते। सप्तानां छन्दसाम् अक्षराणि हि-

१)गायत्री-२४

२)उष्णिक्-२८

३)अनुष्टुप्-३२

४)बृहती-३६

५)पङ्क्ती-४०

६)त्रिष्टुप्-४४

७)जगती-४८

छन्दोबद्धानां मन्त्राणां चत्वारि पादानि भवन्ति, प्रत्येकं पादेषु समानसंख्यकानि अक्षराणि भवन्ति। यथा अनुष्टुभादिभिः चतुर्षु पादेषु साकल्येन द्वात्रिंशद् अक्षराणि भवन्ति। अतः एकस्मिन् पादे अष्टौ अक्षराणि भवन्ति। एवम् अन्येषु अपि मन्त्रेषु बोध्यम्। द्विजातिभिः गायत्रीमन्त्रः नित्यम् उच्चार्यते। गायत्रीछन्दसि अयं मन्त्रः लिखितः अस्ति। परन्तु गायत्रीमन्त्रे चतुर्विंशतिः मन्त्राः भवेयुः, परन्तु सन्ति त्रयोविंशतिः, अत अयम् अनियमः पिङ्गलर्षिणा समाधत्तः-तत्सदितुर्वरेण्यम् इत्यत्यत्र वरेण्यमिति स्थले वरेणिअम् इत्येवं पठितव्यमिति। ऋग्वेदे त्रिष्टुप्छन्दः आधिक्येन लभ्यते। अग्नेः मन्त्राः गायत्र्याम्, इन्द्रस्य च त्रिष्टुभि वर्तन्ते। ऋग्वेदस्य आदिमं सूक्तम् अग्निसूक्तं गायत्रीमन्त्रे वर्तते। अग्निमीळे पुरोहितमित्यत्र चतुर्विंशतिः मन्त्राः सन्ति।



### पाठगतप्रश्नाः

३८. कानि प्रधानानि छन्दांसि।।

३९. द्विजातिभिः नित्यम् उच्चारिते गायत्रीमन्त्रे कति अक्षराणि।

४०. गायत्रीमन्त्रं लिखत।।



## २.३.४) विनियोगः-

यज्ञकर्मणि मन्त्रस्य प्रयोगस्थलमेव विनियोगः कथ्यते। विशेषरूपेण प्रयोगः विनियोगः।'अनेन इदं तु कर्तव्यं विनियोगः प्रकीर्तितः, अस्मिन् यज्ञकर्मणि अस्य मन्त्रस्य प्रयोगः कर्तव्यः इति विनियोगः। कस्य यागस्य कः मन्त्रः प्रयोक्तव्यः तस्य विधानं सौत्रसूत्रे पठितमस्ति। सायाणाचार्यः स्वभाष्ये सौत्रसूत्रात् उद्धृतिपूर्वकं प्रतिमन्त्रस्य विनियोगं प्रदर्शितवान्। सामान्यविशेषभेदेन विनियोगः द्विविधः। समग्रसंहिता-पारायणे विनियोगः सामान्यविनियोगः कथ्यते। प्रतिसूक्तानुसारेण मन्त्रस्य आश्वालयनप्रदर्शितः विनियोगः विशेषविनियोगः कथ्यते। सूक्तानुसारेण सूक्तान्तर्गतमन्त्रानुसारेण वा विनियोगः भिन्नः भवति। य़था ऋक्संहितायाः प्रथममण्डलस्य शतोत्तरपञ्चदशतमसूक्तं सूर्यदेवम् उद्दिश्य विहितः।' चित्रं देवानामुदगादनीकम्' इति प्रथमर्चः प्रथमचरणम्। सायणाचार्येण उक्तम् यत् आश्विनशास्त्रे सूर्योदयादूर्ध्वें सौर्यानि सूक्तानि प्रशंसयनीयानि। तत्रेदं सूक्तं शंसनीयम्।सूत्रितञ्च 'चित्रं देवानां नमो मित्रस्य ' इति। सोमयागे सोमयागनिष्कासनपक्रियां स्तुत्यादिभिः कथ्यते। तत्पूर्ववर्तिदिने रात्रिभागस्य अन्तिमांशे उषाग्न्यश्वियुगलत्रयदेवतानां स्तुतिः भवति। स्तुतिः इयं प्रातरनुवाकः इति नाम्ना कथ्यते। गीतरहितस्तुतिः शस्त्रमिति कथ्यते। सोमयागस्य सप्तसंस्था। अनुष्ठानस्य प्रकारविशेषं संस्था कथ्यते। यथाक्रमेण सप्तसंस्थाः (अग्निष्टोम, अत्याग्निष्टोम, उक्थ्य, षोडशी, वाजपेयः अतिरात्र,आप्तर्याम चेति) प्रत्येकं प्रक्रियासु चत्वारि शस्त्रकीर्तनं भवति। त्रिविधप्रक्रियायाः अनन्तरम् आश्विनशस्त्रकीर्तनं करणीयम्। अस्मिन् आश्विनशस्त्रे उषाग्न्यश्वदेवानां स्तुतिः भवति। विहगकुलस्य कूजनात् पूर्वं सूर्योदयात् पूर्वं प्रातरनुनाकस्य समाप्तिः साधनीया। सूर्योदयानन्तरम् आश्विनशस्त्रे सूर्यदेवतासम्बन्धिनां सूक्तानां संकीर्तनं विहितमस्ति। तन्मध्ये सूर्यसूक्तमिदं वर्तते। आश्वलायनेन तदीयश्रौतसूक्ते ५-६१८-तमे सूत्रे विधिरियं लिखिता अस्ति। अतः परं सूर्यसूक्तगत-ऋक्सकलानां विशेषविनियोगसम्बन्धे सायणाचार्यः आह यत् शास्त्र-आदितस्त्रिस्र ऋचः सौर्यस्य पाशोर्वपा पुरोडाश हविषां क्रमेणानुवाक्याः। ततो द्वे वपापुरोडाशयोर्याज्ये इति। सूक्तस्यास्य प्रथमर्क्त्रयं यथाक्रमे सूर्यदेवतायाः उद्देश्ये वपा पुरोडाशादि हविग्रहणसमये अनुवाक्यारुपेण कीर्तनीयम्। अग्रिम-ऋक्द्वयं चतुर्थपञ्चमऋक् च यथाक्रमे पुरोडाशवपादि च यज्ञाग्नौ हविर्दानकाले याज्यरुपे पाठनीयम्। देवतायाः उद्देश्ये पुरोहितः यदा हविषः ग्रहणं करोति तदा उच्यमाना ऋक् अनुवाक्या इति कथ्यते।तदुक्तं हविर्ग्रहणावसरे उच्यमाना ऋक् अनुवाक्या इति। यज्ञाग्नौ आहुतेः अर्पनकाले उच्यमाना ऋक् यज्या। तदुक्तं हविः प्रक्षेपावसरे उच्यमाना ऋक् याज्या इति। आदौ अनुवाक्या तदनन्तरं याज्या च पठनीया। अनुवाक्या स्थित्वा याज्या च उपविष्ब्वा पठनीया। तदुक्तम् अनुवाक्या तिष्टन्नाह , आसीनो याज्यां यजति इति। हूयते इति हविः। यज्ञाग्नौ यद्दीयते तदेव हविः इति उच्यते। पशूनां मांसं ,पिष्टतण्डुलादि,पुरोडाशनामकरोटिका, सोमरसः, घृतादि सर्वं हविपदवाच्यम्।एतेषां हव्यद्रव्यानां मध्ये आज्यस्य आधिक्येन प्रचलनत्वात् परवर्तिनिकाले हविः घृतपदेन व्यवह्रियते।



## पाठगतप्रश्नाः

४१. सूर्यसूक्तस्य आदिमः मन्त्रः कः।

४२. शस्त्रं किम्।

४३. अनुवाक्या का।

४४. यज्या का।

४५. हविः किम्।

४६. हविः केन शब्देन उच्यते।



## पाठसारः

अपौरुषेयं वाक्यं वेदः इति भारतीयसिद्धान्तः। अपौरुषेयः इत्युक्ते केनचित् पुरुषेण निर्मितं वाक्यं नास्ति। तेन प्रथमतः एव वेदाः विद्यन्ते। अत एव वेदस्य कालचिन्ता तु हास्याय कल्पते। वेदादिषु भ्रमादिकं न विराजते। अत एव वेदः अपौरुषेयः इति सामर्थ्यात् अनादिकालात् एव वेदस्य विद्यमानत्वात् तत्र कालचिन्ता न सम्भवति। परन्तु पाश्चात्यानां मते तु वेदान् ऋषयः सृष्टवन्तः आसन्। तस्मात् याकोबि इत्यादयः वैदेशिकपण्डिताः वेदस्य कालनिर्णये सर्वदा तत्पराः भवन्ति। तेषां मते तु वेदः पौरुषेयः भवति। केचन भारतीयाः विद्वांसः अपि वेदस्य कालनिर्णये सदा तत्पराः दरीदृश्यन्ते। ते लोकमान्यतिलकः, बालकृष्णदीक्षितः इत्यादयः भवन्ति। ततः वेदपाठप्रकाराः प्रोच्यन्ते। साकल्येन एकादश पाठाः सन्ति। तिस्रः प्रकृतयोऽष्टौ च विकृतयः। संहितापदक्रमपाठाः प्राकृतिकाः। अष्टौ विकृतिपाठाः हि जटा-माला-शिखा-रेखा-ध्वज-दण्ड-रथ-घनपाठाः। मन्त्रादिना एकां देवताम् उद्दिश्य स्तुतिः क्रियते। पुनश्च वेदस्य नित्यत्वे अपि कश्चित् स्मर्ता तु आवश्यकः भवति। तस्मात् प्रतिसूक्तं कश्चित् ऋषिः, काचित् देवता, किमपि च्छन्दः स्युः एव। यथा- अग्निसूक्तस्य देवता- अग्निः , ऋषिः- मधुच्छन्दा, च्छन्दः जगती चेति वर्तते। एवञ्च पाठेऽस्मिन् ऋषिदेवताच्छन्दविनियोगः चर्चितः वर्तते।



## पाठान्तप्रश्नाः

१. संहितापाठं व्याख्यात।

२. घनपाठं व्याख्यात।

३. वेदपाठस्य के प्रकाराः।

४. ऋषिस्वरूपं व्याख्यात।

५. देवतास्वरूपं लिखत।



६. छन्दसः उत्पत्तिविषये का आख्यायिका।

७. गायत्रीमन्त्रे अक्षरविषये पिङ्गलेन किमुच्यते।



## पाठगतप्रश्नानामुत्तराणि

**वेदाविर्भावकालः**

१. भारतीयविदुषां नये।

२. वेदान् अपौरुषेयान् मन्यन्ते।

३. पाश्चात्याः विद्वांसः यथाबुद्धिवैभवं वेदरचनाकालं निर्धारयन्ति।

**डॉ. मैक्समूलरस्य मतम्**

४. ऋग्वेदः।

५. ऋग्वेदस्य रचना ११५० ई.पू.समीपे एव जाता

६. चत्वारि युगानि सन्ति। छन्दोयुगम्, मन्त्रयुगम्, ब्रह्मणयुगम्, सूत्रयुगं चेति ते त्रयः युगाः।

७. ३२०० वर्षाणि जातानि।

**वेदस्थितेन ज्यौतिषतत्त्वाधारेण मतम्**

८. षट् ऋतवः सन्ति।

९. मीनसङ्क्रान्तिकालतः आरभते।

१०. मीनसङ्क्रान्तिः पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति।

११. २७ नक्षत्रेषु विभजन्ति।

१२. ७२ वर्षेषु।

१३. ईशवीयपूर्व(२५००)शतकम्।

**शङ्करबालकृष्णदीक्षितस्य मतम्**

१४. शतपथब्राह्मणात्।

१५. वैदिकेषु संहितासु।

१६. पूर्वदिग्बिन्दुतः ईषद् उत्तरस्यां दिशि।

**बालगङ्गाधरतिलकस्य मतम्**

१७. फाल्गुनी पूर्णिमा।

१८. फाल्गुनी पूर्णिमा।

१९. चतुर्विंशतिवर्षाणि।

२०. अदितिकालः,मृगशिरःकालः,कृत्तिकाकालः,अन्तिमः कालः चेति चत्वारः कालाः।



### शिलालेखः

२१. वर्तमानटर्कीदेशान्तर्गते खननकार्ये प्राचीनम् एकं शिलालेखं प्राप्तवान्।

२२. पश्चिम-एशियावयवभूते तत्र टर्कीदेशे द्वयोः कयोश्चित् प्राचीनजात्योः निवासस्थानम् आसीत्।

२३. ´हित्तिति´ इति ´मितानि´ इति च।

२४. ईशवीयपूर्व(१९०७)शतकम्।

२५. ईशवीयपूर्व(२०००)शतकम्।

### वेदपाठप्रकाराः

२६. अष्टौ

२७. जटापटलाख्ये ग्रन्थे

२८. जटादण्डाभ्यां उभाभ्याम्।

२९. अग्निसूक्तम्।

३०. अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।।(ऋ.म.१.१.१) ।इति

### ऋषिः

३१. ऋषिच्छन्दोदेवतादीनां ज्ञानं विना यदि वेदमन्त्रार्थमात्रं कोपि शिक्षते

३२. ऋष्-धातोः इन् प्रत्यये ऋषिशब्दो निष्पन्नः

३३. तपःफलेन एव ब्रह्मणः आशिषि वेदः स्वतः यस्य हृदि आविर्भवति, स ऋषिः

३४. गृत्समद-विश्वामित्र-वामदेव-अत्रि-भारद्वाज-वसिष्ठ-कण्वाः ऋषयो बभूवुः

### देवता

३५. देवो दानाद्वा दीपनाद्वा द्योतनाद्वा भवति'इतिआत्मानम्

३६. त्रयः

३७. अग्नि-इन्द्र-सूर्याः

### छन्दः

३८. १)गायत्री-२४, २)उष्णिक्-२८, ३)अनुष्टुप्-३२, ४)बृहती-३६, ५)पङ्क्ती-४०, ६)त्रिष्टुप्-४४, ७)जगती-४८

३९. २३

४०. ॐ भूर्भुवः स्वः तत्सदितुर्वरेण्यं, भर्गो देवस्य धीमहि, धीयो यो नः प्रचोदयात्।

### विनियोगः

४१. चित्रं देवानामुदगादनीकम्' इति

४२. गीतरहितस्तुतिः

४३. देवतायाः उद्देश्येन पुरोहितः यदा हविषः ग्रहणं करोति तदा उच्यमाना ऋक् अनुवाक्या कथ्यते



४४. यज्ञाग्नौ आहुतेः अर्पनकाले उच्यमाना ऋक् यज्या

४५. यज्ञाग्नौ यद्दीयते तदेव हविः इति उच्यते

४६. हविः घृतपदेन व्यवह्रियते।।

## ॥ इति द्वितीयः पाठः ॥

## ३

# वेदभाष्यकाराः

## प्रस्तावना

वेदस्य अर्थः न तावत् अतीव सुगमः। तथा च वैदिकसाहित्ये या भाषा व्यवहृता वर्तते सा भाषा अस्माकं संस्कृतभाषातः भिन्ना अपि वर्तते। अतः बहुभिः आचार्यैः वेदानाम् अर्थं प्रतिपादयितुं नैकानि भाष्याणि कृतानि वर्तन्ते। तेषु वेदभाष्यकृत्सु स्कन्दस्वामि-नारायण-उद्गीथ-माधवभट्ट-वेङ्कटमाधव-धानुष्कयज्व-आनन्दतीर्थ-आत्मानन्द-सायणप्रभृतयः भाष्यकाराः सुप्रसिद्धाः सन्ति सर्वत्र। अस्मिन् पाठे वेदस्य बहूनां भाष्यकाराणां विषये भवन्तः अवगमिष्यन्ति। तत्र आदिमे भागे ऋग्वेदस्य भाष्यकाराणां विषये, तथा मध्ये शुक्लयजुर्वेदस्य अन्ते च सामवेदीयानां भाष्यकाराणां विषये आलोचना विहिता।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- ऋग्वेदस्य भाष्यकाराणां विषये ज्ञास्यति।
- शुक्लयजुर्वेदभाष्यकाराणां परिचयं प्राप्तुं शक्नुयात्।
- तेषां देशकालकृतिविषये ज्ञातुं प्रभवेत्।
- ऋग्वेदादिकम् अवलम्ब्य लघुप्रबन्धं रचयितुं शक्नुयात्।

## ३.१) ऋग्वेदभाष्यकाराः

स्कन्दस्वामी ऋग्वेदस्य सुविस्तृतं भाष्यं कृतवान्। सः निरुक्तस्य अपि टीकां विरचितवान्। अयमेव सर्वप्रथमम् ऋग्वेदसंहितायाः भाष्यं विरचितवान्। इदं च भाष्यं वैदिकसाहित्ये अतीव आदरणीयमस्ति। अयं ग्रन्थकारः अत्यन्तं पुरातनः। इदं भाष्यं सुष्ठुविषयप्रतिपादकत्वात् जनैः समाद्रियते श्लाघ्यते च। स्कन्दस्वामी प्रतिभावान् प्रभाववान् च विद्वान् आसीत्। स्कन्दस्वामिनः जन्म गुर्जरप्रदेशस्य 'वलभी' इत्याख्यनगरे अभवत्। इदं च नगरं विद्यापीठतया प्रदेशस्य राजधानीस्वरूपम् आसीत्। अस्य पितुः नाम भर्तृध्रुवः आसीत्। ऋग्वेदभाष्यस्य प्रथमाष्टकस्य अन्ते भाष्यकारः स्वयम् अस्य चर्चाम् कृतवान्-

**'वलभीविनिवासस्येतामृगर्थागमसंहृतिम्।<br>भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथा स्मृतिः॥'**



### ३.१.१) स्कन्दस्वामी

आचार्यस्य स्कन्दस्वामिनः कालः कः आसीत् अस्मिन् विषये निश्चयेन वक्तुं न शक्यते। परवर्त्तिषु ग्रन्थेषु अस्य नामोल्लेखेन अस्य आविर्भावकालः सूचितो भवति। तेन अयं शतपथब्राह्मणस्य विख्यातो भाष्यकारः हरिस्वामिनः गुरुः आसीत्। अतः अस्य समयः सप्तमशतकमिति निश्चित्य वक्तुं शक्यते।

ऋग्वेदे स्कन्दस्वामी सुविस्तृतं विलक्षणं भाष्यं कृतवान्। अस्मिन् भाष्ये प्रत्येकं सूक्ताणाम् आरम्भे तस्य सूक्तस्य ऋषेः देवस्य च उल्लेखः वर्त्तते। तद्बोधकाः प्राचीनानाम् अनुक्रमणिग्रन्थानां श्लोकाः अपि उद्धृताः वर्तन्ते। निघण्टुनिरुक्तप्रभृतिभ्यः वैदिकार्थस्य उपबोधकेभ्यः ग्रन्थेभ्यः उपयुक्तं प्रमाणम् अपि तत्रैव सङ्कलितम् अस्ति। भाष्यमिदम् अतीव सरलम् अल्पाक्षरं च अस्ति। अत्र संक्षेपेण एव व्याकरण-विषयकतथ्यानाम् उल्लेखः अस्ति। सायणभाष्यस्य प्रथमाष्टक इव व्याकरणस्य अतिविस्तरेण प्रदर्शनम् अत्र नास्ति। सायणकृतस्य ऋग्भाष्यस्य उपरि स्कन्दस्वामिनः भाष्यस्य स्पष्टतः प्रभावः परिलक्षितः भवति। अस्य अनेकानि उदाहरणानि सन्ति। स्कन्दस्वामिनः भाष्यम् ऋग्वेदस्य चतुर्थाष्टकपर्यन्तम् एव समुपलब्धं भवति। शेषार्धस्य सम्पूर्त्तिः अन्येन आचार्यद्वयेन कृता अस्ति। यस्य वर्णनम् अग्रे भविष्यति। अनन्तशयनग्रन्थावल्याम् अस्य भाष्यस्य अधुना प्रकाशनं क्रमशः समारब्धम् अभवत्।



## पाठगतप्रश्नाः

१. भाष्यकृतां केषाञ्चन विदुषां नामानि लिखत।
२. स्कन्दस्वामी कां टीकां लिखितवान्।
३. ऋग्वेदसंहितायाः सर्वप्रथमभाष्यम् अधुना कस्य उपलभ्यते।
४. स्कन्दस्वामिनः जन्म कुत्र जातम्।
५. स्कन्दस्वामिनः पितुः नाम किम्।
६. हरिस्वामिनः गुरुः कः।
७. शतपथब्राह्मणस्य विख्यातः भाष्यकारः कः।
८. स्कन्दस्वामी कस्य सुविस्तृतं भाष्यं विरचितवान्।

### ३.१.२) नारायणः

ऋग्वेदभाष्ये वेङ्कटमाधवेन लिखितमस्ति-

**"स्कन्दस्वामी नारायण उद्गीथ इति ते क्रमात्।**



**चक्रुः सहैकमृग्भाष्यं पदवाक्यर्थगोचरम्"॥**

अनेन ज्ञातो भवति यत् नारायणः उद्गीथः च स्कन्दस्वामिनः समये एव आस्ताम्। नारायणः ऋग्वेदभाष्यरचनायां स्कन्दस्वामिनः साहाय्यम् अकरोत् इत्येतद् वेङ्कटमाधवः कथयति। उद्गीथस्योल्लेखं सायणः आत्मानन्दश्च च कृतवन्तौ। तदीया भाष्यशैली स्कन्दस्वामिभाष्यशैलीव अस्ति। श्लोकक्रमाद् शब्देन च अनुमीयते यद् ऋग्वेदस्य मध्यभागे नारायणः स्वभाष्यं लिखितवान्। केचन विद्वांसः सामभाष्यकर्तुः माधवस्य पितरं नारायणं तथा ऋग्वेदभाष्यकर्त्तारं नारायणमेकमेव कल्पयन्ति। किञ्चास्याद्यावधि न किमपि सुस्पष्टप्रमाणं समुपलब्धं भवति। अस्याऽपि समयः विक्रमस्य सप्तमशताब्द्याम् एव प्रामाणितो भवति।

##  पाठगतप्रश्नाः

९. नारायाणः उद्गीतः च कस्य समये आस्ताम्।

१०. नारायणः ऋग्वेदभाष्ये स्कन्दस्वामिनं प्रति साहाय्यम् अकरोत् इत्येतद् कस्य मतमस्ति।

११. नारायणः कस्य समये आसीत्।

## ३.१.३) उद्गीथः

वेङ्कटमाधवस्य कथानुसारेण ज्ञायते यद् उद्गीथः स्कन्दस्वामिनं प्रति ऋग्भाष्यस्य लेखने साहाय्यं कृतवान्। अयं हि महापुरुषः ऋग्वेदस्य अन्तिमभागस्य भाष्यम् प्रणीतवान्। प्रत्येकाध्यायस्य परिसमाप्तौ तेन स्वविषये लिखितम् - 'वनवासीविनिर्गताचार्यस्य उद्गीथस्य कृता ऋग्भाष्ये.......अध्यायः समाप्तः' अनेन कथनेन उद्गीथाचार्यस्य वनवासिना सह कश्चित् सम्बन्धः आसीत् इति प्रतीयते। प्राचीनकाले आधुनिककर्णाटकस्य पश्चिमभूखण्डः 'वनवासीप्रान्तः' इति नाम्ना ख्यातः आसीत्। अतः विचार्यते - उद्गीथाचार्यः अस्यैव प्रान्तस्य निवासी आसीत् इति अनुमीयते। अस्य महापुरुषस्य विषये इतः अधिकं न किमपि ज्ञायते।

सायणः आत्मानन्दः च उद्गीथस्य नामोल्लेखं स्वभाष्ये अकुरुताम्। तदीया भाष्यशैल्यपि स्कन्दस्वामीभाष्यशैली इवाऽस्ति। अस्यापि प्रभावः सायणभाष्योपरि स्पष्टतः परिलक्षितो भवति। सायणः ऋग्वेदस्य अस्मिन् मन्त्रभाष्ये (१०/४६/५) उद्गीथस्य व्याख्यायाः उल्लेखं कृतवान्। तेन उद्गीथः सायणात् पूर्ववर्ती भाष्यकारः अस्ति इति ज्ञायते। इयं व्याख्या उद्गीथभाष्ये उपलभ्यते। भाष्यमिदम् ऋग्वेदस्य दशममण्डलस्य पञ्चमसूक्तात् आरभ्यः त्र्यशीतितमस्य सूक्तस्य पञ्चममन्त्रपर्यन्तं समुपलभ्यते। पञ्चत्रिंशदधिकोनविंशतितमे ख्रीष्टाब्दे लाहौरनगरस्य डी.ए.वी. महाविद्यालयस्य शोधविभागः अस्य भाष्यस्य प्रारम्भिकार्द्धभागं प्रकाशितवान्। अन्तिमः अर्द्धभागः इदानीम् अपि अमुद्रितः एवाऽस्ति। सायणभाष्येण सह उद्गीथभाष्यस्य यदि तुलना क्रियते तदा ज्ञायते यत् सायणः भाष्यस्य लेखनाय



उद्गीथभाष्ये स्थितानां विपुलसाधनानां साधु उपयोगं कृत्वा एव स्वभाष्यं रचितवान्। अत एव तिलकवैदिकसंशोधनमण्डले प्रकाशितस्य सायणभाष्यस्य त्रुटीणां सन्दिग्धपाठानां वा संशोधनाय उद्गीथभाष्यादेव साहाय्यं स्वीकृतम्। एवं प्रसिद्धस्य सायणभाष्यस्य पाठसंशोधनार्थम् अपि अस्य भाष्यस्य अतीव महत्त्वम् अस्ति।



## पाठगतप्रश्नाः

१२. ऋग्वेदस्य अन्तिमभागस्य भाष्यं कः रचितवान्।

१३. प्राचीनकाले आधुनिककर्णाटकस्य प्रतीच्यभूखण्डः केन नाम्ना ख्यातः आसीत्।

१४. उद्गीथाचार्यः कस्य प्रान्तस्य प्रायः निवासी इति चिन्त्यते।

१५. पञ्चत्रिंशदधिकोनविंशतितमे ख्रीष्टाब्दे लाहौरनगरस्य डी.ए.वी. महाविद्यालयस्य शोधितविभागः कस्य भाष्यस्य प्रारम्भिकार्द्धभागं प्रकाशितवान्।

---

### ३.१.४) माधवभट्टः

इतिहासकाराः माधव-नामधेयानां चतुर्णां भाष्यकाराणां नामोल्लेखं कुर्वन्ति। तेषु एकः सामवेदसंहितायां किञ्च अन्ये त्रयः ऋग्वेदे भाष्यं लिखितवन्तः। केषाञ्चित् मते माधवो नाम कोऽपि भाष्यकारः नास्ति। सायणः अथवा वेङ्कट एव 'माधवः' इत्यनेन नाम्ना ख्यातः आसीत्। अन्येषां मते माधवः सायणात् वेङ्कटाच्च भिन्नः। माधवस्य ऋग्वेदे विलक्षणं पाण्डित्यं दृश्यते। सायणो वेङ्कटश्चोभौ माधवस्य भाष्यम् अनुसृतवन्तौ। अन्यः अप्येकः माधवोऽस्ति। यस्य ऋग्वेदप्रथमाष्टकस्य टीका सम्प्रत्येव मद्रासविश्वविद्यालयतः प्रकाशिता। अतीव सारगर्भिता इयम् एका न तथा विस्तृता। तथापि मन्त्राणाम् अर्थावबोधने नितान्तं महत्त्वपूर्णा अस्तीयं टीका। पण्डितसाम्बशिवशास्त्री वेङ्कटमाधवस्य जन्म द्वादशशतमेशवीयाब्दे अभूदिति मन्यते। वेङ्कटस्य भाष्यमतिसंक्षिप्तमस्ति। सः पर्यायवाचिपदानि उपस्थाप्य मन्त्रेण सह अर्थं च संग्रहीतुं प्रभूतं प्रयत्नं कृतवान्।

माधवभट्टोऽयं ऋग्वेदस्य महान् विद्वान् आसीत् इत्यत्र नास्ति कोऽपि सन्देहावसरः। अस्याः टीकायाः लेखनात् पूर्वमेव स एकादशानुक्रमणीः अलिखत्। यासु प्रत्येका अनुक्रमणी कोषवत् स्थित्वा ऋग्वेदस्य शब्दान् अर्थान् च प्रकटयितुं समर्थाऽस्ति। एतासु उपलब्धासु अनुक्रमणीषु द्वौ एवानुक्रमण्यौ प्रकाशितौ स्तः। ते अनुक्रमण्यौ नामानुक्रमणी आख्यातानुक्रमणी च द्वे भवतः। एतयोः अध्ययनेन इत्थम् अनुमातुं शक्यते यद् अत्र ऋग्वेदस्य नामधात्वोरेकत्र संग्रहः अस्ति। किञ्च अधिकाः अपि अतिमहत्त्वपूर्णानुक्रमण्यः-निर्वचनानुक्रमण-स्वरानुक्रमणी-छन्दानुक्रमणीप्रभृतयः अद्याऽपि न समुपलभ्यन्ते। एतासु अनुक्रमणीषु सर्वाधिकमहत्त्वपूर्णा अनुक्रमणी 'स्वरानुक्रमणी अप्युपलब्धा' नास्ति। अनेन ग्रन्थेन वैदिकस्वरस्य यज्ज्ञानं भवितुमर्हति तत्तु अन्यासु टीकासु भवितुं नार्हति। अस्य



वैशिष्ट्यस्य सङ्केतः वेदमर्मज्ञाः विद्वांसः प्रथममेव देवराजयज्वानः निघण्टुनिर्वचनाद् प्राप्तवन्तः। अनेन प्रतीतो भवति यद्देवराजयज्वा माधवेन सह भ्रान्तिशून्यतया परिचितो नासीत्। निजग्रन्थस्य प्रस्तावनायाम् असौ वेङ्कटमाधवस्य सङ्केतं कृतवान्। एतद् भवितुमर्हति यत् एष माधवकथनेन वेङ्कटमाधवम् एव अभिप्रैति। अस्य ग्रन्थस्य अनुशीलनेन ज्ञायते यत् माधवेन निर्दिष्टेषु विषयेषु एकोऽपि निर्देशः वेङ्कटमाधवस्य ग्रन्थे न उपलभ्यते। अपि च कतिपयाः निर्देशाः सायणमाधवस्य बृहद्भाष्ये एव मिलन्ति। ग्रन्थोऽयं तस्य स्वकीयरचना नास्ति। यदि अयं समग्रग्रन्थः समुपलब्धो भवेत् तर्हि देवराजयज्वनः सर्वे निर्देशाः अस्य अभिनवमाधवस्य ग्रन्थे एव मिलितुं शक्यन्ते। ग्रन्थस्यास्य यावदंशः समुपलब्धः अभवत् तस्मिन् भागेऽर्द्धाधिकनिर्देशाः मिलन्ति एव। तेनायं माधवो वेङ्कटमाधवाद्भिन्नः एवाऽस्तीति प्रमाणितः अभवत्।



## पाठगतप्रश्नाः

१६. इतिहासकाराः केषां चतुर्णां भाष्यकाराणां नामोल्लेखं कुर्वन्ति।

१७. माधवस्य कुत्र विलक्षणं पाण्डित्यं दृश्यते।

१८. कौ द्वौ माधवभाष्यस्य अनुसरणं कृतवन्तौ।

---

### ३.१.५) वेङ्कटमाधवः

वेङ्कटमाधवः सम्पूर्ण-ऋक्संहितायाः उपरि स्वभाष्यं प्रणीतवान्। कतिपयैः आलोचकैः अनुमीयते यद् अयं विद्वान् ऋक्संहितायाः उपरि भाष्यद्वयं लिखितवान्। अयं वेङ्कटमाधवः स्वरचितस्य प्रथमभाष्यस्य अन्तिमे भागे स्ववंशपरिचयं प्रदत्तवान्। तदनुसारेण अयं वेङ्कटमाधवः वसिष्ठगोत्रे जन्म लब्धवान्। अस्य विदुषः पूर्वजाः आन्ध्रप्रदेशस्थितस्य दक्षिणापथीयचोलदेशे अवसन्। अस्य पिता वेङ्कटाचार्यः माता च सुन्दरीदेवी आसीत्। अस्य मातृगोत्रः अपि वसिष्ठः आसीत्। अस्य एकः सङ्कर्षणाख्यः अनुजः अपि आसीत्। अस्य वेङ्कटमाधवस्य वेङ्कटगोविन्दाख्यौ द्वौ पुत्रौ आस्ताम्। अस्य कालनिर्णयार्थम् नैके उपायाः सन्ति यैः अस्य समयः विशेषरूपेण निर्णेतुं शक्यते।

माधवस्य भाष्यम् अत्यन्तसंक्षिप्तम् अस्ति। '**वर्जयन् शब्दविस्तारं शब्दैः कतिपयैरिति**।' इति लिखित्वा तथ्यम् इदं सः स्वयं स्वीकृतवान्। भाष्ये अस्मिन् केवलं मन्त्रपदानाम् एव व्याख्या अस्ति। भाष्यस्य संक्षेपार्थं भाष्यकारः मूलपदानां समावेशम् अत्यल्पमेव अकरोत्। अस्य भाष्यस्य अध्ययनेन मन्त्राणाम् अर्थः सरलतया एव ज्ञातः भवितुम् अर्हति। स्कन्दस्वामिनः भाष्यस्य अपेक्षया अयम् भाष्यः अतिसंक्षिप्तः अस्ति। व्याकरणजन्यतथ्यानां निर्देशः तु अस्मिन् भाष्ये नास्ति एव। प्रायः सर्वत्र ब्राह्मणग्रन्थानां प्रामाण्यं सुष्ठुतया उल्लिखितम् अस्ति। येन माधवस्य ब्राह्मणग्रन्थेषु विशेषव्युत्पत्तिः प्रतीता



भवति। माधवः उक्तवान् यत् वेदानां गूढार्थस्य बोधार्थं ब्राह्मणग्रन्थाः नितान्तम् उपयोगिनः सन्ति। अतः तस्य कथनमस्ति-

**'संहितायास्तुरीयांशं विजानन्त्यधुनातनाः।**
**निरुक्तव्याकरणयोरासीत् येषां परिश्रमः॥**
**अथ ये ब्राह्मणार्थानां विवेक्तारः कृतश्रमाः।**
**शब्दरीतिं विजानन्ति ते सर्वं कथयन्त्यपि॥' इति**

माधवाचार्यस्य इयमेव आस्था अस्ति ब्राह्मणग्रन्थान् प्रति। एवमिदं भाष्यं ब्राह्मणानाम् अनुकूलम् अस्ति। दिल्लीनगरीतः मोतीलालबनारसीदासः इदं भाष्यं प्रकाशितवान्। अस्य भाष्यस्य सम्पादकः डा लक्ष्मणस्वरूपः अस्ति।



## पाठगतप्रश्नाः

१९. वेङ्कटमाधवः कस्याः संहितायाः स्वभाष्यं प्रणीतवान्।
२०. वेङ्कटमाधवाचार्यः कस्मिन् गोत्रे जन्मग्रहणं कृतवान्।
२१. वेङ्कटमाधवस्य पितुः नाम किम्।
२२. वेङ्कटमाधवस्य मातुः नाम किम्।
२३. वेङ्कटमाधवस्य अनुजः कः आसीत्।
२४. वेङ्कटमाधवस्य कौ द्वौ पुत्रौ आस्ताम्।

### ३.१.६) आनन्दतीर्थः

आनन्दतीर्थः एव 'मध्व' इत्यनेन नाम्ना सुप्रसिद्धः आसीत्। अयं मध्वः स एव यः द्वैतवादस्य प्रवर्तनम् कृतवान्। एष बहून् ग्रन्थान् व्यरचयत्। अयम् आनन्दतीर्थः कतिपयानां वैदिकमन्त्रानां व्याख्यानं च अकरोत्। व्याख्यानमिदं छन्दोबद्धम् अस्ति। ऋग्वेदप्रथममण्डलस्य कतिपयानां मन्त्राणाम् उपरि एव इयं व्याख्याऽस्ति। अस्मिन् सन्दर्भे राघवेन्द्रयतेः कथनमिदं यथार्थरूपेण प्रमाणितः अस्ति- ‘ऋक्शाखागतैकोत्तरसहस्रसूक्तमध्ये कानिचित् चत्वारिंशत् सूक्तानि भगवत्पादैः........व्याख्यातानि।’

श्रीमद्भगवद्गीतायाम् आत्मविषये श्रीकृष्णस्य कथनमिदमस्ति- ‘वेदैश्च सर्वैरहमेव वेद्यः’ अर्थात् सर्वे वेदाः ममैव प्रतिपादनं कुर्वन्ति। एतेन हि वेदेषु सर्वत्र नारायणस्य एव प्रतिपादनम् अस्ति इति यत् आनन्दतीर्थाचार्यस्य मतमस्ति तत् सुष्ठु प्रतिपादितं भवति। स्वभाष्यस्य आरम्भे आनन्दतीर्थाचार्यः उक्तवान्-

**'स पूर्णत्वात् पुमान् नाम पौरुषे सूक्त ईरितः।**



**स एवाखिलवेदार्थः सर्वशास्त्रार्थं एव च॥'**

अर्थात् नारायणः पूर्णपुरुषोऽस्ति। अतः पुरुषसूक्ते- 'सहस्रशीर्षा पुरुषः' इत्यादौ ऋचि 'स एव' पुरुषपदेन अभिहितोऽस्ति। समस्तवेदानां शास्त्राणाम् च अभिप्रायः तस्यैव पूर्णपुरुषस्य प्रतिपादनम् अस्ति। अनया दृष्ट्यैव वैष्णवाचार्येण आनन्दतीर्थेन ऋङ्मन्त्राणाम् अर्थः कृतः। जयतीर्थस्य कथनानुसारेण भाष्येऽस्मिन् आधिभौतिकाधिदैविकयोः अर्थस्यातिरिक्तः आध्यात्मिकस्य अर्थस्याऽपि सुष्ठु प्रतिपादनमस्ति- ऋगर्थश्च त्रिविधो भवति। एकस्तावत् प्रसिद्धाग्निरूपः, अपरस्तदनन्तर्गतेश्वरलक्षणः, अन्योऽध्यात्मरूपः, तत्त्रितयपरश्चेदं भाष्यम्।' विलक्षणमिदम् ऋग्वेदस्य माध्वभाष्यम्। द्वैतवादिषु अतीव प्रसिद्धमस्ति भाष्यमिदम्। अस्य मध्यभागस्य रचनाकालात् त्रिंशद्वर्षाभ्यन्तरे एव प्रसिद्धमध्वाचार्यः जयतीर्थः अस्य टीकां विरचितवान्। जयतीर्थस्य टीकायाः विवृतिं १७१८ विक्रमाब्दे नरसिंहः लिखितवान्। नारायणेनापि अपरा विवृतिः 'भावरत्नप्रकाशिका' - इति नाम्ना लिखिता अस्ति। आनन्दतीर्थस्य आविर्भावकालः विक्रमस्य पञ्चपञ्चाशदधिकद्वादशाब्दतः विक्रमस्य पञ्चत्रिंशदधिकत्रयोदशाब्दपर्यन्तं (१२५५- १३३५) स्वीकर्तुं शक्यते। श्रुयते यद् आनन्दतीर्थः अयम् अशीतिवर्षपर्यन्तं सुखम् अनुभूय परलोकम् अगमत्।



## पाठगतप्रश्नाः

२५. आनन्दतीर्थः केन नाम्ना सुप्रसिद्धः आसीत्।
२६. आनन्दतीर्थस्य व्याख्यानमिदं कीदृशम् अस्ति।
२७. 'वेदैश्च सर्वैरहमेव वेद्यः' वचनमिदं कुत्र उपलभ्यते।
२८. आनन्दतीर्थाचार्यः कस्य सम्प्रदायस्य अस्ति।
२९. व्याख्याकारः नारायणः कः।
३०. मध्वः द्वैतवादस्य प्रवर्तनम् कृतवान् न वा।
३१. मध्वभाष्यं कस्य वेदस्य उपरि वर्तते।
३२. जयतीर्थस्य टीकायाः विवृतिं कः कदा कृतवान्।
३३. आनन्दतीर्थस्य आविर्भावकालः कः।

## ३.१.७) सायणाचार्यः

आचार्यसायणः विजयनगरसंस्थापकस्य महाराजबुक्कस्य महाराजहरिहरस्य च अमात्यः सेनानीः च आसीत्। सायणो वैदिकसम्प्रदायस्य यथार्थः ज्ञाता आसीत्। तस्मात् तदीयं वेदभाष्यं वेदार्थस्य सर्वेषु भाष्येषु श्रेष्ठं भाष्यम् अस्ति। सः सायणाचार्यः दुर्गमे तस्मिन् वेददुर्गे सरलतया एव वेदार्थस्य जिज्ञासुं प्रवेशयति।



महाराजस्य बुक्कस्य प्रधानम् मन्त्रिपदम् सायणाचार्यः १३६४ ख्रीष्टाब्दतः १३७८ ख्रीष्टाब्दपर्यन्तम् अलंकृतवान्। तदनन्तरं सः १३७९ ख्रीष्टाब्दतः १३८७ ख्रीष्टाब्दम् इति मृत्युपर्यन्तं महाराजस्य हरिहरस्य मन्त्रिपदम् अलङ्कृतवान्। अतः ख्रीष्टस्य चतुर्दशशताब्देः उत्तरार्द्धः एव सायणस्य भाष्यस्य रचनाकालः आसीत् इति कल्पयितुं शक्यते। सायणाचार्यस्य ज्येष्ठभ्राता आसीत् माधवाचार्यः। माधवाचार्यः भ्रातरं सायणाचार्यं व्याख्याकार्ये प्रवृत्त्यर्थं प्रेरितवान्। भ्रात्रा प्रेरितः एव अयं सायणाचार्यः व्याख्याकार्ये प्रवृत्तः जातः। तेन भाष्यम् इदं माधवीयनाम्ना विश्वप्रसिद्धम् अभवत्।



## पाठगतप्रश्नाः

३४. आचार्यः सायणः कयोः राज्ञोः अमात्यः सेनानीः च आसीत्।

३५. आचार्यसायणस्य किं भाष्यमस्ति।

३६. महाराजस्य बुक्कस्य प्रधानम् मन्त्रिपदम् सायणाचार्यः कदा आरभ्य कदा पर्यन्तम् अलंकृतवान्।

३७. सायणभाष्यस्य रचनाकालः कः।

३८. सायणाचार्यस्य भ्रातुः नाम किम्।

३९. महाराजस्य हरिहरस्य मन्त्रिपदं कदा सायणाचार्यः अलंकृतवान्।

## ३.२) सामभाष्यकाराः

### ३.२.१) माधवः

अयं माधवः सामसंहितायाः प्रथमभाष्यकारः प्रतीतः भवति। सः सामवेदस्य उभयोः खण्डयोः - छन्दार्चिकोत्तरार्चिकयोः उपरि भाष्यं निर्मितवान्। अस्य भाष्यस्य नाम 'विवरणम्' अस्ति। छन्दार्चिकभाष्यस्य नाम 'छन्दसिकाविवरणम्' तथा उत्तरार्चिकभाष्यस्य नाम 'उत्तरविवरणम्' अस्ति। अद्यावधि इदं भाष्यम् अमुद्रितावस्थायाम् एवास्ति। सत्यव्रतसामश्रयीमहोदयः इदं भाष्यम् अन्विष्टवान्। सः सर्वप्रथमं स्वकीयसायणभाष्यसंस्करणे अस्य अपि भाष्यस्य किमपि अंशं टिप्पणी-रूपेण सन्निविष्टवान्।

माधवस्य पितुः नाम नारायणः आसीत्। कतिपयविद्वांसः स्कन्दस्वामिनः ऋग्भाष्यस्य पूरकः सहायकश्च नारायणाद् अभिन्नम् मन्यते। किञ्च तयोः अभिन्नताप्रदर्शकस्य प्रबलप्रमाणस्य अद्यापि अभावः एव अस्ति। तथापि अस्य आविर्भावकालः निश्चितरूपेण वक्तुं शक्यते। द्वादशशतकस्य देवराजयज्वा स्वीयनिघण्टुभाष्यस्य भूमिकायां कस्यापि माधवस्य निर्देशं कृतवान्। सम्भवतः अयं माधव एव सामभाष्य-रचयिता अस्ति। न तावद् एतावता अपि तु बाणभट्टस्य कादम्बर्याः श्लोकः अयम् अस्ति -



**'रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमः स्पृशे।**
**अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः॥**

माधवस्य 'सामविवरणे' मङ्गलाचरणरूपेण अयं समुपलब्धः भवति। अस्य श्लोकस्य 'त्रयीमयाय' इति अनेन शब्देन ज्ञातो भवति यद् अयं श्लोकः कस्यापि वैदिकग्रन्थस्य एव मङ्गलाचरणम् आसीत्। अतः अनुमानं क्रियते यत् - सर्वप्रथमं सामभाष्यस्य मङ्गलार्थं माधवः एनं श्लोकं प्रणीतवान्। भाष्यकारमाधवः बाणभट्टस्य पूज्याचार्यः कश्चित् भवितुम् अर्हति। बाणभट्टस्य पूर्वपुरुषाः अपि वेदपारङ्गताः विद्वांसः आसन्। हर्षचरितेन प्रमाणितः भवति यद् बाणभट्टस्य गुरुः अपि कोऽपि वेदवेदाङ्गपारङ्गतः विद्वान् एव आसीत्। घटनेयं पूर्वानुमानम् एव पोषयति। अतः बाणभट्टस्य पूर्ववर्तिनः माधवस्य समयः विक्रमस्य सप्तमशतकपरवर्ती इति स्वीकर्तुं न शक्यते। अतः यदि बाणभट्टः ख्रीष्टस्य सप्तमशतकस्य प्रारम्भकाले आसीत् तर्हि अयं माधवः षष्ठशतकवर्ती इति वक्तव्यम्। माधवस्य भाष्यमिदम् अतीवमहत्त्वपूर्णम् अस्ति।



## पाठगतप्रश्नाः

४०. सामसंहितायाः प्रथमभाष्यकारः कः।

४१. माधवेन कृतस्य भाष्यस्य नाम किम्।

४२. 'विवरणम्' इत्यस्य भाष्यस्य अन्वेष्टा कः।

४३. माधवस्य पितुः नाम किम्।

४४. 'त्रयीमयाय'- अनेन शब्देन किं ज्ञातो भवति।

## ३.२.२) गुणविष्णुः

गुणविष्णुः साममन्त्रस्य व्याख्यां विरचितवान्। तस्य व्याख्यानस्य मिथिलायां बङ्गप्रदेशे चातिप्रसिद्धिः अस्ति। सः नित्यनैमित्तिकविधानोपयोगिनां साममन्त्राणां व्याख्यां कृत्वा अतिमहत्त्वपूर्णं कार्यं कृतवान्। अयं महापुरुषः मिथिलायाः बङ्गप्रदेशस्य वा कस्मिंश्चिदपि भागे न्यवसत्। अस्य छान्दोग्यमन्त्रभाष्यस्य एकं सुष्ठु संस्करणम् आसीत्। तत् भाष्यं 'कलकत्ता-संस्कृत-परिषद्' इति नाम्नः संस्थातः प्रकाशितं जातम्। अस्य ग्रन्थस्य प्रस्तावनायां विद्वान् सम्पादकः गुणविष्णोः विषयेऽनेकानां ज्ञातव्यविषयाणां विवेचनं कृतवान्।

छान्दोग्यमन्त्रभाष्यम् इदं सामवेदस्य कौथुमशाखायाः उपरि अस्ति। ('हलायुधेन काण्वे कौथुमे गुणविष्णुना') 'सायणकृतमन्त्रभाष्यस्याधारः गुणविष्णोः भाष्यमेवाऽस्ति' इति वदन्ति आलोचकाः। हलायुधेन अपि अस्य ग्रन्थस्योपयोगः कृतः इत्यपि प्रमाणो मिलति। गुणविष्णुः बल्लालसेनस्य अथवा



तस्य प्रसिद्धपुत्रस्य लक्ष्मणसेनस्य राज्यकाले विद्यमानः आसीत्। अतोऽस्य गुणविष्णोः समयः विक्रमस्य द्वादशशतकस्य अन्तिमभागः त्रयोदशशतकस्यादिमभागश्च निश्चीयते।

गुणविष्णोः 'छान्दोग्यमन्त्रभाष्यम्' नितान्तं विख्यातः ग्रन्थोऽस्ति। अस्य द्वावन्यावपि ग्रन्थौ स्तः:- मन्त्रब्राह्मणभाष्यम्, पारस्करगृह्यसूत्रभाष्यञ्चेति। अनेन ज्ञातो भवति यदयं महानुभावः तस्मिन् काले प्रख्यातवैदिकः आसीत्।



## पाठगतप्रश्नाः

४५. गुणविष्णोः साममन्त्रव्याख्यानस्य नाम कुत्र अतिप्रसिद्धः अस्ति।
४६. गुणविष्णुः कस्य व्याख्यानं विरचितवान्।
४७. गुणविष्णुः कुत्र अवसत्।
४८. छान्दोग्यमन्त्रभाष्यस्यैकम् सुष्ठु संस्करणम् कुत्र प्रकाशितं जातम्।
४९. गुणविष्णुः कस्य राज्यकाले विद्यमानः आसीत्।
५०. बल्लालसेनस्य पुत्रस्य नाम किम्।
५१. गुणविष्णोः कः समयः निश्चीयते।
५२. गुणविष्णोः नितान्तविख्यातः ग्रन्थः कः।

## ३.३) शुक्लयजुर्वेदभाष्यकाराः

### ३.३.१) उव्वटः

उव्वटः काश्मीरप्रदेशीयः विद्वान् इति बहूनां मतम् अस्ति। एतस्य क्वचित् 'औबटः' क्वचित् च 'उवट' इत्यपि नाम उपलभ्यते। उव्वटः यजुर्वेदसंहितायां स्वनाम्ना भाष्यं रचितवान् यद् अधुनापि लभ्यते। अस्य पितुर्नाम 'वज्रटः' इति आसीत्। 'अयं मम्मटस्य भ्राता' इति सुधासागरकारस्य भीमसेनस्य मतम्। परन्तु सन्ति उवटस्य विषये काश्चन विप्रतिपत्तयः। तथा हि तेन रचिते यजुर्वेदसंहितायाः भाष्ये पद्यमेकम् उपलभ्यते-

**'ऋष्यांदीनश्च पुरस्कृत्य अवन्त्यामुवटो वसन्।**
**मन्त्रभाष्यमिदं चक्रे भोजे राष्ट्रं प्रशासति।।' इति।**

तस्यैव भाष्यस्य पुस्तकान्तरे अन्यदपि पद्यमेकम् उपलभ्यते-

**'आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना।**
**मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति।।'इति।**



एतेन पद्यद्वयेन 'उव्वटः' वज्रटस्य पुत्रः भोजसमकालिकः च आसीत् इति प्रतिपाद्यते। यदि अयम् उव्वटः भीमसेनकथनेन मम्मटस्य भ्राता अभविष्यत्, तर्हि मम्मटस्य जैयटपुत्रत्वात् तद्भ्रातुः उव्वटस्यापि जैयटपुत्रत्वम् अभविष्यत्। तदा उव्वटस्य श्लोकोक्तं वज्रटपुत्रत्वं कथमपि न सङ्गच्छते। यद्यपि काश्मीरदेशीयस्य जैयटगोत्रस्य वज्रटस्य दत्तकपुत्रः अयम् उव्वटः इति कल्पनायां जैयटपुत्रस्य उव्वटस्य वज्रटपुत्रत्वम् उपपद्यते, तथापि तस्य भोजसमकालिकत्वम् अनुपपन्नम् एव। यतः तस्य ज्येष्ठभ्रातुः मम्मटस्य भोजराजाद् अर्वाक्तनत्वं सिद्धम् अस्ति। अतः तस्य कनिष्ठभ्रातुः उव्वटस्य अपि सुतरां भोजराजाद् अर्वाक्तनत्वं सिद्ध्यति। अवन्त्याम् (उज्जयिन्याम्) वसन् सः भाष्यं निर्मीतवान् इति एकत्र उल्लेखः, गुर्जरदेशप्रसिद्धे आनन्दपुरे वसन् सः भाष्यं निर्मीतवान् इति अपरत्र उल्लेखः, एतद् अपि विप्रतिषिद्धम् इव। यदि उव्वटस्य पिता वज्रटः एव आनन्दपुरवास्तव्यः आसीत्, उव्वटः तु उज्जयिन्यां वसन् एव भाष्यं निर्मीतवान् इति कल्प्यते तदापि वज्रटस्य काश्मीरिकत्वं सन्दिह्यते एव।

महाराजः भोजः धारानगरशासकः परमारवंश्यः च आसीत्। स हि १०१८ ईशवीये सिंहासनारूढः भूत्वा १०६३ ईशवीयपर्यन्तं राज्यं कृतवान् इति तस्य कालः एकादशशतकम्। भोजस्य कविजनप्रियत्वं प्रसिद्धम्। शेखगिरिशास्त्रिणः लिखन्ति यद् अयं भोजः धारातः स्वां राजधानीम् उज्जयिनीम् आनीतवान् इति 'आइने अकबरी' पुस्तके लिखितं वर्तते। तेन पूर्वम् उल्लिखितस्य भोजराजस्य समयः १०१८ ईशवीयतः १०६३ ख्रीष्टीयः वर्तते। अतः भोजराजसमयकालिकत्वेन उव्वटः ख्रीष्टीयस्य एकादशशतकस्य पूर्वार्द्धे आसीत् इति निश्चयेन वक्तुं शक्यते। अस्य भाष्यं लघ्वक्षरम् अपि सत् अतीव प्रोज्ज्वलम्, सरलं प्रामाणिकं च अस्ति। भाष्ये अस्मिन् अनेकमन्त्राणाम् अध्यात्मपरकः अर्थः दर्शितः अस्ति। अनेन प्रतीतः भवति यद् अयं मध्ययुगस्य एकः नितान्तप्रौढः वेदज्ञः आसीत्। अस्य अन्यासु कृतिषु - (क) ऋक्प्रातिशाख्यस्य टीका, (ख) यजुःप्रातिशाख्यस्य टीका, (ग) ऋक्सर्वानुक्रमणीभाष्यम्, (घ) ईशावास्योपनिषद्-भाष्यं च इति चत्वारः ग्रन्थाः नितान्तप्रौढाः, प्रसिद्धाः प्रकाशिताः चेति।



## पाठगतप्रश्नाः

५३. उव्वटः कस्य देशस्य विद्वान् आसीत्।

५४. उव्वटः यजुर्वेदसंहितायां स्वनाम्ना भाष्यं रचितवान् न वा।

५५. उव्वटस्य पितुः नाम किम्।



### ३.३.२) महीधरः

वैदिककालाद् एव संस्कृतविद्यायाः अन्यतमं प्रधानकेन्द्रं काशी आसीद् इति वयं सर्वे जानीमः। अत्र एव गौतमप्रभृतयः अन्ये च बहवः वेदमन्त्रद्रष्टारः विद्वांसः अभवन्। इतिहासपुराणेषु अपि विशिष्टपण्डितेन सुसज्जिता काशी आसीद् इत्यपि स्पष्टम् एव।

आचार्यमहीधरस्य जन्म अस्याम् एव काश्याम् अभवत्। तत्र च तस्य वासस्थानस्य समीपे एका पुष्करिणी अद्य अपि वर्त्तते इति परम्परातः श्रूयते। नागर-ब्राह्मणवंशीयः अयं विद्वान् आसीद् इति। सः काश्याम् एव अध्ययनं विधाय विद्वज्जनेषु प्रतिष्ठां प्राप्तवान्। ततःपरं कतिपयान् ग्रन्थान् विरच्य महीधरः काशीनरपतेः शरणं गतवान्। अत एव प्रायः 'यथा राजाश्रितः पण्डितः 'महीधरः' इति तस्य एव उक्त्या संगच्छते। तत्रैव सः वेददीपनामकस्य सामभाष्यस्य रचनां सम्पादितवान्। यद्यपि भाष्यमिदं न मौलिकं तथापि अर्थस्य विशदतया दृष्ट्या नितान्तं ग्राह्यम् अस्ति। अस्य सामभाष्यस्य पाण्डुलिपिः सरस्वतीभवनपुस्तकालये संगृहीता अस्ति। अस्य भाष्यस्य उपरि उव्वटभाष्यस्य स्पष्टच्छाया दृश्यते। किञ्च अयं विद्वान् निरुक्तश्रौतसूत्रादिग्रन्थेभ्यः उदाहरणनानि दत्त्वा याज्ञिकक्रियायाः विधानं कृतवान्। काशीवासी अयं महीधरः तन्त्ररहस्यज्ञः आसीत्। अयं महीधरः वैदिकसाहित्ये पारङ्गमः आसीत्। अयं महीधराचार्यः प्रतिभावान् प्रभाववान् च विद्वान् आसीत्। तन्त्रादीन् रहस्यमयान् शास्त्रान्तरान् चापि स सम्यक् अधीतवान्। सः विनयेन भक्त्या च गुरुजनान् तथा समप्रीणयत्। येन ते यथा अस्मै गुह्याद् गुह्यतराणि अपि रहस्यवस्तूनि उपदिष्टवन्तः। सर्ववेदपारङ्गतः अयं परमविद्वान् आचार्य इति उपाधिं प्राप्तवान्। महीधरः 'मन्त्रमहोदधि'-नाम्ना तन्त्ररहस्यविवेचकम् एकं ग्रन्थं विक्रमस्य १६४५ शतके (१५८८ई०) रचितवान्। अस्य ग्रन्थस्यान्ते भाष्यकारेण लिखितम् इदम्-

**'अब्दे विक्रमतो जाते बाणवेदनृपैर्मिते।**
**ज्येष्ठाष्टम्यां शिवस्याग्रे पूर्णो मन्त्रमहोदधिः॥' इति**

अतः अस्य भाष्यकारस्य समयः षोडशशतकस्य उत्तरार्द्धः इति निश्चीयते। उव्वटाचार्यात् पञ्चाशद्वर्षानन्तरम् अयम् अभवत्। महीधराचार्यः नरसिंहस्य उपासकः आसीत्। तस्य उल्लेखः ग्रन्थेषु बहुशः उपलभ्यते।



## पाठगतप्रश्नाः

५६. वैदिककालाद् एव संस्कृतविद्यायाः अन्यतमं प्रधानकेन्द्रं किम् आसीद्।
५७. काश्यां जातानां केषाञ्चन विदुषां नामानि लिखन्तु।
५८. नागर-ब्राह्मणवंशीयः विद्वान् कः।
५९. महीधरः काश्याम् अध्ययनं समाप्य कस्य शरणं गतवान्।
६०. महीधरः कस्य वेदस्य भाष्यं रचितवान्।



६१. महीधरः तन्त्ररहस्यज्ञः आसीत् न वा।

६२. 'मन्त्रमहोदधि'- एनं ग्रन्थं कः लिखितवान्।

६३. महीधरस्य कः समयः निश्चीयते।

६४. महीधरः कस्य उपासकः।

## ३.३.३) हलायुधः

सायणस्य परवर्त्तिनः अनन्ताचार्य-आनन्दबोधप्रभृतयः बहुशः विद्वांसः काण्वसंहितायाः उपरि भाष्याणि अकुर्वन्। किञ्च सायणात् पूर्ववर्त्तिषु प्रधानाचार्येषु हलायुधः एव शुक्लयजुर्वेदस्य काण्वसंहितायाः उपरि विशिष्टं भाष्यं विरचितवान्। अस्य भाष्यस्य नाम 'ब्राह्मणसर्वस्वम्' इति अस्ति। भाष्यारम्भे एव हलायुधः स्वविषये किञ्चित् लिखितवान्। बाल्ये एवायं हलायुधः राजपण्डितः अभवत्। नवयौवने सः श्वेतच्छत्रधारणस्याधिकारं प्राप्तवान्। वार्द्धक्ये नृपलक्ष्मणसेनस्य धर्मस्य अधिकारिपदे च सः नियुक्तः जातः।

**'बाल्ये ख्यापितराजपण्डितपदं श्वेतार्चिबिम्बोज्ज्वल-**
**च्छत्रोत्सिक्तमहामहस्तमुपदं दत्वा नवे-यौवने।**
**यस्मै यौवनशेषयोग्यमखलक्ष्मापालनारायणः**
**श्रीमान् लक्ष्मणसेनदेवपतिर्धमाधिकारं ददौ।।'**

नृपात् बल्लालसेनात् परं तदात्मजः 'लक्ष्मणसेनः' अतीवयोग्यतापुरःसरं गौडक्ष्मां रक्षितवान्। ख्रीष्टस्य सप्तत्यधिकैकादशाब्दे अयं राजसिंहासनम् आरूढः अभवत् (द्रष्टव्यः - प्राचीनभारतस्येतिहासः - स्मिथः)। लक्ष्मणसेनः त्रिंशद्वर्षाणि (३० ब.) सः राज्यं करोति स्म। आर्त्तेभ्यो मुक्तहस्तेन दानं कुर्वन् आसीत्। स पराक्रमे इन्द्रतुल्यः आसीत्। तस्य राज्ये सर्वे सुखेन वसन्ति स्म। असौ त्रिंशद्वर्षाणि शासनं विधाय ख्रीष्टस्य द्वादशतमे वर्षे परलोकं गतवान्। हलायुधः गौडक्षितिपालस्य लक्ष्मणसेनस्य धर्माध्यक्षः आसीत्। लक्ष्मणसेनस्य समयः वि.स. १२२७-१२३७ (ईशवीयस्तु ११७०-१२००) विद्यते। अतः हलायुधोऽपि तत्कालिक एव आसीदिति।

हलायुधः तस्य कालस्य प्रसिद्धो वैदिकविद्वानासीत्। हलायुधः ब्राह्मणसर्वस्वम् इति ग्रन्थं लिखितवान्। अयं हलायुधः शैवदर्शनस्य आचार्यः आसीत्। अयं वेद-मीमांसामर्मज्ञः वेदपारङ्गतः च आसीत्। विशेषतः शैव-वैष्णवागमयोः रहस्यज्ञो विद्वान् आसीत्। अस्य कृतिषु ब्राह्मणसर्वस्वम्, मीमांसासर्वस्वम्, वैष्णवसर्वस्वम्, शैवसर्वस्वम्, पण्डितसर्वस्वञ्चेति पञ्च ग्रन्थाः नितान्तप्रौढाः प्रसिद्धाः च आसन्। हलायुधः स्वयोग्यताबलेन गौडराज्याधिपतेः लक्ष्मणसेनस्य सभापण्डितः धर्माध्यक्षश्चाभवत्।





## पाठगतप्रश्नाः

६५. हलायुधः कस्य वेदस्य कस्याः संहितायाः उपरि स्वस्य विशिष्टभाष्यं रचितवान्।

६६. हलायुधस्य भाष्यस्य नाम किमस्ति।

६७. लक्ष्मणसेनः कति वर्षाणि यावत् राज्यं कृतवान्।

६८. लक्ष्मणसेनस्य समयः कः।

६९. हलायुधः कस्य दर्शनस्य आचार्यः आसीत्।

७०. हलायुधस्य प्रसिद्धाः के ग्रन्थाः सन्ति।

### ३.३.४) भट्टभास्करः

भट्टभास्करस्य समयनिर्धारणं वैदिकभाष्यकाराणाम् इतिहासार्थं नितान्तमावश्यकमस्ति। सायणाचार्यः स्वभाष्ये भट्टभास्करमिश्रं स्मरति। एतेन ज्ञायते यत् सः विक्रमस्य पञ्चदशशतकपूर्ववर्ती आसीत्। सायणपूर्ववर्त्ती लक्ष्मणापरनामको वेदाचार्यः स्वीये सुदर्शनमीमांसाग्रन्थे न केवलं भट्टभास्करमिश्रस्य नामोल्लेखं कृतवान्। अपि तु स तस्य ज्ञानयज्ञनामकभाष्यग्रन्थस्याऽपि उल्लेखं कृतवान्। 'तत्र भाष्यकृता भास्करमिश्रेण ज्ञानायज्ञाख्ये भाष्ये एतत्प्रमाणव्याख्यानसमये चरणमिति देवताविशेष इति तदनुगुणमेव व्याख्यातम्।' (सुदर्शनमीमांसा पृ.४)। देवराजयज्वापि स्वग्रन्थेऽस्य भाष्यम् च उद्धृतवान्। प्रसिद्धवैदिकः हरदत्तः एकाग्निकाण्डस्य स्वभाष्ये भास्करकृतभाष्यात् साहाय्यं स्वीकृतवान्। अतः भास्करमिश्रस्य समयः विक्रमस्यैकादशतकमिति कथयितुं शक्यते। हरिदत्तः स्वभाष्ये आर्यभट्टीय-अमरकोष-काशिकाप्रभृतिग्रन्थानां नामोल्लेखञ्च कृतवान्। तेनाऽपि हरदत्तादिभाष्यकाराद् अस्य पूर्वकालिकत्वं प्रतीयते। एतदपि पूर्वकथितसमयकत्वमस्य साधयति।

भट्टभास्करः तैत्तिरीयसंहितायाः उपरि ज्ञानयज्ञनामकं भाष्यम् लिखितवान्। भाष्यमिदं बहुतथ्येन समृद्धमस्ति। प्रमाणपुरःसरं कतिपयानां वैदिकग्रन्थानां मन्त्रस्योद्धरणमनेन समुपस्थापितमस्मिन्भाष्ये। विद्वान् भट्टभास्करः लुप्तनिघण्टुग्रन्थादपि उद्धरणं संगृहीतवान्। सः मन्त्राणामर्थप्रदर्शनसमये विभिन्नाचार्याणाम् अभिमतानि अपि प्रदर्शितवान्। अस्मिन् भाष्ये न केवलं यज्ञपरकस्य अर्थस्य निर्देशनमस्त्यपि तु अध्यात्माधिदैवपक्षयोरप्यर्थस्य प्रदर्शनं कृतमनेन। यथा - 'हंसः शुचिषद्वसुरन्तरिक्षसत्' प्रसिद्धे अस्मिन् मन्त्रे 'हंस'-पदस्य त्रिभिः प्रकारैः व्याख्या कृताऽनेन। तद्यथा= अधियज्ञपक्षे हंसपदस्य व्याख्या - 'हन्ति पृथिवीमिति हंसः' अधिदैवपक्षे- हंसपदस्यार्थः आदित्यो भवति, तथा अध्यात्मपक्षे- 'हंसः'-पदस्यार्थः 'आत्मा' कृतोऽनेन। अतः अस्य भाष्यस्य वैदिकसाहित्ये अतीव महत्त्वम् अस्ति।

## ३.४) अथर्ववेदस्य भाष्यकाराः

### ३.४.१) गोविन्दस्वामी

त्रयोदशशतकोद्भवः 'दैव' इति पदस्य टीका 'पुरुषाकारः' इति। अस्याः टीकायाः कर्त्ता श्रीकृष्णलीलांशुकमुनिः। श्रीकृष्णलीलांशुकमुनिः १९८ कारिकायाः टीकायां गोविन्दस्वामिनः नामोल्लेखं कृतवान्। अयं ग्रन्थः अनन्तशयनग्रन्थमालायां प्रकाशितोऽस्ति। उद्धरणमिदं माधवीयधातुवृत्तौ अपि मिलति। बौधायनीयधर्मविवरणस्य कर्त्ताऽपि सम्भवतः अयमेवाऽस्ति। अस्मिन् ग्रन्थे कुमारिलस्य तथा तस्य ग्रन्थस्य तन्त्रवार्त्तिकस्य अपि उद्धरणं समुपलभ्यते। अतोऽस्य समयः अष्टमशतकादनन्तरं त्रयोदशशतकात्पूर्वमर्थात् सम्भवतः दशमशतक इति वक्तुं शक्यते।



#### पाठगतप्रश्नाः

७१. 'दैव' इति पदस्य का टीका।

७२. पुराषाकारः अस्य टीकायाः कर्त्ता कः।

७३. पुरुषाकारः अयं ग्रन्थः कुतः प्रकाशितः जातः।

७४. गोविन्दस्वामिनः कः कालः।

---

### ३.४.२) षड्गुरुशिष्यः

अस्य विदुषः टीकानां सङ्ख्या न स्वल्पा। अयं विद्वान् ऐतरेयब्राह्मणस्य, ऐतरेयारण्यकस्य, आश्वलायनश्रौतसूत्रस्य, आश्वलायगृह्यसूत्रस्य च व्याख्याम् कृतवान्। वेदान्तदीपिकाख्यायाः कात्यायनस्य सर्वानुक्रमण्याः व्याख्या अस्य विदुषः अस्ति यत् तस्य सरसरचनाकौशलेन नितरां प्रसिद्धा। इयं व्याख्या आक्सफोर्ड-विश्वविद्यालयद्वारा सुसम्पादिता प्रकाशिता अस्ति। ग्रन्थकारः स्वयमस्याः टीकायाः रचनाकालः १२३४ सं. तथा तदनुसारेण ख्रीष्टस्य ११७७ई. लिखितवान्। अतः सद्गुरुशिष्यस्य समयः ख्रीष्टीयद्वादशशतकस्य पूर्वार्धे एवाऽस्ति, इति निश्चयेन वक्तुं शक्यते।



#### पाठगतप्रश्नाः

७५. सद्गुरुशिष्यः केषां व्याख्यानानि लिखितवान्।

७६. सर्वानुक्रमण्याः व्याख्या केन सुसम्पादिता।

---





## पाठसारः

अस्मिन् पाठे वयम् ऋक्सामयजुरथर्ववेदानां भाष्यकाराणां विषये विस्तृतं ज्ञानं प्राप्तवन्तः। ऋग्वेदभाष्यकारेषु प्रसिद्धाः सन्ति स्कन्दस्वामि-नारायणोद्गीथ-माधवभट्ट-वेङ्कटमाधव-आनन्दतीर्थ-सायणाचार्यप्रभृतयः। तेषां जन्मस्थानं जन्मकालः तैः कृतानां वेदभाष्याणां च विषये ज्ञानं प्राप्तवन्तः। ततश्च वयं माधव-गुणविष्णु-इत्यनयोः सामवेदभाष्यकर्त्रोः परिचयं प्राप्तवन्तः। तेषां कालादिविषये च भूयशः चर्चां कृतवन्तः। उव्वट-महीधर-हलायुध-भट्टभास्कराणां शुक्लयजुर्वेदभाष्यकारान् ज्ञातवन्तः। तेषु च उव्वटस्य कालविषये प्रवर्तमानं महान्तं विवादम् अवलोकितवन्तः। तदनन्तरं अथर्ववेदभाष्यकारयोः गोविन्दस्वामि-षड्गुरुशिष्ययोः च देशकालादिकम् अवगतवन्तः। यद्यपि एतेभ्यः अधिकाः अपि नैके वेदभाष्यकाराः सन्ति तथापि तेषु एते एव अधिकप्रसिद्धाः। अतः एतेषां जीवनावलोकनेन वयं वेदभाष्यकाराणां सामान्यं ज्ञानम् अनेन पाठेन प्राप्तवन्तः। किञ्च तैः लिखितानां भाष्याणां कानि प्रकाशितानि कानि इदानीम् अपि अप्रकाशितानि एव वर्तन्ते तदपि ज्ञातवन्तः।



## पाठान्तप्रश्नाः

१. स्कन्दस्वामिनः कीर्तित्वं वर्णयत।
२. माधवभट्टस्य देशकालकीर्तिपरिचयं लिखत ।
३. आनन्दतीर्थाचार्यस्य परिचयं लिखत।
४. सायणाचार्यस्य कीर्तेः वर्णनं कुरुत।
५. गुणविष्णोः देशकालकीर्तेः परिचयं व्याख्यात।
६. उव्वटस्य विषये संक्षेपेण लिखत।
७. हलायुधस्य कीर्तिं व्याख्यात।
८. भट्टभास्करस्य परिचयं लिखत ।
९. गोविन्दस्वामिनः विषये संक्षेपेण लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि (ऋग्वेदभाष्यकाराः)

१. स्कन्दस्वामि-नारायण-उद्गीथ-माधवभट्ट-वेङ्कटमाधव-आनन्दतीर्थ-आत्मानन्द-सायणप्रभृतयः भाष्यकृत्सु सुप्रसिद्धाः पण्डिताः सन्ति।



२. स्कन्दस्वामी निरुक्तेः टीकां रचितवान्।

३. ऋग्वेदसंहितायाः सर्वप्रथमभाष्यम् अधुना स्कन्दस्वामिनः उपलभ्यते।

४. स्कन्दस्वामिनः जन्म गुर्जरप्रदेशस्य विद्यापीठतया राजधानीभावेन च पुरा विख्याते 'वलभी' इत्याख्यनगरे अभवत्।

५. स्कन्दस्वामिनः पितुः नाम भर्त्तृध्रुवः आसीत्।

६. हरिस्वामिनः गुरुः स्कन्दस्वामी।

७. शतपथब्राह्मणस्य विख्यातः भाष्यकारः स्कन्दस्वामी।

८. स्कन्दस्वामिनः ऋग्वेदस्य सुविस्तृतं भाष्यं विरचितवान्।

### उत्तराणि (नारायणः)

९. नारायणः उद्गीथः च स्कन्दस्वामिनः समये एव आस्ताम्।

१०. नारायणः ऋग्वेदभाष्ये स्कन्दस्वामिनं प्रति साहाय्यम् अकरोत् इत्येतद् वेङ्कटमाधवस्य मतम् अस्ति।

११. नारायणस्य समयः विक्रमस्य सप्तमशताब्द्याम् एव प्रामाणितो भवति।

### उत्तराणि (उद्गीथः)

१२. ऋग्वेदस्य अन्तिमभागस्य भाष्यम् उद्गीथः रचितवान्।

१३. प्राचीनकाले आधुनिककर्णाटकस्य प्रतीच्यभूखण्डः 'वनवासीप्रान्तः' इति नाम्ना ख्यातः आसीत्।

१४. उद्गीथाचार्यः 'वनवासीप्रान्तः' इति अस्य प्रान्तस्य प्रायः निवासी इति चिन्त्यते।

१५. पञ्चत्रिंशदधिकोनविंशतितमे ख्रीष्टाब्दे लाहौरनगरस्य डी.ए.वी. महाविद्यालयस्य शोधितविभागः भाष्यमिदं ऋग्वेदस्य प्रारम्भिकार्द्धभागं प्रकाशितवान्।

### उत्तराणि (माधवभट्टः)

१६. इतिहासकाराः माधव-नामधेयानां चतुर्णां भाष्यकाराणां नामोल्लेखं कुर्वन्ति।

१७. माधवस्य ऋग्वेदे विलक्षणं पाण्डित्यं दृश्यते।

१८. सायणो वेङ्कटश्चोभौ माधवस्य भाष्यस्य अनुसरणं कृतवन्तौ।

### उत्तराणि (वेङ्कटमाधवः)

१९. वेङ्कटमाधवः सम्पूर्णऋक्संहितायाः उपरि स्वभाष्यं प्रणीतवान्।

२०. वेङ्कटमाधवः वसिष्ठगोत्रे जन्म गृहीतवान्।

२१. वेङ्कटमाधवस्य पिता वेङ्कटाचार्यः आसीत्।

२२. वेङ्कटमाधवस्य माता सुन्दरीदेवी आसीत्।

२३. वेङ्कटमाधवस्य एकः सङ्कर्षणाख्यः अनुजः अपि आसीत्।

२४. वेङ्कटमाधवस्य वेङ्कटगोविन्दाख्यौ द्वौ पुत्रौ आस्ताम्।



**उत्तराणि (आनन्दतीर्थः)**

२५. आनन्दतीर्थः एव 'मध्व' इत्यनेन नाम्ना सुप्रसिद्धः आसीत्।

२६. आनन्दतीर्थस्य व्याख्यानमिदं छन्दोबद्धम् अस्ति।

२७. 'वेदैश्च सर्वैरहमेव वेद्यः' वचनमिदं श्रीमद्भगवद्गीतायाम् उपलभ्यते।

२८. आनन्दतीर्थाचार्यः वैष्णवसम्प्रदायस्य अस्ति।

२९. नारायणः पूर्णपुरुषोऽस्ति।

३०. मध्वः द्वैतवादस्य प्रवर्तनम् कृतवान्।

३१. मध्वभाष्यं ऋग्वेदस्य उपरि वर्तते।

३२. जयतीर्थस्य टीकायाः विवृतिं १७१८ विक्रमाब्दे नरसिंहः लिखितवान्।

३३. आनन्दतीर्थस्य आविर्भावकालः विक्रमस्य पञ्चपञ्चाशदधिकद्वादशाब्दतः विक्रमस्य पञ्चत्रिंशदाब्दपर्यन्तम्।

**उत्तराणि (सायणाचार्यः)**

३४. आचार्यसायणः विजयनगरसंस्थापकस्य महाराजबुक्कस्य महाराजहरिहरस्य च अमात्यः सेनानीः च आसीत्।

३५. आचार्यसायणस्य वेदभाष्यम् अस्ति।

३६. महाराजस्य बुक्कस्य प्रधानम् मन्त्रिपदम् सायणाचार्यः१३६४ ख्रीष्टाब्दतः १३७८ ख्रीष्टाब्दपर्यन्तम् अलंकृतवान्।

३७. ख्रीष्टस्य चतुर्दशशताब्देः उत्तरार्द्धः एव सायणस्य भाष्यस्य रचनाकालः कल्पयितुं शक्यते।

३८. सायणाचार्यस्य निजज्येष्ठभ्रातुः नाम माधवाचार्यः।

३९. सायणाचार्यः १३७९ ख्रीष्टाब्दतः १३८७ ख्रीष्टाब्दपर्यन्तं महाराजस्य हरिहरस्य मन्त्रिपदम् मृत्युपर्यन्तम् अलङ्कृतवान्।

**उत्तराणि (माधवः)**

४०. माधवः सामसंहितायाः प्रथमभाष्यकारः।

४१. माधवेन कृतस्य भाष्यस्य नाम 'विवरणम्' अस्ति।

४२. 'विवरणम्' अस्य भाष्यस्य अन्वेष्टा सत्यव्रतसामश्रयीमहोदयः।

४३. माधवस्य पितुः नाम नारायणः इति आसीत्।

४४. 'त्रयीमयाय'- अनेन शब्देन ज्ञायते यद् अयं श्लोकः कस्यापि वैदिकग्रन्थस्य एव मङ्गलाचरणम् आसीत्।

**उत्तराणि (गुणविष्णुः)**

४५. गुणविष्णोः साममन्त्रव्याख्यानस्य नाम मिथिलायां बङ्गप्रदेशे चातिप्रसिद्धम् अस्ति।

४६. गुणविष्णुः साममन्त्राणां व्याख्यां कृतवान्।

४७. महापुरुषः मिथिलायाः बङ्गप्रदेशस्य वा कस्मिंश्चिदपि भागे अवसत्।



४८. छान्दोग्यमन्त्रभाष्यस्यैकम् सुष्ठु संस्करणम् 'कलकत्ता-संस्कतं परिषद्' इति नाम्नः संस्थातः प्रकाशितं जातम्।

४९. गुणविष्णोः समयः विक्रमस्य द्वादशशतकस्य चरमभागः त्रयोदशतकस्यादिमभागश्च निश्चीयते।

५०. बल्लालसेनस्य पुत्रस्य नाम लक्ष्मणसेनः।

५१. गुणविष्णोः समयः विक्रमस्य द्वादशशतकस्य चरमभागः त्रयोदशतकस्यादिमभागश्च निश्चीयते।

५२. गुणविष्णोः नितान्तविख्यातः ग्रन्थः अस्ति छान्दोग्यमन्त्रभाष्यम्।

**उत्तराणि (उव्वटः)**

५३. उव्वटः काश्मीरप्रदेशस्य विद्वान् आसीत्।

५४. उव्वटः यजुर्वेदसंहितायां स्वनाम्ना भाष्यं रचितवान्।

५५. उव्वटस्य पितुः नाम 'वज्रटः'।

**उत्तराणि (महीधरः)**

५६. वैदिककालाद् एव संस्कृतविद्यायाः अन्यतमं प्रधानकेन्द्रं काशी आसीद्।

५७. काश्यां गौतमप्रभृतयः अन्ये च विद्वांसः अभवन्।

५८. महीधरः नागर-ब्राह्मणवंशीयः विद्वान्।

५९. महीधरः काश्याम् अध्ययनं समाप्य काशीनरपतेः शरणं गतवान्।

६०. महीधरः सामवेदस्य भाष्यं रचितवान्।

६१. महीधरः तन्त्ररहस्यज्ञः आसीत्।

६२. 'मन्त्रमहोदधि'- एनं ग्रन्थं महीधरः लिखितवान्।

६३. महीधरस्य भाष्यकारस्य समयः षोडशशतकस्य उत्तरार्द्धः इति निश्चीयते।

६४. महीधरस्य उपासकः नरसिंहः।

**उत्तराणि (हलायुधः)**

६५. हलायुधः शुक्लयजुर्वेदस्य काण्वसंहितायाः उपरि स्वस्य विशिष्टभाष्यमस्ति।

६६. हलायुधस्य भाष्यस्य नाम 'ब्राह्मणसर्वस्वम्' इति अस्ति।

६७. लक्ष्मणसेनः त्रिंशद्वर्षाणि (३० ब.) राज्यं करोति स्म।

६८. लक्ष्मणसेनस्य समयः वि.स. १२२७-१२३७ (ईशवीयस्तु ११७०-१२००) विद्यते।

६९. हलायुधः शैवदर्शनस्य आचार्यः आसीत्।

७०. हलायुधस्य ब्राह्मणसर्वस्वम्, मीमांसासर्वस्वम्, वैष्णवसर्वस्वम्, शैवसर्वस्वम्, पण्डितसर्वस्वञ्चेति पञ्चग्रन्थाः नितान्तप्रौढाः प्रसिद्धाः ग्रन्थाः आसन्।

**उत्तराणि (गोविन्दस्वामी)**

७१. 'दैव' इति पदस्य टीका 'पुरुषकारः' इति।

७२. पुराषाकारः इत्यस्याः टीकायाः कर्त्ता श्रीकृष्णलीलांशुकमुनिः।

७३. पुरुषाकारः अयं ग्रन्थः ग्रन्थः अयमनन्तशायमग्रन्थमालायां प्रकाशितोऽस्ति।



७४. गोविन्दस्वामिनः समयः अष्टमशतकादनन्तरं, त्रयोदशशतकात्पूर्वमर्थात् सम्भवतः दशमशतकम् इति वक्तुं शक्यते।

**उत्तराणि (सद्गुरुशिष्यः)**

७५. सद्गुरुशिष्यः ऐतरेयब्राह्मणस्य ऐतरेयारण्यकस्य, आश्वलायनश्रौतसूत्रस्य, आश्वलायगृह्यसूत्रस्य च व्याख्यानानि लिखितवान्।

७६. सर्वानुक्रमण्याः व्याख्या आक्सफोर्ड-विश्वविद्यालयद्वारा सुसम्पादिता।

॥ इति तृतीयः पाठः ॥



## ४

# वेदभाष्यपद्धतिः

## प्रस्तावना

अस्मिन् पाठे वेदमन्त्राणाम् अर्थाः कथं निर्णीयन्ते इति विषये संक्षेपेण आलोचना प्रस्तुता अस्ति। निरुक्तकारादयः वेदस्य अर्थं कथं प्रतिपादयन्ति तदपि अत्र वर्णितम्। वेदस्य सन्ति काश्चन पद्धतयः, याभिः विद्वांसः वेदमन्त्रान् व्याख्यातवन्तः। भारतीयपद्धतिः आध्यात्मिकपद्धतिस्तथा पाश्चात्यपद्धतिः इति ताः पद्धतयः। पुनश्च कौत्समहोदयस्य पूर्वपक्षः तथा यास्कमहोदयस्य सिद्धान्तपक्षः अत्र आलोचितः वर्तते। विभिन्नासु व्याख्यासु सायणप्रतिपादितस्य भाष्यस्य कुत्र सर्वातिशयत्वं, कथं पाश्चात्याः पौरस्त्याः सर्वे अस्यैव मतं स्वीकुर्वन्ति इत्याद्यत्र सुष्ठु उपन्यस्तमस्ति। अरविन्दस्य विशिष्टं मतं तथा श्रीमदानन्दकुमारस्य विशिष्टा व्याख्यानशैली वर्णिता।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्

- मन्त्रव्याख्यानाय पद्धतित्रयं ज्ञास्यति।
- पूर्वपक्षोत्तरपक्षाभ्यां कौत्सयास्कयोर्मतं ज्ञास्यति।
- निरुक्तविषये ज्ञास्यति।
- सायणभाष्यस्य महत्त्वं ज्ञास्यति।
- अरविन्दस्य तथा आनन्दकुमारस्य च मतानि अवगमिष्यति।

## ४.१) भारतीयपद्धतिः

भाषाविज्ञानपण्डितानां मते आर्यभाषा-सेमेटिकभाषयोश्चेति द्वयोरेव भाषयोः व्यवहर्तारः सभ्यतां संस्कृतिञ्च सृष्टवन्तः। आर्यभाषाऽपि पाश्चात्य-पौरस्त्यभेदेन द्विविधा। अस्मिन्नार्यभाषायाः पाश्चात्यप्रभेदे यूरोपीयदेशस्य प्राचीनाः आधुनिक्यश्च ग्रीक-लैटिन-फ्रेञ्च-जर्मन्-आङ्ग्लप्रभृतयो भाषाः समायान्ति। आर्यभाषायाः पौरस्त्यप्रभेदे ईरानीभाषा संस्कृतभाषा च समागच्छतः। ईरानीभाषा 'जेन्द-अवेस्ता'-नाम्ना व्यवह्रियते, यत्र पारसीकानां धर्मग्रन्थाः निबद्धाः सन्ति। संस्कृतभाषायां भारतीयानां धर्मग्रन्था निबद्धा इति सुप्रसिद्धमेव।

कालक्रमेण अत्यन्तातीतकाले निर्मितस्य कस्याऽपि ग्रन्थस्यावबोधः तदुत्तरकालिकपाठकानां कृते अतीव दुरूहो व्यापारो भवति। प्राचीनत्वेन भावगाम्भीर्यं, भाषायाश्च काठिन्यमपि समायाति तदा तु





इदम् दुर्बोध्यं भवति। वेदास्तु प्रथमं तावत् स्वयं कस्यापि दूरालोकगतस्य अतीतकालस्य कृतयः सन्ति, तदुपरि भाषावैषम्यं विचारगाम्भीर्यञ्च। फलतः वेदार्थाऽवबोधनं, गवेषणं, मर्मान्वेषणञ्चैका दुर्बोधप्रहेलिका अभवत्। तथापि अस्याः प्रहेलिकायाः अर्थावबोधनस्य उद्योगः प्राचीनकालादेव समायाति। यास्कमहोदयस्य निरुक्तेऽस्योद्योगस्य किञ्चिद् आभासोऽपि प्राप्यते - 'षड्भावविकारा भवन्तीति वार्ष्यायिणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति।' यास्कस्य कथनानुसारेण प्राचीनाः ऋषयः स्वकीयेन विशिष्टतपोबलेन धर्मस्य साक्षात्कारं कृतवन्तः। किञ्चार्वाचीनाः ऋषयः तद्धर्मस्य साक्षाद्दर्शनं कर्त्तुं नाशक्नुवन्। अपरकालिकानाम् ऋषीणामीदृशीं दुर्बलतां दृष्ट्वा तेभ्यः दयावशेन प्राचीनैः ऋषिभिः मन्त्राणामुपदेशः ग्रन्थतः अर्थतो वा उभयप्रकारेण दत्तः। प्राचीनाः ऋर्षयस्तु श्रवणं विनैव धर्माणां साक्षाद्दर्शनं कृतवन्तः। अतः धर्मस्य साक्षाद्दर्शनकर्तृत्वेन तेषामृषित्वं स्वतःसिद्धम् एवाऽऽसीत्। किञ्चार्वाचीनाः ऋषयस्तु ग्रन्थरूपेणार्थरूपेण च श्रवणं कृतवन्तः तत्पश्चात्ते धर्मदर्शने कृतकार्या अभवन्। अतः श्रवणान्तरदर्शनस्य योग्यतासम्पादनेन एतेषामृषीणामुपयुक्ताभिधा 'श्रुतर्षि' एवाऽभवत्। 'अवरेभ्योऽवरलिकेभ्योः शक्तिहीनेभ्यः श्रुतर्षिभ्यः। तेषां हि श्रुत्वा तत्पश्चादृषित्वमुपजायते न यथा पूर्वेषां साक्षात्कृद्धर्माणां श्रवणमन्तरेणैव' (दूर्गाचार्यः)। एते श्रुतर्षय एव लोकहिताय वेदार्थावबोधनस्योपयोगिनां शिक्षा-निरुक्त-वेदाङ्गादीनां रचनां कृतवन्तः। आधुनिकास्तु वेदार्थस्य दुरूहतां प्रति अङ्गुलिमुत्तोल्य दोषारोपणं कृत्वा वेदार्थान् यथा न विस्मरेयुः, वेदमूलकाचाराद्धर्माद्वा विमुखाः न भवेयुरिति विषये समुन्नतया भावनया प्रेरिताः सन्तः प्राचीना ऋषयः वेदार्थोपदेशाय सततं जागरूकाः आसन्। यास्कमहोदयेनापि- 'साक्षात्कृद्धर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्राहुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं वेदञ्च वेदाङ्गानि च।' इत्युक्तम्।

वैदिकशब्दानाम् अर्थस्य तात्पर्यबोधनाय बहुभिः पण्डितैः तावत् प्रचेष्टा विहिता। अधुनोपलब्धाद् यास्कविरचितनिरुक्तादपि प्राचीनतरः निघण्टुग्रन्थोऽस्ति, तत्र वैदिकशब्दानां विस्तृतव्याख्याऽस्ति। निघण्टुशब्दस्याप्यर्थो भवति 'शब्दानां सूची', निघण्टुग्रन्थे संहितायाः कठिनाः सन्दिग्धार्थशब्दाश्चैकत्र समाहृत्य तेषामर्थस्य विशेषसूचना प्राप्यते। समुपलब्धग्रन्थेषु निघण्टुग्रन्थे एव वेदार्थस्फुटीकरणस्य प्रथमः प्रयासः परिलक्ष्यते। प्रातिशाख्यानामपि रचना तदुत्तरकाले एव जाता। ग्रन्थेष्वेतेषु वैदिकभाषायाः विचित्रपदानां, स्वराणां सन्धिपदानाञ्चैव विवेचनमस्ति। साक्षाद्रूपेण पदार्थपर्यालोचनस्य अस्मिन् ग्रन्थे नितान्त एव अभावः अस्ति। पुराऽनेकानां निरुक्तग्रन्थानां सत्ताऽसीत्। येषां सूचनाऽवान्तरग्रन्थेषु यत्र तत्रोद्धरणरूपेण समुपलब्धा भवति। तदारभ्य अद्यापि वेदार्थविवेचनस्य सर्वाधिकगौरवशालिग्रन्थः यास्कविरचितं निरुक्तम् एवाऽस्ति। ग्रन्थरत्नस्यास्य परीक्षणेनानेकविधानां ज्ञातव्यविषायाणां पर्याप्तबोधो भवत्यनायासेनैव। ग्रन्थेऽस्मिन् यत्र तत्र यास्कमहोदयेन आग्रायण-औपमन्यव-कात्थक्य-शाकटायन-शाकपूणि-शाकल्यादीनां बहूनां निरुक्ताचार्याणां तथैतिहासिकयाज्ञिक-नैदानप्रभृति-व्याख्याकाराणां क्रमशः व्यक्तिरूपेण सामूहिकरूपेण उल्लेखः समादरपूर्वकं कृतः। अनेन ज्ञातो भवति यद्वेदार्थानुशीलनस्य परम्परा अतीवप्राचीनकालादेव समायाति।

यास्केन स्वनिरुक्ते (१/१५) कस्याऽपि कौत्सनामकस्य आचार्यस्य मतमुल्लिखितम्। न जाने, कौत्सनामकः कोऽप्याचार्य आसीन्न वेति। वस्तुतः कौत्सोऽयं कोऽप्यैतिहासिकः पुरुष आसीदथवा केवलं



पूर्वपक्षनिमित्तेन स्थापितः कोऽपि यास्ककल्पनाप्रसूतो व्यक्तिरासीत्। कौत्समहोदयस्य सम्मतिरियमस्ति यन्मन्त्राः निरर्थकाः भवन्तीति। कथनस्यास्य सम्पुष्ट्यर्थं तत्र अनेकविधाः असारयुक्तयः प्रदर्शितास्तेन। कौत्समतमेव परवर्त्तिनः चार्वाक-बौद्ध-जैन-प्रभृतिवेदनिन्दकाः स्वीकृतवन्तः।

## ४.२) कौत्सस्य पूर्वपक्षः

१. मन्त्राणां पदं नियतमस्ति, तथैव शब्दक्रमोऽपि नियत एवाऽस्ति। सामवेदस्यायं प्रथमो मन्त्रः- 'अग्न आयाहि वीतये' इति। एतानि पदानि विपरीतक्रमेण- 'वह्नेः आगच्छ पानाय' इति कथयितुं न शक्यते। अत्रानुपूर्वीयक्रमोऽपि नियत एवाऽस्ति। पूर्वोक्तमन्त्रे व्यवस्थापितम् - 'अग्न आयाहि' इत्यत्र पदक्रमं परिवर्त्य व्यातिक्रमेण- 'आयाह्यग्ने' इत्यपि न वाच्यम्। एतस्याः नियतानुपूर्व्याश्च कोऽर्थः। ननु मन्त्राः यदि सार्थकाः भवेयुस्तर्हि तेषां पदानां पदक्रमस्याऽपि परिवर्तनं सार्थकवाक्यानां शैली इव सर्वथा न्याय्यं भवेत्। तद्यथा- 'नियतवाचोयुक्तयः, नियतानुपूर्व्याः भवन्ति।' (नि.१/५/२)

२. अथ ब्राह्मणवाक्यैः मन्त्राणां विनियोगः विशिष्टानुष्ठानेषु भवति। यथा- (शु.य. १/२२) 'ऊरूप्रथस्व' अस्य मन्त्रस्य विनियोगः प्रथमकर्मणि, विस्तारकार्ये च शतपथब्राह्मणः करोति। यदि मन्त्रेष्वर्थद्योतनस्य क्षमता भवति तर्हि स्वतःसिद्धस्य अर्थस्य मन्त्रस्य च ब्राह्मणग्रन्थेन विनियोगदर्शनस्यापेक्षा कथं भवति। तद्यथा निरुक्ते- "अथापि ब्राह्मणेन रूपसम्पन्नाः विधीयन्ते। 'ऊरूप्रथस्व' इति प्रथयति। 'प्रोहाणि' इति प्रोहति" (नि. १/५/१)।

३. मन्त्राणामर्थोऽनुपपन्नो भवति, अर्थादुपपत्त्या युक्त्या वा सिद्धोऽयं भवितुं नार्हति। यजमानो वदति- 'औषधे! त्रायस्व एनम्' अर्थात् हे औषधे! त्वमस्य वृक्षस्य रक्षां कुरु। औषधिस्तु स्वयमेव निर्जीवः भवति। या स्वात्मानमपि रक्षितुमसमर्थाऽस्ति सा वृक्षस्य रक्षां कर्त्तुं कथं शक्ष्यति। यजमानः स्वयं परशुना वृक्षस्योपरि प्रहारं करोति कथयति च- हे परशो! त्वमेनं वृक्षं मा छिन्धि- 'अथापि अनुपपन्नार्थं भवन्ति। औषधे त्रायस्व एनम्। स्वधीते मा एनं हिंसीः, इत्यहं हिंसन्' (नि.१/५/१)। यजमानः स्वयं यस्योपरि प्रहारं करोति तस्यैव रक्षार्थं प्रार्थनाऽपि करोति। अतोऽनुपपन्नार्थाः मन्त्राः भवन्ति।

४. वैदिकमन्त्रेषु परस्परं विरोधोऽपि दृग्गोचरो भवति। रुद्रविषये द्रष्टव्योऽयं मन्त्रः- 'एक एव रुद्रोऽवतस्थे न द्वितीयः' (तैत्ति.सं. १/८/६/१)। रुद्रः एक एवाऽस्ति नान्यः इत्यत्र प्रतिपाद्यते। अत्रैव द्वितीयो मन्त्रस्तस्य रुद्रस्य अनेकत्वं प्रतिपादयति। यथा- 'असंख्यानां सहस्राणि ये रुद्रा अधि भूम्याम्' (तैत्ति.सं. ४/५/११/५)। अर्थादस्यां धरायां असंख्याः रुद्राः सन्ति। अनेन प्रकारेणैकताऽनेकतयोः सन्देहत्वाद् रुद्रस्य विषये कस्यापि तथ्यस्य निर्णयो न सम्भवति। (अथापि विप्रतिषिद्धार्थाः मन्त्राः भवन्ति)

५. वैदिकमन्त्रेषु कार्यविशेषस्य अनुष्ठानाय अर्थज्ञानां कुशलानां पुरुषाणां सम्प्रेषणं भवति। यथा होतारं कथयति- 'अग्नये समिध्यमानाय अनुब्रुहि' (श.ब्रा. १/३/२/३)। अर्थात् प्रज्ज्वलिताग्नये देहि। होता स्वकर्मणि निरतः भवत्येव एवं सति तस्य सम्प्रेषणस्य इयमुक्तिः निरर्थकेति।



## ४.३) यास्कस्य सिद्धान्तपक्षः

१. लौकिकभाषायामपि पदानां नियतप्रयोगस्तथा पदक्रमस्य नियतरूपः दृग्गोचरो भवत्येव। यथा- 'इन्द्राणी' एवं 'पितापुत्रौ'। एतयोः प्रयोगयोरपि न तु क्रमभङ्गः कर्तुं शक्यते न च शब्दपरिवर्त्तनमेव कर्तुं शक्यते। एवं नियमाभावः अपि एतेषां शब्दानां सार्थकता स्वतःसिद्धा एवेति।

२. ब्राह्मणग्रन्थेषु मन्त्राणां विनियोगविधानमुद्रितानुवादमात्रमेवाऽस्ति, अर्थात् मन्त्रेषु यस्यार्थस्य प्रतिपादनमभीष्टं भवति तस्यैवार्थस्यानुवादो ब्राह्मणग्रन्थेषु वर्तते।

३. वैदिकवेदमन्त्राणामर्थः अनुपपन्नो नास्ति। परशुप्रहारकाले या अहिंसायाश्चर्चा वर्तते साऽपि वेदविहितैवेति। परशुना वृक्षच्छेदनमापाततः हिंसाद्योतकमवश्यमस्ति, किञ्च वेदेन एव ज्ञातो भवति यत्परशुच्छेदनं हिंसाद्योतकन्न भवति। यस्मिन् कर्मणि पुरुषः वेदेन नियुक्तो भवति, तत्कर्म अहिंसात्मकम् भवति। औषधि-पशु-मृग-वनस्पतिप्रभृतीनां यज्ञे उपयोगः भवति। तेन ते परमोत्कर्षं प्राप्नुवन्ति। अतः यज्ञे एतेषां विधानम् अभ्युदयप्रदायकं भवति न तु हिंसात्मकमिति। अनेन प्रकारेण कस्यापि वृक्षस्य यज्ञार्थं विधिपूर्वकं शाखाच्छेदनमनुग्रहमेवाऽस्ति न तु हिंसेति। इयमहिंसा इयं हिंसा इति आगमात् एतत् प्रतीयते। प्रतिविशिष्टश्चायमेव वैदिकं आम्नाय आगमः। एतत्पूर्वकत्वात् अन्येषाम् आगमनानाम्।अनुगृह्णाति यज्ञविनियोगार्थविधानतः छिन्दन् (दुर्गाचार्यः, निरुक्तस्य टीका १/१६/६)।

४. मन्त्रेष्वेवं रुद्रस्यैकत्वम्। क्वचित् अनकत्वस्योल्लेखेऽपि पारस्परिकविरोधो नास्ति। यतो हि देवा महिमशालिनो भवन्ति। एकत्वेऽपि तेऽनेकविभूतिषु वर्तमानाः भवन्ति। यथा इन्द्रः अजातशत्रुः अर्थात् अस्य शत्रुः न जातः, न जन्मग्रहणं कृतवान्। तथापि इद्रः शत्रुविजेता इत्यपि वक्तुं शक्यते, किञ्च न कश्चित् दोषः। वर्णमिदं रूपकाश्रितकल्पनायामुपरि अवलम्बितमस्ति। लोकेऽपि शत्रुसम्पन्नत्वेऽपि राजा शत्रुहीनः कथ्यते।

५. यज्ञानुष्ठाने परिचितमपि सम्प्रेषणं अव्यर्थं वक्तुं न शक्यते। यतो विशिष्टातिथेः समागमनोपरि मधुपर्कदानं सर्वविदितमस्ति, तथाऽपि लोकव्यवहारेऽपि विधिज्ञपुरुषात् वारत्रयं मधुपर्कस्य याचना भवत्येव। तद्वदेव ब्राह्मणग्रन्थस्य अपि सम्प्रेषणा नास्ति निरर्थकेति।



## पाठगतप्रश्नाः-१

१. आर्यभाषा कतिधा।

२. भारतीयाः धर्मग्रन्थाः कया भाषया लिखिताः।

३. श्रुतर्षिरिति संज्ञा केषां कथञ्च?

४. निरुक्तकारः कः।



५. निर्घण्टुशब्दस्य कः अर्थः।

६. आधुनिकानां वेदार्थावगमने दुर्बलता कुत्र?

७. निरुक्तस्य एकस्य टीकाकारस्य नाम उल्लिख्यताम्।

## ४.४) पाश्चात्यपद्धतिः

वेदार्थानुसन्धानविषये अद्यत्वे प्रधानतया त्रीणि मतानि सन्ति, येषु प्रथमं पाश्चात्यानां वैदिकार्थानुसन्धित्सूनां मतमस्ति। अन्ये च द्वे मते भारतीयविदुषामेव स्तः। पाश्चात्यपण्डितानां मतानुसारेण वेदार्थानुशीलनाय तुलनात्मकभाषाशास्त्रस्य ऐतिहासिकग्रन्थस्य च अध्ययनम् अतीव आवश्यकम् इति। भारतेतरदेशीयानाम् जनानाम् आचारव्यवहारादीनाम् ज्ञानमपि वेदार्थानुसन्धाने आवश्यकम् इति। यतः एतयोरुभयोः पारस्परिकतुलनया एव अस्माकं वैदिकधर्मस्य मूलस्वरूपस्य परिचयः प्राप्तुं शक्यते। अनेनैव कारणेनेयं ऐतिहासिकपद्धतिः (History method) इति नाम्ना ख्याताऽस्ति। भारतीयपरम्परां प्रति वैदेशिकविद्वांसः उदासीना एव सन्ति। अतः ते आङ्गलविद्वांसः ब्राह्मणटीकानामुपरि आक्षेपं कुर्वन्ति। राथप्रभृतिपाश्चात्याः भारतीयपण्डितान् वेदार्थानुसन्धाने सर्वथा अयोग्यान् एव मन्वते। ते पाश्चात्यपण्डितान् एव योग्यत्वेन मन्वते, ये भारतीयपरम्परां पूर्णतः अजानतः एव केवलं भाषाशास्त्रमानवशास्त्रप्रभृतीनां विषये एव मतिं दधते इति।

अस्यां पद्धतौ सन्ति केचिद् गुणाः किन्तु बहुविधाः अवगुणाः अपि सन्ति। वेदानाम् आविर्भावः अस्मिन् आर्यावर्त्तेऽभवत्। वेदनिहिततत्त्वानि आश्रित्यैव कालान्तरे स्मृत्यादिग्रन्थानां प्रणयनमभवत्। वेदाः भारतीयानां स्वकीया समृद्धिरस्ति। अस्माकमृषयः, आत्मज्ञानिनो विद्वांसः, तत्त्वद्रष्टारो महर्षयश्च वेदानां दर्शनं यथा कृतवन्तः तथैव तेषाम् अनुशीलनम् अस्माकं कर्त्तव्यमस्ति इति। तेनैव रूपेण तेषां गूढार्थावबोधनमेव वेदानामर्थस्य वास्तविकमनुशीलनमिति वक्तुं शक्यते। वेदाद्भारतीयतायाः निस्वार्थभारतेतरधर्मेण विज्ञानेन च साहाय्यं गृहीत्वा तदर्थावबोधनस्य दुःसाहसं मूले कुठाराघात इव भवति नान्यत्। अनेन प्रकारेण वेदानामर्थं कृत्वा वैदिकाचार्याणां विषये उन्मादवत्प्रलापः कथमपि उचितो नास्ति। उदाहरणार्थं वयमत्र एकस्य शब्दस्य परीक्षणं कुर्मः।

वैदिकयुगे अस्मिन्देशे लिङ्गपूजा प्रचलिता आसीन्न वेति विषये एते पाश्चात्यपण्डिताः महता कोलाहलेन यत् स्वकीयं सिद्धान्तं स्थापितवन्तस्तत्तु बालानामपि उपहसनयोग्यम् इति। 'शिश्नदेवः' इति पदस्य प्रयोगः ऋग्वेदे (७/२१/५, १०/९९/३) द्वयोः स्थानयोः मिलति। पाश्चात्यविद्वांसः शब्दस्यास्योत्तरभागम् अभिधाप्रधानं मत्वा स्वसिद्धान्तं संस्थाप्य कथयन्ति यत् वैदिककाले अप्यस्मिन् देशे लिङ्गपूजायाः प्रचलनमासीद् इति। परन्तु अत्र अस्य शब्दस्य वास्तविकार्थः तथा नास्ति। वस्तुतः देवशब्दः आलङ्कारिकार्थे प्रयुक्तः इत। वेदेऽन्यत्र प्रयुक्ताः पितृदेव-मातृदेव-आचार्यदेवप्रभृतयः शब्दास्तथैव सन्ति। अत्र देवशब्दास्यार्थः 'पूजकः' इत्येव भवति नान्यदिति। तैत्तिरीयोपनिषदि (१/१) प्रयुक्तानाम्- 'मातृदेवो भव, पितृदेवो भव, आाचार्यो देवो भव' इत्यादीनाम् शब्दानामर्थो भवति- मातरं देवता इव पूजय,



पितरं देवता इव पूजय, आचार्यं देवता इव पूजय इति। एतेषां शब्दानां व्याख्यानावसरे आचार्यशङ्करो वदति- देवतावत् उपास्याः एते' इत्यर्थः। श्रद्धादेव- इति शब्दोऽपि शिश्नदेवाद्भिन्नो नास्ति। अत्र उभयोः स्थलयोः 'देव'-शब्दस्य प्रयोगः आलङ्कारिक एव। अस्यां स्थितौ शिश्नदेवस्याप्यर्थो भवति- शिश्नः (लिङ्गः) देवता अस्ति अस्येति, अर्थात् कामक्रीडायां नियतः पुरुषः। अत्र पण्डिताः अस्य परम्परागतार्थः 'अब्रह्मचर्यः' इत्येवम् अर्थं स्वीकुर्वन्ति। किञ्च पाश्चात्यविद्वांसोऽत्र प्रयोगमूलकस्य परम्परागतार्थस्योपेक्षां कृत्वा निर्मूलाप्रामाणिकसिद्धान्तस्य उद्भावं कृतवन्तः। अनेनैव प्रकारेण पारस्करगृह्यसूत्रस्य 'कूर्मपित्तमङ्के निधाय जपति' वाक्येऽस्मिन् प्रयुक्तस्य कूर्मपित्तशब्दस्य परम्परागतार्थस्य जलपूर्णघटस्योपहासं कृत्वा जर्मनविदुषा ओल्डनवर्गमहोदयेन 'कच्छपपित्तं क्रोडे निधाय' इत्यर्थः कृतः।



## पाठगतप्रश्नाः-२

८. पाश्चात्यविदुषां केषाञ्चन नामानि लिख्यताम्।

९. कूर्मपित्तशब्दस्य परम्परागतः अर्थः कः।

---

## ४.५) आध्यात्मिकपद्धतिः

स्वामी दयानन्दसरस्वती-महोदयः कतिपयानां विशिष्टानां वर्त्मनां चर्चां स्वभाष्ये अकरोत्। वेदानाम् अनादित्वस्य सिद्धान्तः स्वभाष्ये प्रतिपादितः अनेन विदुषा। अस्य महापुरुषस्य विचारे वेदेषु लौकिकेतिहासस्य सर्वथाऽभावोऽस्ति। वेदेषु प्रयुक्ताः सर्वे शब्दाः यौगिकाः योगरूढा रूढाश्च सन्ति इति। इन्द्राग्निवरुणादयः ये देवतावाचकाः शब्दाः सन्ति ते सर्वे अपि यौगिकत्वेनैव अस्य परमात्मनः पर्यायवाचकाः वर्तन्ते। स्वामिनोऽयं सिद्धान्तः अंशतः समुचित एव प्रतिभाति। निरुक्तकर्ता तु स्पष्टम् अकथयत्- यावन्तो देवाः सन्ति ते सर्वे एकस्य एव महतः देवस्य परमेश्वरस्य विशिष्टायाः शक्तेः प्रतीकस्वरूपाः सन्तीति। **'महाभाग्यात् देवतायाः एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति।'** (निरुक्तः ७/४)। ऋग्वदेस्य तु स्पष्टम् प्रतिपादनमस्ति- **'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातारिश्वानमाहुः' इति** (ऋ.सं १/१६४/४६)। अतोऽग्निः ऐश्वर्यशालिनः परमेश्वरस्यैव रूपमस्तीति स्वीकुर्वन्ति सर्वथोचितमेव। अत्र न कोऽपि विरोधः केषांश्चिदपि प्रतीयते, किञ्च यदस्यां शैल्याम् अग्न्यादिदेवानां प्रत्याख्यानं भवति तदा तु विरोधस्य अभ्युदयो भवत्येव।

वेदेषु देवातानां महत् स्थानं वर्तते। मानवः प्रत्यहं प्रकृतिदेव्याः नानालीलाः पश्यति, वैदिककालस्य महर्षयः तस्याः लीलायाः तत्त्वम् अवधारयितुं भिन्नाः देवताः अकल्पयन्। महर्षीणां विश्वासोऽयं यदासां देवानाम् अनुकम्पयैव सर्वाणि कार्याणि नियम्यन्ते। जगति प्रवर्तमानानां सर्वेषामपि प्रपञ्चानां कारणीभूताः देवाः एव। यास्को वदति यद्देवतासु काश्चन पृथिवीस्थानीयाः, काश्चन अन्तरीक्षस्थानीयाः, काश्चन द्युस्थानीयाश्च सन्ति। पृथिवीस्थानीयदेवतासु अग्निः, अन्तरीक्षस्थानीयासु



देवतासु इन्द्रः, द्युस्थानीयासु च देवतासु सूर्यविष्णुप्रभृतयो देवाः सन्ति। ऋग्वेदे हि देवताः प्राणशक्तेः महत्त्वात् 'असुर' इति उच्यते। प्रतीच्यानां प्रधानान् देवान् उद्दिश्य विचारोऽयं यद् भौतिकघटनोपपत्त्यै प्राकृतिकानि दृश्यानि देवतात्वेन कल्पितानि। ऋग्वेदस्यादिमे युगे बहूनां देवानां सत्ता आसीत्। गच्छता कालेन मनोविकासेन सह जनाः देवतानां तासाम् एकम् एवाधिपतिं कल्पितवन्तः। पुरुषसूक्तं सर्वेश्वरवादं स्पष्टं समुपस्थापयति।

यास्कस्य निरुक्ते दैवतकाण्डे देवतास्वरूपं सुन्दरतया विवेचितम्। जगतो मूले एकैव महत्वशालिनी महाशक्तिः शोभते। सा निरतिशय-ऐश्वर्यशालिनीत्वात् 'ईश्वरः' इति गीयते। सैव शक्तिर्बहुभिः प्रकारैः स्तुतेति। ऐतरेयारण्यकञ्च 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसान्त- एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इत्यनेन आम्नायेन उक्तमेव विचारं परिपोषयति।

देवताः प्रायेण त्रिषु रूपेषु वर्तन्ते- आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकञ्च। इन्द्रियगम्यं रूपमाधिभौतिकं भवति, इन्द्रियागम्ये च आधिदैविकम् आध्यात्मिकञ्च भवतः। 'विष्णुर्नु कं वीर्याणि......।' 'प्रविष्णवे शूषमेतु।' 'मन्यगिरिरिक्षित उरुगायाय वृष्णे......।' इत्यादिमन्त्रैः वेदो विष्णुदेवताया उक्तानि त्रीणि अपि रूपाणि प्रदर्शयति।

मानवा देवतानां तस्याः शक्त्याः साधुत्वम् अविज्ञाय तद्वारेण आत्मानम् उपकुर्युः इत्येतदर्थं श्रुतिमातरस्तासां रूपाणि अस्मत्सकाशे समुपस्थापयन्ति।

मन्त्रैः देवानां न केवलम् एकमपि तु बहूनि रूपाणि प्रतिपाद्यन्ते। एवञ्चेत् प्रतीच्यानां तस्मिन् वचसि कथं विश्वासो भवेत्, यत्र देवताः भौतिकदृश्यानाम् अधिष्ठातृत्वेन प्रतीकत्वेन वा कल्प्यन्ते। वेदवर्णितेषु प्रमुख्येषु विषयेषु देवतास्तुतिः अपि एकः प्रमुख्यो विषयः।

अनेन विचारेण अग्न्यादिशब्दाः न केवलं परमेश्वरस्यैव वाचकाः, अपि तु तत्तद्विशिष्टानां देवानाम् अपि वाचकाः सन्तीति ज्ञायते। अग्निशब्दोऽत्र भौतिकाग्निपदस्य बोधको भवति, यस्याग्नेः कृपयाऽस्य चराचरस्य सकलव्यवहाराः नियमिताः भवन्ति। शब्दोऽयं तस्य देवस्यापि सूचकोऽस्ति, योऽस्य भौतिकाग्नेः अपि अधिष्ठाताऽस्ति। तेन सहैव अयं शब्दः अस्य जगतः नियामकस्य परमात्मनः अर्थमपि प्रकटयति। अग्निदेवस्य एतानि त्रीणि रूपाण्यपि समुचितान्येव। अग्निमन्त्रस्य सूक्ष्मपर्यालोचनेन सिद्धो भवति यद् अयम् अग्निमन्त्रः उपरि वर्णितस्य अग्निदेवस्य त्रीण्यपि रूपाणि समभावेन लक्षयति। अतोऽग्निदेवस्य पूर्ववर्णितं रूपद्वयं दृष्ट्वा अग्निपदं परमपदवाचकम् एवास्ति इति मतं तु प्राचीनपरम्परायाः सर्वथा विरुद्धम् एवाऽस्ति। अनेनैव कारणेनास्याः शैल्याः सर्वथानुसरणं सर्वमान्यो न भवति।

स्वामी जीवमहोदयः ब्राह्मणग्रन्थान् संहिताग्रन्थः इव अनादित्वेन प्रामाणिकत्वेन च न स्वीकृतवान्। श्रुतौ अन्तर्गतानां ब्राह्मणग्रन्थानां गणना तस्याभीप्सितो नास्ति। तर्हि संहितायाः स्वरूपदृष्ट्या स्वामिनः सिद्धान्तोऽयम् अयथार्थ एवाऽस्ति। तैत्तिरीयसंहितायां मन्त्रैः सह ब्राह्मणांशस्यापि गद्यात्मकस्वरूपः समुपलब्धो भवति। एवं सति तैत्तिरीयसंहितायाः एको भागः श्रुतिः, अपरभागश्च अश्रुतिरेवंविधकथनं कीदृग्भवति। स्वामिनः अनुयायिनां वैदिकपण्डितानां सम्मतौ वेदेषु आधुनिक-भौतिक-विज्ञानस्य सर्वेषाम् आविष्कृतानां पदार्थानां सत्ता स्वीकृताऽस्ति। तर्हि किं वेदस्य इदमेव महत्त्वं



वर्त्तते यद्, एतेषु वेदेषु वैज्ञानिकाविष्कृतानां सकलवस्तूनां वर्णनं समुपलब्धम् भवति। वेदास्तु आध्यात्मिकज्ञानस्य निधय एव सन्ति। भौतिकविज्ञानेन आविष्कृतानां पदार्थानां वर्णनं नास्ति वेदस्य प्रयोजनम्। एवं सति यौगिकप्रक्रियानुसारेण एतेषां भौतिकविज्ञाने आविष्कृतानां पदार्थानां वेदेषु अस्तित्वस्वीकरणं नोपयुक्तं प्रतिभाति। अतोऽस्य स्वामिनः पद्धतिरियं सर्वांशतः एव स्वीकार्या इति भवितुं नार्हतीति।

वैदिकमन्त्राणाम् अर्थः गूढोऽस्ति, ऋषिप्रदर्शितेन मार्गानुसारेण आर्षदृष्ट्या चैव मन्त्रार्थाः बोद्धव्याः। मन्त्राणां शब्देषु सत्स्वपि व्याकरणजन्या सरलता, तेषामभिधेयार्थस्य अन्वेषणं च नितान्तं दुरूहमस्ति। गूढार्थप्रतीत्यर्थम् अस्य मन्त्रस्य रहस्यवादः अयं द्रष्टव्यः-

**'चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्याम् आविवेश।।' -ऋ. ४/५८/३**

अस्य मन्त्रस्य सामान्योऽर्थः- अस्य चत्वारि शृङ्गाणि, त्रयः पादाः, द्वे शिरसी, सप्त हस्ताश्च सन्ति। प्रकारत्रयेण बद्धोऽयं वृषभस्तारस्वरेण कोलाहलं करोति। महादेवो मर्त्यलोके प्रवेशमलभत। कोऽयं महादेववृषभः। यास्केनास्य मन्त्रार्थस्य रहस्योद्घाटनं कृतम्- केषाञ्चिन्मते अयं महादेववृषभो यज्ञोऽस्ति। चत्वारो वेदाः अस्य चत्वारि शृङ्गाणि सन्ति, पदानि तु त्रैकालिकसवनकर्माण्येव अस्ति, द्वे शिरसी तु प्रायणी-उदयनीय-नाम्नी द्वे हविषी स्तः। सप्त हस्तास्तु सप्तच्छन्दांस्येव सन्ति, यज्ञोऽयं मन्त्र-ब्राह्मण-कल्पैस्त्रिधा बद्धोऽस्ति। अनेन प्रकारेण यज्ञरूपेण महादेवो यजनार्थं मरणधर्मिषु प्रविष्टोऽभवत्। अन्ये तु महादेवो वृषभोऽयं सूर्योऽस्ति, यस्य चत्वारो दिश एव चत्वारि शृङ्गाणि सन्ति, त्रयो वेदाः पादाः त्रयः पादाः सन्ति, अहोरात्रञ्च द्वे शिरसी स्तः, सप्त किरणानि च सन्ति सप्त हस्ताः। सूर्यस्तु पृथिवी-आकाश-अन्तरिक्षैः सम्बद्धः अस्ति, किं वा ग्रीष्म-वर्षा-शिशिर- ऋतूनामुत्पादकः अयमस्ति सूर्यः, अतः असौ अस्मिन्मन्त्रे 'त्रिधा बद्धः' इति कथयति (द्रष्ट.नि. १३/३)। पतञ्जलिना पस्पशाह्निकेऽस्य मन्त्रस्य शाब्दिकव्याख्या समुपस्थापिता। तन्मते तु महादेवोऽयं शब्दोऽस्ति, यतोऽस्य चत्वारि शृङ्गाणि चतुर्विधशब्दाः (नाम-आख्यात-उपसर्ग-निपाताः) सन्ति, त्रीणि पदान्तस्य भूत-वर्तमान-भविष्यदिति त्रयः कालाः सन्ति, द्विविधा भाषा, नित्या कार्या चेति द्वे शिरसी, सप्तहस्तास्तु प्रथमातः सप्तमीं यावद् विभक्तयः सन्ति। शब्दस्योच्चारणन्तु हृदय-कण्ठ-मुखैः त्रिभिः भवति, अतोऽयं शब्दस्त्रिधा बद्धोऽस्ति। शब्दगतार्थस्य वृष्टकरणेन शब्दोऽयं वृषभपदवाच्यो भवति। राजशेखरेणास्य मन्त्रस्य व्याख्या स्वकीयकाव्यमीमांसायां साहित्यशास्त्रदृष्ट्यैव कृतेति। सायणभाष्ये एतदतिरिक्तस्य अर्थस्यैव वर्णनमस्ति। उपरि वर्णितेष्वर्थेषु प्रत्येकम् अर्थाः सम्बद्धाः एव सन्ति, अतः सर्वे ते अर्थाः स्व-स्वदृष्ट्या समादरणीयाः माननीयाश्च सन्ति। मन्त्राणां गूढार्थस्य इदमेव माहात्म्यम् अस्ति। तेषां पवित्राणां मन्त्राणाम् अर्थः विविधरूपेण कर्तुं शक्यते। यास्केन अस्मिन् प्रसङ्गे षडधिकानां मतानां चर्चा कृता। अस्यां चर्चायाम् ऐतिहासिक-वैयाकरण-परिव्राजक-याज्ञिकादयः प्रमुखाः सन्ति। एतदतिरिक्तः विविधग्रन्थानां समर्थकानाम् आचार्याणां मतस्यापि यथास्थानम् उल्लेखो मिलति।





## पाठगतप्रश्नाः-३

१०. वेदे शब्दाः कीदृशाः सन्ति।

११. सर्वेषां देवानाम् ऐकात्म्यं प्रतिपादयन् निरुक्तकारः किमाह।

१२. देवाः केषु रूपेषु वर्तन्ते।

१३. अग्निशब्दः केषां वाचकः।

१४. वेदमन्त्राणाम् अर्थाः कथं ज्ञायन्ते।

१५. महादेवस्य वृषभस्य कति अङ्गानि वर्तन्ते। कानि च तानि।

## ४.६) सायणभाष्यस्य महत्त्वम्

आचार्यसायणः स्वभाष्यलेखनकाले स्मृतिपुराणादिग्रन्थेभ्यो यथेच्छं साहाय्यं गृहीतवान्। तेन परम्परागतः अर्थ एवाङ्गीकृतः। तत्सम्पुष्ट्यर्थम् आवश्यकतानुसारेण यत्र तत्र पुराण-इतिहास-स्मृति-महाभारतादिग्रन्थैः प्रमाणं सङ्गृह्य समुद्धृम्। वेदानामर्थज्ञानाय षडङ्गाध्ययनस्याऽपि महत्त्वमस्ति। सायणस्त्वनेन सिद्धान्तेन पूर्णपरिचित आसीत्। ऋग्वेदस्य प्रथमाष्टकस्य व्याख्यायां शब्दानां पर्यालोचने व्याकरणस्य नैपुण्येन निरूपणं कृतमनेन। प्रायः प्रत्येकं महत्त्वपूर्णशब्दस्य व्युत्पत्तेः, सिद्धेः, स्वराघातस्य च वर्णनं पाणिनीयसूत्राणां साहाय्येन प्रातिशाख्यसाहाय्येन च कृतम्। सावधानतया अस्य अध्ययनेन समस्तज्ञातव्यविषयाणां सुन्दरतया अवबोधो भवति। निरुक्तस्याप्युपयोगः कृतोऽस्मिन् भाष्ये। यास्केन व्याख्या कृतेति सायणाचार्यः तत्तन्मन्त्राणां भाष्यलेखनकाले सुन्दरतया अलिखत्। एतद्विहाय सायणाचार्यः ऋग्वेदस्य प्राचीनभाष्यकर्तृभिः स्वन्दस्वामि-माधवादिभिः कृतानामप्यर्थानां यथावकाशं ग्रहणमकरोत्। कल्पसूत्राणामप्युपयोगः सविस्तरं कृतोऽनेन स्वभाष्ये। यज्ञविधाने तु सायणस्य प्रगाढप्रतिभा परिलक्ष्यते। तेन हि कल्पसूत्रविषयगतानामावश्यकतत्त्वानां वर्णनप्रसङ्गे सर्वत्र स्वविशिष्टप्रतिभायाः अपि प्रदर्शनं कृतम्। सूक्तस्य व्याख्यारम्भे एव तस्य विनियोगस्य ऋषेः, देवतादिविज्ञातव्यतथ्यानां वर्णनं प्रामाणिकग्रन्थानाम् उद्धरणपुरःसरम् अकरोत्। उपलभ्यमानाः सूक्तसम्बन्धिनीः आख्यायिकाः अपि सप्रमाणं समुपस्थापयत्। मीमांसायाः विषयस्यापि निवेशं भाष्यारम्भस्य उपोद्घाते बोधगम्यभाषया प्रदत्तमनेन सायणेन वेदिविषयकस्य समग्रसिद्धान्तस्य प्रतिपादनं रहस्योद्घाटनञ्चापि कृतम्। अनेनैव कारणेन सायणकृतवेदभाष्यस्य गौरवमस्ति। स्वभाष्ये सायणः याज्ञिकपद्धतेरेव महत्त्वमददात्। तस्मिन् काले तस्यैवावश्यकता आसीत्। तदा कर्मकाण्डस्य प्राधान्यमासीत्। एतत् खलु सर्वं विचार्य सायणेन स्वभाष्यं निर्मितम्।

अनेन कारणेन मध्ये सायणाचार्यस्य विशिष्टं महत्त्वमस्ति। सायणभाष्यं विना वेदार्थानुशीलनस्य कीदृशी दशा भवेदिति तु कथयितुं न शक्यते। यथेष्टं व्युत्पत्तिमाश्रित्यैकस्य एवार्थस्य विरुद्धबहुविधार्थकरणे प्रवृत्तानां पाश्चात्यपण्डितानां मध्ये परमगतार्थस्यैव स्वभाष्ये स्थानदातारं सायणं



विहायोचितमार्गं प्रदर्शयितुं कः समर्थो भवति। वस्तुतः आङ्गलानां शिक्षापद्धत्या वयं संवृत्ताः। आङ्गलजनाः स्वार्थबुद्ध्या अस्मदीयानि वेदोपनिषत्स्मृतिपुराणानि तिरस्कृतवन्तः, अस्माभिरपि तस्य सहनं कृतम्। जेतारः स्वार्थधिया अन्धाः सञ्जाताः, परं वयमपि अज्ञानात् परप्रत्ययनेयबुद्धित्वाद् अन्धाः जाताः। पुरा अस्मद्देशस्य राजानो विद्वज्जनान् स्वसभायाम् आश्रयं प्रददति स्म, संस्कृताध्ययनाध्यापनार्थं युक्तामुचितां वृत्तिं च प्रददति स्म।

परं सम्प्रति तादृशी व्यवस्था न क्वाऽपि जीवन्ती प्राप्यते। तस्मात् पुराणादिग्रन्थानां वेदार्थावबोधार्थं परमावश्यकतास्ति।

सायणो वैदिकसम्प्रदायस्य यथार्थतया वेत्ता आसीत्। तस्मात्तदीयं वेदभाष्यं वस्तुतस्तु वेदार्थोन्मीलनकारिषु भाष्येषु मूर्धन्यतमं भाष्यमस्ति। तद् दुर्गमम् वेददुर्गम् सरलतयैव प्रवेशयति वेदार्थजिज्ञासुम्। वैदिकविदुषामुपरि यथेष्टमृणमस्ति सायणाचार्यस्य। पाश्चात्यपण्डितास्तु वेदार्थावबोधने विपुलं प्रयासं कृतवन्तः। तस्मिन् प्रयत्ने ते यत्किञ्चित् साफल्यं लब्धवन्तः तत्तु सायणाचार्यस्य अनुकम्पायाः एव फलमस्ति। सायणभाष्यस्य साहाय्येनैव एते पाश्चात्यपण्डिताः वैदिकमन्त्राणामर्थावबोधने कृतकार्या अभवन्। कतिचिच्छब्दानाम् अर्थावबोधने विरोधाभासं प्रदर्श्य सायणाचार्यस्योपहासः तैः कृतः, तत्तु अन्यत्। किञ्च मुख्यतः संहितापञ्चकोपरि ईदृशं सुव्यवस्थितम्, पूर्वपरविरोधहीनमुपादेयं पाण्डित्यपूर्णञ्च भाष्यलेखनम् अतीव श्रमसाध्यं भवति। ईदृशः कार्यस्य महत्त्वं कोऽपि विज्ञजनः एव विज्ञातुं समर्थोऽस्ति। अस्मिन्नर्थे वैदिकधर्मस्य वैदिकभाषायाञ्च कियदभिज्ञता प्राप्तव्येति तु साम्प्रतिकभाषाज्ञानेन एव प्रतीयते। तदीया महत्ता उपादेयता च भाषादृष्ट्यापि विचारणीया। इयं वैदिकभाषा एवास्ति या भाषाविदां मध्ये प्रसृतं प्राचीनभाषाविषयकं मतभेदं निराकृतवती। साम्प्रतिका भाषाशास्त्रपण्डिताः इच्छन्ति यत्तेषामभिमतो विषयो नितरां पूर्णतया परिपक्वतां गच्छेत् इति। ते वेदान् अधीत्य अनुशील्य च तासु तासु भाषासु समागतानां पाड्रे-नाइट-फार्चून्-इत्यादीनां मूलरूपं तेषां तद्रूपान्तरताञ्च साधु भोत्स्यन्ते। ज्ञास्यन्तीदं च भौतिकेष्वर्थेषु प्रयुज्यमानानि पदानि युगान्तरेण कस्माद् आध्यात्मिकेऽर्थे प्रयुक्तानि भवितुमारभते। भूयिष्ठप्रयोजनसाधकत्वाद् वस्तुतः सायणभाष्याणि सन्ति महत्त्वभाजो ग्रन्थाः। किञ्च सायणाचार्यस्यानुकम्पयैव वेदार्थेषु प्रविष्टाः पाश्चात्यपण्डिताः यदि कथयन्ति- 'Las von Sayana' (सायणस्य बहिष्कारं कुरु) तर्हि तत्र किमाश्चर्यम्। का परिदेवना। यद्यपि सायणाचार्यस्याऽपि भाष्याणि दोषरहितानि सन्ति, इत्यपि वक्तुं न शक्यते। यतो हि मानवानां कृतिषु निर्दुष्टतायाः कल्पनैव व्यर्थास्ति, तथापि सायणाचार्यः परम्परागतार्थस्य ज्ञाताऽस्ति, नात्र लेशतोऽपि सन्देहः। सायणाचार्यस्य वेदभाष्याणि वेदार्थज्ञानस्य कुञ्चिकारूपेण विलसन्ति। वेदानां दुर्गमम् दुर्गम् प्रवेशाय अस्य भाष्याणि विशालसिंहद्वारस्य कार्यं कुर्वन्ति।

किञ्च सम्प्रति पाश्चात्यानुसन्धानकर्त्तारः अपि सायणस्य महत्त्वेन अपरिचिता न सन्ति। ऋग्वेदस्य प्रथमानुवादकस्य आङ्गलविदुषः विल्सनमहोदयस्य इयमुक्तिः अविस्मरणीयाऽस्ति-

'Sayana undoubtedly had a knowledge of his text far beyond the pretensions of any European scholar, and must have been in possession either through his own learning or that of his association, of all the interpretation which

have been perpetuated by traditional teaching from the early times.' -Translation of Rigveda

सायणभाष्यस्य प्रथमपाश्चात्यसम्पादकस्य डा. मैक्समूलरमहोदयस्यापीयमुक्तिः दर्शनीयाऽस्ति-

We ought to bear in mind that five and twenty years ago, we could not have made even our first steps, we could never at least have gained a firm footing without his leading string. -Introduction to Rigveda; Edon.

वेदार्थज्ञाने वस्तुतः सायणाचार्यः अन्धानां यष्टिरिवाऽस्ति सौभाग्येन सायणं प्रति सम्प्रति पाश्चात्यपण्डितानामपि विचारपरिवर्तनम् एवाभवत् यत्तेषु उपेक्षास्थाने सम्माननीयो भावः परिदृश्यते। सायणकृतवेदार्थस्य प्रामाणिकताऽपि प्रामाणितोऽभवत् पाश्चात्यविदुषां समवाये। अस्मिन् विषये जर्मनीयविद्वांसौ पिशलगौल्डनरौ अतीव महत्त्वपूर्णं कार्यमकुरुताम्। उभौ विद्वांसौ 'विदिशेस्तूदियन्' (वैदिकानुशीलनम्) नामकग्रन्थस्य त्रिषु भागेषु विविधगूढवैदिकशब्दानाम् अनुसन्धानं कृतवन्तौ। येन सायणचार्येण कृतः अर्थः सुतरां प्रमाणितोऽभवत्।

किञ्च सायणाचार्यस्यैवार्थेन नास्माकं सन्तोषो भवति। वेदस्य गभीरता रहस्यमयता चातीव गौरवास्पदमस्ति। तेनैव हेतुना विभिन्नसमयेषु अभिनवव्याख्यासम्प्रदायस्य समुद्भवः अभवत्। ते च व्याख्याकर्तारः स्वस्वव्याख्याकौशलेन प्रतिष्ठां प्राप्तवन्तः।

## ४.७) अरविन्दस्य महत्त्वम्

सम्प्रति तत्त्वचिन्तकेषु, आध्यात्मसाधकेषु च अरविन्दमहोदयो मान्यो मूर्धन्यश्चास्ति। तस्य दृष्ट्या येषां विदुषां वेदं प्रति ह्यसीमा श्रद्धाऽस्ति तेषां सम्मुखे स्वत एव वैदिकशब्दानामर्थः प्रस्फुटो भवति। वेदस्यार्थः रहस्यात्मकः निगूढश्चास्ति। अस्य सूचनाऽपि वेदादेव प्राप्यते। वैदिकानाम् ऋषीणामियं दृढा धारणाऽसीत् यत् मन्त्राणां समुन्मेषः हृदयस्य अन्तरतमप्रदेशात् भवति। अतो वेदेषु निगूढज्ञानस्य निधिः प्रक्षिप्तोऽस्ति। एकस्मिन् मन्त्रे (ऋ. ४/३/१३/६) ऋषिः वामदेवः स्वात्मानम् अन्तःप्राज्ञसम्पन्नत्वेन उपस्थापितवान्। ऋषिरयं स्ववाग्भिः निगूढवाक्यानाम् अभिव्यक्तिं कृतवान्। दीर्घतमानामकस्य ऋषेः अपि एवमनुभवः अस्ति यत् वेदमन्त्राः नित्याः, अक्षरव्योम्नि चाधिवासिनः। किञ्च यो हि तं परमात्मानं न जानाति सः ऋग्भिः किं करिष्यति। तस्मै ऋचः किं प्रयोजनमस्ति। तथाहि आम्नातम्-

**"ऋचो अक्षरो परमे व्योमन्, यस्मिन् देवा अधिविश्वे निषेदुः।**
**यस्तन्न वेद किं ऋचा करिष्यति य इत् तत् विदुस्त इमे समासते।।" इति।**
**(ऋ.वे १/१६४/३९)**

वैदिकमन्त्राक्षराणां सम्बन्धः दिव्येन उच्चतरस्तरेण (ऋ.१/१६४/४६) सहैवास्ति। अनेन प्रकारेण वैदिकमन्त्राणां दिव्यत्वं वैदिकप्रामाण्येनैव स्वतःसिद्धं भवति। किञ्च वैदिकमन्त्राणां प्रत्येकं शब्दः कस्याप्याध्यात्मिकतत्त्वस्य प्रतीको भवति।

श्रीअरविन्दमहोदयस्य मते योगेन तपसा च विधूते पवित्रे हृदि एव परमात्मा स्फुरितो भवति। वैदिकशब्दाः आध्यात्मिकतत्त्वस्यैव निश्चयेन प्रतीकीभूताः सन्ति। एवं प्रत्येकं वैदिकशब्दः कस्यापि



शक्तेः, आध्यात्मिकसामर्थ्यस्य, तपोबलस्य च प्रतीको भवति। वैदिकर्षिः कस्मिन्नपि मन्त्रे यदा अश्वं प्रार्थयति तदा तस्यार्थः अश्वरूपः सामान्यघोटको न भवति, अपि तु अश्वपदेन तत्रान्तर्बलस्य स्फुरणं प्रति सङ्केतो भवति। घृतशब्दः यज्ञस्य साधनभूतं सामान्यं घृतं बोधयति। किञ्च अरविन्दमहोदयस्य मते तु घृतशब्दस्य प्रकाशः इत्यर्थो भवति। अत एव इन्द्रस्य अश्वः यदा 'घृतस्नु'-पदेन बोधितो भवति तदा तस्यार्थः घृतस्य क्षरणम् इति न भवति, अपि तु प्रकाशस्य सर्वत्र विकिरणकर्त्ता इत्यर्थो भवति। अग्निपदेन च न केवलं बाह्यवह्निपदस्य बोधो भवति, अग्निशब्दाद् अत्र अन्तःस्फुरितस्य चैतन्यस्यैव बोधो भवति। यद्यपि संहिताभागे मुख्यतः यज्ञकर्मादि प्रतिपादितं तथापि तत्र आत्मतत्त्वमपि निहितमस्ति। उपनिषत्सु अभिव्यक्तस्य बहुशो व्याख्यातस्य चाद्वैततत्त्वस्य पूर्णसङ्केतः प्राप्यते संहिताग्रन्थेषु। यो हि विद्वान् वैदिकसंहितायाः मन्त्राः केवलं कर्मणः प्रतिपादकाः किञ्च उपनिषदः ज्ञानस्य प्रतिपादिकाः इति मत्वा उभयोर्मध्ये पार्थक्यप्रदर्शनं करोति स तु सत्याद् दूरेऽस्ति। संहिताग्रन्थः कर्मणा सह ज्ञानस्याऽपि स्पष्टप्रतिपादको भवति। ऋग्वेदस्य सिद्धान्ताः यथा वेदान्तस्य तथ्यानां सङ्केतं कुर्वन्ति तथैव तस्य अन्तर्विद्यमानायाः साधनायाः नियमनस्य च शिक्षा विगतयुगे प्रतिष्ठितस्य योगं प्रति स्पष्टतया सङ्केतं कुर्वन्ति। ऋग्वेदसंहितायां तत्परमतत्त्वस्य आलोचना बहुत्र मन्त्रेषु प्राप्यते। यथा "एकं तत्" (ऋ.१/१६४/४६), "तदेकम्" (ऋ.१०/१२९/२) इत्यादि। वैदिकर्षयः अमुमेव परमसत्यरूपेण स्वीकुर्वन्ति, अन्यदेवाः तु तस्यैव शक्तेः विविधाभिव्यक्तिमात्रम्। अनेन प्रकारेण श्रीमदरविन्दमते वेदः सिद्धानां वाणी एवाऽस्ति। वेदोऽयमान्तरिकजगतः आध्यात्मिकतथ्यानां निरूपकोऽस्ति। अस्मिन्निरूपणे येषां सामान्यशब्दानां प्रयोगं वेदः करोति तेषामर्थः नितान्तनिगूढः तथा साधनानाम् उपरि आधारीभूय वर्तते। वेदानामर्थः मुख्यतः रहस्यमयः आत्मपरकश्चाऽस्ति। अनया दृष्ट्या श्रीमदरविन्दस्य व्याख्यां प्रति विदुषां ध्यानाकर्षणमपि स्वाभाविकमेवेति।

## ४.८) श्रीमदानन्दकुमारस्य महत्त्वम्

डॉ. आनन्दस्वामी आधुनिकभाषावित्सु परमतत्त्वज्ञः गम्भीरचिन्तकः च आसीत्। भारतीयकलायाः अन्तःस्वरूपस्य प्रत्यभिज्ञाने अतुलनीयः तथा तस्याः कलायाः विशदव्याख्याकरणम् स्वविषयं च विद्वान् आसीत्। तत्र तत्तुल्यः दुर्लभः। कलाक्षेत्रे वैदिकक्षेत्रे च पूर्णमर्मज्ञत्वेन सहाऽसौ प्रवेशम् अलभत। तयोरन्तरङ्गस्य परीक्षणं विश्लेषणम् च अतीव विद्वत्त्वेन सह कृतमनेन। अस्मिन् विषये तस्य प्रसिद्धं पुस्तकमस्ति- ‘A new approach to the Vedas’। ग्रन्थेऽस्मिन् वेदानां विशिष्टव्याख्याशैल्याः प्रदर्शनं कृतमनेन विदुषा। तस्य कथनमस्ति- वेदास्तु , सिद्धानां वाणी भवति। अतो तस्य व्याख्यालेखने ख्रीष्टीयमध्ययुगस्थानां सतां तथा आत्मप्रवणकवीनामनुभूत्याऽपि पर्याप्तसाहाय्यं गृहीतुं शक्यते। आध्यात्मिकजगति अत्युच्चस्तरगतानां सतामनुभूतेः वैचारिकसमानता भवत्येव। तदनुभूतिप्रकटनार्थं प्रयुक्तप्रतीकेषु तथा मूर्तिविधानेषु चैकरूपता दृग्गोचरीभवत्येव। डॉ. कुमारस्वामी मध्ययुगीयख्रीष्टधर्मनुयायिनां महात्मनां वाण्यां मर्मज्ञो विद्वान् आसीत्। फलतः स्ववैदिकव्याख्यायां तस्य ज्ञानस्यानुशीलनस्य चोपयोगः अतीव सुष्ठुतया कृतोऽनेन। अस्य महापुरुषस्य वैदिकमन्त्राणां व्याख्या एवास्य स्पष्टोदाहराणि सन्ति। द्रष्टव्यम्-



"As for the Vedic and Christian source each illuminates the other. And that is in itself an important contribution to understanding. What ever may be asserted or denied with respect to the value of the Vedas; this at least is certain that their fundamental doctrines are by on means singular." (A New Approach to the Vedas. Page १.)



## पाठगतप्रश्नाः-४

१६. ऋग्वेदे देवताः कथम् 'असुर' इति अनेन प्रोक्ताः।

१७. देवतानां त्रीणि रूपाणि कानि।

१८. कः अस्य जगतः नियामकः।

१९. अरविन्दमते घृतशब्दार्थः कः।

२०. वेदभाष्यविषये के विद्वांसः भाष्यं रचितवन्तः।

---



## पाठसारः

आर्यभाषायाः पौरस्त्यभेदे संस्कृतभाषा अन्तर्भवति। विभिन्नानाम् आचार्याणां दृष्ट्या वेदमन्त्राणां व्याख्यानं भिद्यते। वेदमन्त्राणाम् अर्थनिर्देशकेषु यास्काचार्यः प्रसिद्धतमः। तत्र विस्तरेण गूढशब्दानामपि अर्थः निर्दिष्टः।

वेदार्थानुसन्धानविषये पाश्चात्यानां विदुषाम् एकं मतं, तथा भारतीयानां पण्डितानां द्वे मते स्तः। आध्यात्मिकपद्धतौ एकः एव अग्निशब्दः भौतिकाग्नेः, अग्निदेवस्य तथा परमेश्वरस्य च वाचको भवति। चत्वारि शृङ्गाः इत्यादिश्लोके कोऽयं महादेववृषभः इति प्रश्ने यास्कः यागरूपेण वृषभं प्रतिपादितवान्, अन्ये तु महादेववृषभोऽयं सूर्यः अस्तीति कथयन्ति,पतञ्जलिना पस्पशाह्निके तस्य मन्त्रस्य शाब्दिकव्याख्या समुपस्थापिता,सायणभाष्ये तु भिन्नमेव वर्णनं विद्यते। सायणेन वेदस्य व्याख्यावसरे इतिहास-स्मृति-पुराणादिग्रन्थेभ्यः साहाय्यं स्वीकृतम्। तस्य व्याख्याने प्रधानं वैशिष्ट्यमस्ति यत् तेन वेदस्य प्रायः प्रत्येकं महत्त्वपूर्णशब्दस्य व्युत्पत्तेः, सिद्धेः, स्वराघातस्य च वर्णनं पाणिनीयसूत्राणां साहाय्येन प्रातिशाख्यसाहाय्येन च कृतम्। सूक्तस्य व्याख्यारम्भे एव तस्य विनियोग- ऋषि-देवता-च्छन्दो-विज्ञातव्यतथ्यानां वर्णनं तेन प्रामाणिकग्रन्थेभ्यः उद्धरणपूर्वकं कृतम्। अपरः एकः महान् वेदतत्त्वज्ञः अस्ति अरविन्दमहोदयः। सः तत्त्वचिन्तकेषु, अध्यात्मसाधकेषु च मान्यो मूर्धन्यश्चास्ति। तस्य दृष्ट्या येषां विदुषां वेदं प्रति ह्यसीमा श्रद्धाऽस्ति, तेषां सम्मुखे स्वत एव वैदिकशब्दानामर्थः प्रस्फुटो भवति। डॉ. आनन्दस्वामी आधुनिककलावित्सु परमतत्त्वज्ञः गभीरचिन्तकश्चासीत्। तस्य प्रसिद्धं



पुस्तकमस्ति- 'A New Approach to the Vedas'। ग्रन्थेऽस्मिन् वेदानां विशिष्टव्याख्याशैल्याः प्रदर्शनं कृतमनेन विदुषा।

## ४.९) पाठान्तप्रश्नाः

१. यद्वेदार्थानुशीलनस्य परम्परा अतीव प्राचीनकालादेव समायाति। ..वचनमिदं समर्थयत।

२. कौत्समहोदयस्य पूर्वपक्षं विस्तारयत।

३. पाश्चात्याः कथं वेदस्य हानिं कृतवान्।

४. स्वामिजीवमहोदयस्य मतं प्रस्तूय खण्डयत।

५. चत्वारि शृङ्गा त्रयोऽस्य पादा-इत्यादिश्लोके किं प्रतिपादितम्।

६. सायणभाष्यस्य महत्त्वं प्रतिपादयत।।

७. पाश्चात्याः सायणाचार्यं भाष्यकर्तृत्वेन कथं निन्दन्ति।

८. अरविन्दस्य महत्त्वं वर्णयत।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. आर्यभाषा पाश्चात्य-पौरस्त्यभेदेन द्विविधा।

२. संस्कृतभाषायाम्।

३. श्रवणान्तरदर्शनस्य योग्यतासम्पादनेन अर्वाचीनानामृषीणाम् उपयुक्ताभिधा' श्रुतर्षिरिति अभवत्।

४. यास्काचार्यः।

५. शब्दानां सूची इति अर्थः।

६. वेदे भावगाम्भीर्यं भाषावैचित्र्यं. विचित्रपदानां, स्वराणां सन्धिपदानाञ्चैव विवेचनमस्ति ततः

७. दुर्गाचार्यः

**उत्तराणि-२**

८. ज्याकोबी,पिशेल,म्याक्समुलार,पोल इत्यादयः।

९. जलपूर्णघटः इत्यर्थः।

**उत्तराणि-३**

१०. सर्वे शब्दाः यौगिकाः योगरूढा रूढाश्च सन्ति

११. **महाभाग्यात् देवतायाः एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति।'** (निरुक्तः ७/४)



१२. त्रिषु रूपेषु वर्तन्ते- आधिभौतिकम्, आधिदैविकम्, अध्यात्मिकञ्च इति।

१३. भौतिकाग्नेः, अग्निदेवस्य तथा परमेश्वरस्य च

१४. ऋषिप्रदर्शितमार्गेण तथा आर्षदृष्ट्या च

१५. चत्वारि शृङ्गाणि, त्रयः पादाः, द्वे शिरसी, सप्त हस्ताश्च

**उत्तराणि-४**

१६. प्राणशक्तिशालित्वात्

१७. आध्यात्मिकम्, आधिभौतिकम्, आधिदैवतञ्चेति

१८. ईश्वरः

१९. अरविन्दमहोदयस्य मते तु प्रकाशः इत्यर्थो भवति।

२०. सायणः, अरविन्दमहोदयः, श्रीमदानन्दकुमाराचार्यः अन्ये च।

॥ इति चतुर्थः पाठः ॥



# ५

# वैदिकाख्यानं दार्शनिकानां नये वेदविमर्शः च

## प्रस्तावना

अस्मिन् पाठे वयं वेदे वर्णितानां केषाञ्चन आख्यानानां वर्णनं द्रक्ष्यामः। यथा लौकिककथाग्रन्थान् रसालङ्कारगुणयुक्तशब्दराशिभिः कवयः रचितवन्तः। तथैव वैदिककाले अपि सामाजिकरीत्यादिकं वैदिकोपाख्याननाम्ना अध्यायेन वयमत्र द्रक्ष्यामः। कथाग्रन्थेषु यथा कान्तासम्मितं वचो वर्तते, तथैव नीतिपूर्णानि वचांसि तथा प्रभुसम्मितैः उपदेशैः नीतिज्ञानं वेदोपाख्यानेषु केषुचित् स्थलेषु प्राप्यते। केषाञ्चन उपाख्यानानां विषये वयमत्र पठिष्यामः। ततः आख्यानं प्रतिपाद्य विविधदार्शनिकानां मते वेदः प्रतिपादितः विद्यते। एवञ्च वेदस्य पौरुषेयत्वम् अपौरुषेयत्वम् इति विचारः प्रवर्तते। पुरुषेण कृतः पौरुषेयः। सृष्टस्य एव अनित्यत्वापत्तिः। यतो हि यस्य सृष्टिः अस्ति तस्य विनाशः अवश्यम्भावी। जन्यपदार्थानाम् अनादित्वस्य असम्भवात् ते अनित्याः इति। ते कदापि अपौरुषेयाः भवितुं नार्हन्ति।अतः ते अनित्याः पौरुषेयाः च। वेदः पौरुषेय अपौरुषेयो वा इति विषये दार्शनिकानां नानामतानि सन्ति। न्यायवैशेषिक-मीमांसक-सांख्य-वैयाकरणमते वेदस्य पौरुषेयत्वम् अपौरुषेयत्वञ्च नित्यत्वम् अनित्यत्वञ्च प्रस्तूयते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- आख्यानविषये विशिष्टं ज्ञानं प्राप्तुं शक्नुयात्।
- शुनःशेपोपाख्यानम्, ऊर्वशी-पुरूरवसोः उपाख्यानं च ज्ञातुं शक्नुयात्।
- स्वयमपि आख्यानादिकं रचयितुं शक्नुयात्।
- वेदस्य पौरुषेयत्वापौरुषेयत्वविषये लघुप्रबन्धं रचयितुं शक्तो भवेत्।
- वेदविषये नैयायिकानां साङ्ख्यानां मतानि ज्ञातुं प्रभवेत्।



## ५.१) शुनःशेपोपाख्यानम्

शुनःशोपोपाख्यानम् ऋग्वेदस्य बहुषु सूक्तेषु प्राप्यते (१/२४-२५)। तेन इयं घटना सत्याश्रिता आसीत् इति प्रतीयते। ऐतरेयब्राह्मणे (७/३) इदमाख्यानम् अतिविस्तरेण वर्णितम् अस्ति। इदम् उपाख्यानम् आदौ हरिश्चन्द्रस्य अन्ते च विश्वामित्रस्य सम्बन्धं परिकल्प्य परिवर्धितम् अस्ति। वरुणस्य कृपातः इक्ष्वाकुनृपस्य हरिश्चन्द्रस्य गृहे पुत्रोत्पन्नः अभवत्। समर्पणसमये अरण्ये हरिश्चन्द्रस्य पुत्रस्य पलायनम्, हरिश्चन्द्रस्य उदरजन्यरोगोत्पत्तिः, मार्गे अजीगर्तस्य मध्यमपुत्रस्य शुनःशेपस्य क्रयणं, देवतायाः कृपातः तस्य शुनःशेपस्य शापात् मुक्तिः, विश्वामित्रेण शुनःशेपस्य पुत्रत्वेन स्वीकारः इत्येते विषयाः आलोच्यन्ते। तथाहि कथा एवं श्रूयते-

कश्चित् हरिश्चन्द्रः नामकः निःसन्तानः राजा आसीत्। वरुणम् उपास्य सः पुत्रं लब्धवान्। वरुणेन उक्तं च यत्, उत्पन्नस्य पुत्रस्य त्वया मह्यं बलिर्देया इति। द्वादशवर्षीयो रोहितः वनं जगाम। वरुणस्य कोपेन हरिश्चन्द्रो जलोदररुजा ग्रस्तो बभूव। यदा यदा रोहितो वनात् गृहे गन्तुमना बभूव तदा तदा इन्द्रः तस्मै चरैवेति चरैवेति उपदिष्टवान्। अन्ते पितुः दुःखं सोढुम् असमर्थः सः गृहं प्रत्यागच्छन् मध्ये मार्गम् अजीगर्तनामकस्य ब्राह्मणस्य मध्यमं पुत्रं शुनःशेपं बलिकर्मणे क्रीतवान्। आयोजिते यज्ञे यूपे संयतं शुनःशेपं शतगोमूल्येन यदा हन्तुम् उद्यतो बभूव तस्य पिता अजीगर्तः तदा विश्वामित्रः शुनःशेपाय गाथात्रयम् उपादिशत्, यासां पाठमात्रेण वरुणो बलिं विना प्रसन्नो बभूव। अनन्तरं विश्वामित्रः शुनःशेपं पोष्यपुत्रं कृत्वा स्वकीयेषु शतसङ्ख्याकेषु पुत्रेषु एकपञ्चाशत्तमं पुत्रं चकार। येन तस्मादधो विद्यमानाः रुष्टाः विश्वामित्रपुत्राः विश्वामित्रस्यैव शापेन आन्ध्र-पुलिन्द-म्लेच्छादिकाः भूत्वा तत्र तत्र निवसन्ति स्म। शुनःशेपाख्यानम् ऋक्शतगाथोपरि आश्रितम्, इति एतरेयब्राह्मणस्य "ऋक्शतगाथं शौनःशेपमाख्यानम्" इत्यतः स्वीकृतो विद्यते।



### पाठगतप्रश्नाः -१

१. शुनःशेपोपाख्याने आद्यन्तयोः कौ परिकल्पितौ।
२. हरिश्चन्द्रस्य पुत्रः कस्य आशिषि जातः।
३. शुनःशेपस्य पितुः नाम किम्।
४. कस्मिन् वेदे आख्यानम् इदं प्राप्यते।
५. शुनःशेपः कस्य पोष्यपुत्रः आसीत्।
६. गाथात्रयं कः कस्मै श्रावितवान्।



## ५.२) ऊर्वशी-पुरूरवसोः उपाख्यानम्

वैदिकयुगस्य इयमेका रोमाञ्चकारिणी प्रणयगाथा अस्ति। नरपतिना पुरूरवसा सह ऊर्वशी प्रणयपाशे आबद्धा बभूव इति। एतदर्थं पणत्रयम् आसीत्। तद्यथा-

१) सा सदैव घृताहारं करिष्यति।

२)तस्याः द्वौ प्रियौ भेडकौ सदैव तस्याः पर्यङ्किकापार्श्वे रज्जुभ्यां बद्धौ भविष्यतः, येन कोऽपि तौ आहर्तुं न शक्ष्यति, न चोरयिष्यति वा।

३) कस्यामपि अवस्थायां सा राजानं नग्नं द्रष्टुं न शक्ष्यति यदि क्षणमपि एवं भवेत् तदा सा तं विहाय गमिष्यति।

राजा उर्वश्याः पणत्रयं सहर्षं स्वीकृवान्। तया सह सानन्दं समयं यापयति स्म। किञ्च उर्वशीं विना गन्धर्वाः स्वर्गं नीरसं निर्जीवञ्च अनुभूतवन्तः। ततस्ते कपटप्रबन्धेन ग्लहभङ्गं कर्तुं समुद्यताः अभवन्। रात्रौ एकदा ते गन्धर्वाः कपटेन मेषमेव उर्वशीपार्श्वाद् अचोरयन्। मेषस्य करुणध्वनिं श्रुत्वा एव उर्वशी राजानं चौरेण सह योद्धुं प्रेरितवती। राजा अपि शीघ्रमेव मेषं चौरात् त्रातुम् आकाशम् प्रति अधावत्। तदैव आकाशे विद्युत्-प्रकाशे गधर्वाः छलेन राज्ञः नग्नस्थं रूपमुर्वशीम् अदर्शयन्। राजानं नग्नं दृष्ट्वा सापि तदैव बहिः अगच्छत्। राजा तां विना विरहातुरो भूत्वा उन्मत्त इव भूमण्डले विचचार। एकदा कुरुक्षेत्रस्य एकस्मिन् जलाशये हंसी-रूपेण स्वप्रियाम् अपश्यत्। प्रत्यावर्त्तनाय तां स राजा बहुवारं प्रार्थयामास। सा तु राज्ञः पार्श्वे पुनः आगमनाय समुद्यता न बभूव। राज्ञः दयनीयां दशां दृष्ट्वा गन्धर्वाणामपि हृदये सहानुभूतिः उत्पन्ना बभूव। सः अपि तस्यै अग्निविद्याम् उपदिष्टवान्। तस्य अनुष्ठानेन सः उर्वश्याः अविच्छिन्नसमागमम् अलभत्।

ऋग्वेदस्य प्रख्यातसूक्ते(१०/९५) उभयोः कथोपकथनमात्रमेव अस्ति। शतपथब्राह्मणे(१/१/५/१) कथानकमिदं रोचकं विस्तरेण सह वर्णितमस्ति। तत्र अस्य कथानकस्याङ्कने साहित्यिकसौन्दर्यस्यापि परिचयः प्रदत्तः अस्ति। विष्णुपुराणे(४/६), मत्स्यपुराणे(अ–२४), भागवत्पुराणे(९/१४) च अस्य कथानकस्य रोचकं विवरणं वयम् प्राप्नुमः। महाकविना कालिदासेन विक्रमोर्वशीयनाम्नि त्रोटके अस्मै कथानकाय नितान्तं मञ्जुलं नाटकीयरूपं प्रदत्तम्। अस्य आख्यानस्य विकासे एकस्य विशेषतथ्यस्य सत्ता प्राप्यते। पुराणेषु कथानकमिदं प्रणयगाथारूपेण व्यक्तम् अस्ति। किञ्च वैदिकाख्याने पुरूरवाः प्रथमा व्यक्तिः अस्ति, यो हि श्रौताग्निः अर्थात् आहवनीयः, गार्हपत्यः दाक्षिणाग्निश्च इति नामकस्य त्रिविधस्य अग्नेः स्थापनाय रहस्यं ज्ञात्वा यज्ञसंस्थायाः प्रथमं विस्तारं कृतवान्। पुरूरवसोऽस्य परोपकारिरूपस्याभिव्यक्तिभिः अस्य वैदिकाख्यानस्य अस्य वैशिष्ट्यं विदधाति।



## पाठगतप्रश्नाः - २



७. पुरुरवाः कामुपयेमे।

८. उर्वशी कथं राजानं परित्यक्तवती।

९. उर्वशी का।

१०. उर्वश्या प्रदत्तपणं राजा कथं स्वीकृतवान्।

११. प्रथमपणस्य नाम किम्।

१२. उर्वशीं विना स्वर्गस्य का दशा अभवत्।

१३. के मेषं चोरितवन्तः।

१४. राजा कथम् आकाशं प्रति अधावत्।

१५. उर्वशी कथं स्वर्गं गतवती।

१६. राजा कुत्र स्वप्रियां दृष्टवान्।

१७. किं कृत्वा राजा उर्वशीं प्राप्तवान्।

१८. उर्वशी–पुरोरवसोः उपाख्यानात् कलिदासः किं नाटकं रचितवान्।

१९. आहवनीयगार्हपत्यदक्षिणाग्नीनां रहस्यं कः प्रथमं विस्तारितवान्।

---

## ५.३) च्यवानभार्गवस्य तथा मानवीसुकन्याख्यानम्

आख्यानमिदं भारतीयनारीचरित्रस्य एकं नितान्तमुज्ज्वलं दृष्टान्तं समुपस्थापयति। कथा इयम् ऋग्वेदस्य आश्विनेन सम्बद्धासु सूक्तेषु(१/११६,११७ प्रभृतयः) सङ्केतिता अस्ति। इयमेव कथा ताण्ड्यब्राह्मणे(१४/६/११),निरुक्ते (४/१९) शतपथब्राह्मणे (का. ४), भागवत्पुराणे (स्क.९अ. ३) च अतिविस्तरेण प्राप्यते। च्यवनस्य वैदिको नाम 'च्यवानः' इति अस्ति। सुकन्यायाः वैदिककथा तस्याः पौराणिककथापेक्षया अधिकोदात्ता आदर्शमयी च अस्ति। पुराणेषु सुकन्याऽपराधिनी स्वयमस्ति। च्यवनस्य दिव्याक्ष्णोः स्फोटनं सा करोति। अस्मै कर्मणे तस्यै दण्डविधानं स्वाभाविकमेव अस्ति। किञ्च वेदे तस्याः त्यागः उच्चकोटेः अस्ति। सैनिकबालकेभ्यः निवारणाय कृतापराधस्य च्यवानस्य सम्मुखे सा आत्मसमर्पणं करोति। तस्याः दिव्येन प्रेम्णा प्रभावितो भूत्वा तं वार्द्धक्यात् मुक्तं कृतवान्। अश्विनौ तस्मै नूतनं यौवनम् दत्तवन्तौ।

तुलनात्मकाध्ययनेन प्रतीतो भवति यद् अनेकानि आख्यानानि कालान्तरे विकृतानि भवन्ति। विकासप्रक्रियायाम् अनेकावान्तरकालिकी घटना विद्यते। ताः आख्यानेभ्यः संश्लिष्टौ भूत्वा तानि अभिनवरूपाणि ददति। एतानि परिवर्तितरूपाणि मूलरूपतो भिन्नानि भवन्ति। शुनःशेपस्य, विश्वामित्रवसिष्ठयोः कथानकयोः अनुशीलनेन अस्य विचित्रसिद्धान्तस्य प्रदर्शनेन दृष्टान्तः समुपस्थापितो



भवति। शुनःशेपस्य आख्यानम् ऋग्वैदस्य प्रथममण्डले (सू २४,२५) स्पष्टतः सङ्केतितः अस्ति। अस्य एव विस्तार ऐतरेयस्य समयपञ्चिकायाम् उपलब्धो भवति। अत्र शुनःशेपस्य आख्यानमारम्भे राज्ञः हरिश्चन्द्रस्य पुत्रः रोहिताश्वेन सह तथा कथान्ते मुनिना विश्वामित्रेण सह सम्बद्धो भूत्वा भव्यम् एकं धारयति। कालान्तरे अस्मिन् कथानके रोचकतावर्द्धनाय एव तस्य भ्रातृद्वयस्य, पितुः दरिद्रतायाः तस्य विक्रयणस्य च परिकल्पना कृता इति प्रतीतो भवति। शुनःशेपस्य अपि अत्र अर्थः न भवति 'कुक्कुरः'। 'शुनः'–शब्दस्य अर्थो भवति 'सुखम्' कल्याणञ्च इति तथा 'शेप'–शब्दस्य अर्थो भवति 'स्तम्भः'। अतः शुनःशेपस्य अर्थो भवति 'सौख्यस्य स्तम्भः'। अनेन प्रकारेण कथानम् इदं वरूणपाशाद्विमुक्तेः सन्देशं ददत् कल्याणस्य मार्गं प्रशस्तयति।



## पाठगतप्रश्नाः- ३

२०. भारतीयनारीचरित्रस्य नितान्तमुज्वलदृष्टान्तस्य नाम लिखत ।

२१. च्यवनस्य वैदिको नाम कः।

२२. च्यवनस्य दिव्याक्षणोः स्फोटनं का कृतवती।

२३. शुनःशेपस्य कः अर्थः।

## ५.४) वशिष्ठविश्वामित्रयोः आख्यानम्

ऋग्वेदे स्वतःसङ्केतितम् इदम् आख्यानम् अस्ति। इमौ ऋषी सम्भवतो भिन्न-भिन्न-काले राज्ञः सुदासस्य पुरोहितौ आस्ताम्। चातुर्वर्ण्यस्य क्षेत्राद् बहिःयुगस्य इमौ ऋषी आस्ताम् इति स्वीकर्तुमिति शक्यते। उभयोः मध्ये परमसौहार्द्रभावनायाः साम्राज्यम् आसीत्। उभौ तपःपूतौ, तेजःपुञ्जौ, अलौकिकगुणशालिनौ महापुरुषौ आस्ताम्। किञ्च अवान्तरग्रन्थेषु रामायण-पुराण-बृहद्वेवतादिषु उभयोः मध्ये सङ्घर्ष-वैमनस्य-विरोधादिकल्पनायाः उदयः अभवत्। विश्वामित्रः क्षत्रियाद् ब्राह्मणत्वप्राप्त्यर्थं लालायितः अभवत्। वसिष्ठेन स अङ्गीकृतः भवति। तेन क्रुद्धो भूत्वा विश्वामित्रो वसिष्ठस्य पुत्राणां संहारकः अभवत्। इमामेव कल्पनाम् आधारीकृत्य आलोचकाः क्षत्रियब्राह्मणयोः मध्ये घोरविद्रोहस्य अमङ्गलस्य च प्राचीरं स्थापितवन्तः। वस्तुतो विचारोऽयं निराधारः, उपेक्षणीयः तथा नितान्तभ्रामकोऽस्ति। वैदिकाख्यानेन अपरिचिता व्यक्तिः एव एवंविधानां पावनचरित्राणाम् ऋषीणाम् अवान्तरकालिकवर्णनेन भ्रान्तो भवति। वैदिकाऽऽख्यानानां विकासः अवान्तरयुगे केन प्रकारेण सम्पन्नः अभवत् इति अध्ययनस्य एको गम्भीरो विषयः अस्ति। कतिपयानाम् आख्यानानां विकासस्य इतिहासः रोचकरीत्या विद्वद्भिः वर्णितः अस्ति।





## पाठगतप्रश्नाः ४

२४. वसिष्ठविश्वामित्रयोः आख्यानं कुत्र अस्ति।

२५. राज्ञः सुदासस्य द्वौ परोहितौ कौ।

२६. विश्वामित्रः कः वर्णीयः आसीत्।

२७. कस्य वर्णस्य प्राप्त्यर्थं सः लालायितः अभवत्।

## ५.५) आख्यानानाम् तात्पर्यम्

वैदिकाख्यानानां तात्पर्यं किमस्ति। अस्य प्रश्नस्य उत्तरे विद्वत्सु वैमत्यं विलोक्यते। अमेरिकास्थः विद्वान् डाँ ब्लूमफील्डमहोदयः अस्य विषयस्य चर्चां कृत्वा तेषां विदुषां मतस्य खण्डनम् अकरोत्। ये विद्वांसः वैदिकाऽऽख्यानस्य रहस्यवादिनीं व्याख्यां कृतवन्तः। उदाहरणार्थम्- एते रहस्यवादिनो वैदिकाः आख्यानाऽभ्यन्तरे एकस्य गम्भीररहस्यस्य दर्शनं कुर्वन्ति। तेषां विचारे पुरूरवाः सूर्यः तथा उर्वशी उषा अस्ति। उषस्-सूर्ययोः पारस्परिकसंयोगः क्षणिको भवति। तयोः वियोगकालः अतिदीर्घः अस्ति। वियुक्तः सूर्यः उषान्वेषणे आदिवसं तत्पश्चाद् भ्रमति। अन्येद्युः प्रभाते तयोः मेलनं भवति। प्राचीनभारतीयविदुषां वैदिकाऽख्यानस्य इदमेव स्वरूपम् आसीत्। अतो मानवीयमूल्यविहीनानां वैदिकाऽख्यानानां चित्रणं कथमपि न्याय्यमुपयुक्तञ्च नास्ति।

एतेषाम् आख्यानानाम् अनुशीलनस्य विषये तथ्यद्वयम् अवधेयम्-

क) ऋगवेदीयाऽख्यानम् एवंविधान् विचारान् सारयति वर्णयति च यत् मानव-समाज-कल्याण-साधनाय नितान्तम् अपेक्षितं भवति। अस्य अध्ययनमपि तथैव मानवीयमूल्यदृष्ट्या कर्तव्यम्। ऋग्वेदीय-ऋषिः एतेषु आख्यानेषु मानवानां कल्याणमयोपादेयतत्त्वानां समावेशं कृतवान्।

ख) तस्य एव युगस्य वातावरणं स्मृत्वा तस्मिन्नेव परिवेशे एतेषाम् उपाख्यानानां मूल्यनिर्धारणं कर्तव्यम्। तस्मिन्नेव युगे एतेषाम् आख्यानानां मूल्यनिर्धारणं कर्तव्यम्, यस्मिन् युगे एतेषाम् आख्यानानाम् आविर्भावः अभवत्। अर्वाचीनदृष्ट्या किंवा नवीनदृष्ट्या एतेषां मूल्यनिर्धारणम् इतिहासं प्रति अन्यायं भविष्यति। एतेषां तथ्यानाम् आधारशिलायामुपरि आख्यानानां व्याख्या समुचिता वैज्ञानिका च भविष्यति।

वैदिकाऽऽख्यानानां शिक्षा मानवसमाजस्य सामूहिककल्याणाय विश्वमङ्गलस्य अभिवर्द्धनाय च भवति। भारतीयसंस्कृत्याऽनुसारेण मानवाः देवैः सह सम्बद्धाः सन्ति। मानवो यज्ञेषु देवेभ्यः आहुतिं ददाति। देवोऽपि प्रसन्नो भूत्वा तं प्रसादयति। तस्य अभिलाषं पूरयति। इन्द्रविषयकः अश्विनीविषयकश्च आख्यानम् अस्य कथनस्य विशदो दृष्टान्तः अस्ति। यजमानैः प्रदत्तं सोमरसं पीत्वा इन्द्रो नितान्तं प्रसन्नो भवति। सः तस्य कामनां सफलयति। अवर्षणस्य वृत्राख्यं दैत्यं स्ववज्रेण भित्वा नदीः प्रवाहयति। वृष्ट्या





मानवाः आप्यायिताः भवन्ति। संसारे शान्तिः विराजते। वैदिकतथ्यम् इदमल्पाक्षरेणैव महाकविकालिदासेन व्यक्तिकृतम्(रघु ४/१६)।

प्रत्येकम् आख्यानानाम् अन्तः(सारः) मानवानां शिक्षणार्थम् विद्यते। आत्रेयी–कपालयोः(ऋक् ८/९१) आख्यानं नारीचरित्रस्य उदात्ततायाः तेजस्वितायाश्च विशदं प्रतिपादकमस्ति। राज्ञां त्र्यरुण–त्रैवृष्ण–वृषजानानाम् आख्यानम्(ऋग् ५/२, ताण्ड्यब्रा १३/६/१२, ऋग्विधान १२/५२, बृहद्देवता ५/१४–२३) वैदिककालिकस्य पुरोहितस्य महिम्नो गरिम्णश्च स्पष्टरूपेण सङ्केतं करोति। सोभरिकाण्वस्याख्यानम्(ऋ ८/१९,निरुक्तिः ४/१५,भाग ९/६) सङ्गत्या महिम्नः प्रतिपादयति। उषसतिचाक्रायण (छान्दोग्यः, प्रथ प्रपाठ खण्ड १०/११) इत्येतस्य आख्यानम् अन्नस्य सामूहिकप्रभावस्य तथा गौरवस्य कमनीया कथा अस्ति। शुनःशेपस्याऽऽख्याने देवताऽनुकम्पायाः उज्ज्वलः सङ्केतो मिलति। देवानां कृपया शुनःशेपः स्वात्मानं त्रातुं समर्थः अभवत्। वसिष्ठविश्वामित्रयोः आख्यानम् अपि उचितविश्लेषणाभावेन अनर्गलकल्पनायाः समुत्पादकम् अभवत्। वसिष्ठः शारीरिकतपस्यायाः प्रतिमूर्तिः अस्ति। विश्वामित्रस्तु पुरुषकारस्य स्वरूपम् अस्ति। उभयोः मध्ये प्रगाढा मैत्री आसीत्। वैदिकनृपस्य यज्ञसम्पादने समानरूपेण द्वौ अपि सहायकौ आस्ताम्। तयोः वैरभावः सङ्घर्षश्च क्षणिकः आसीत्। श्यावाश्व–आत्रेयस्य कथा(ऋग् ५/६१) ऋषेः गौरवं, प्रेम्णः महिमानं, कवेः साधनाञ्च सुष्ठु रीत्याऽभिव्यक्तं करोति। ऋग्वेदीययुगस्य इयं प्रख्याता प्रणयकथा अस्ति। यस्यां प्रेम्णः सिद्धये श्यावाश्वः एको मन्त्रद्रष्टा ऋषिः अभवत्। दध्यङ्गाथर्णवस्याऽऽख्यानम्(१/११६/१२,१४/४/५/१३,बृहदारण्य २/५, भागव ६/१०) राष्ट्रिय–मङ्गल–जीवनदानस्य शिक्षां दत्त्वा क्षुद्रस्वार्थाद् उपर्युत्थानस्य जनकल्याणस्य चोपदेशं ददाति। पुराणे अस्य एव नाम ऋषिः दधीचोऽस्ति। अयमेव लोकहिताय वृत्रासुरवधाय सुरेन्द्राय स्वास्थिदानमकरोत्। वज्रनिर्माणार्थम् अस्थिदानं कृत्वा आर्यसभ्यतायाः रक्षाम् अकरोत्। अनधिकारिणं रहस्य–विद्योपदेशस्य विषमपरिणाममस्मिन् वैदिकाऽख्याने प्रदर्शितमस्ति। एतेषामाख्यानानामयमेवोपदेशोऽस्ति यद् –परमेश्वरं प्रति प्रगाढा श्रद्धा जीवात्मना सह प्रेम। विश्वकल्याणाय अयमेव मङ्गलमयः मार्गः अस्ति।

कतिपयानाम् ऋषीणां चारित्रिकदोषाणां तथाऽनैतिकाचरणस्यापि वर्णनं वैदिकाख्यानेषु उपलब्धो भवति। अनेन उपदेशग्रहणं कर्तव्यम्। एतानि आख्यानानि अनैतिकताया गर्ते पतनात् त्राणार्थमेव निर्दिष्टानि सन्ति। तपसा पवित्रजीवनेऽपि प्रलोभनावसरे चारित्रिकपतनस्य सम्भावना भवति। कामिनीकाञ्चनस्य प्रलोभनं सामान्यजनस्य हृदयमाकर्षति एव। फलतः ताभ्यां सदैव जागरूको भवितव्यः भवति। अस्मिन् विषये भारतस्य कथनमिदं ध्यातव्यम्–

**'कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा।**
**न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्।।**
**अनमन्यैरुपालब्धैः कीर्त्तितैश्च व्यतिक्रमैः।**



**पेशलं चानरूपञ्च कर्तव्यं हितमात्मनः।।' (महाभा १२/२९१/१७)**



## पाठगतप्रश्नाः -५

२८. आत्रेयी-कपालयोराख्यानं किं प्रतिपादयति।

२९. वसिष्ठः कस्य प्रतिमूर्तिः आसीत्।

३०. विश्वामित्रः कस्य प्रतिमूर्तिरासीत्।

३१. श्यावाश्व-आत्रेयकथायाः का विशिष्टता।

३२. आख्यानानां कः उपदेशः अस्ति।

## अथ दार्शनिकानां नये वेदस्य पौरुषेयत्वापौरुषेयत्ववेदविमर्शः

### ५.६) न्यायदर्शनमते वेदः

नैयायिकाः वेदस्य प्रामाण्यं स्वीकुर्वन्ति,न च वेदस्य अनित्यत्वम् अपौरुषेयत्वम् च इति। तेषां मते परमपुरुषेण वेदाः रचिताः। परमपुरुषः च परमेश्वरः। तस्मात् वेदः पौरुषेयः इति तेषां मतम्। यथा रघुवंशादिकालिदासग्रन्थाः अनित्याः इति।



## पाठगतप्रश्नाः -६

३३. कस्य विनाशः अवश्यम्भावी।

३४. नैयायिकानां नये वेदः पौरुषेय अपौरुषेयो वा।

३५. नैयायिकानां नये वेदो नित्यः अनित्यः वा।

३६. नैयायिकमते वेदः केन रचितः।

३७. कः परमपुरुषः।

### ५.७) मीमांसावेदान्तमते वेदः

मीमांसकाः वैदान्तिकाः च वेदस्य अपौरुषेयत्वं प्रतिपादयन्ति। अपूर्णाः पुरुषाः। अतः तेषां ज्ञानम् अपि न पूर्णमिति। तस्मात् तेषां रचनायां वाक्ये वा भ्रमः प्रमादः विप्रलिप्सा भवति एव। इन्द्रियस्य च अपूर्णताकारणात् दोषाः सम्भवन्ति। परन्तु वेदवाक्ये भ्रमप्रमादादयः दोषाः न सन्ति। तस्मात् वेदः न



पौरुषेयः। सर्वज्ञत्वात् सर्वशक्तिमत्त्वात् च परमेश्वरः तथा रचयितुं शक्तः अस्ति। न च वेदः परमेश्वरेण कृतः। सूर्यरश्मयः यथा सूर्यात् स्वयं प्रकाशिताः भवन्ति तथा वेदः अपि परमेश्वरसकाशात् स्वयं प्रकाशितः। तथाहि आम्नातं बृहदारण्यकोपनिषदि- 'अस्य महतो भूतस्य निःश्वसितं यदेतत् ऋग्वेदो यजुर्वेदः सामवेदः' इति। निःश्वासः यथा स्वाभाविकार्यं न च चेष्टाकृतं तथा वेदः अपि परमेश्वरस्य प्रज्ञास्वरुपः न च चेष्टाकृतः न वा बुद्धिपरिकल्पितः। अत्र ज्ञातृज्ञानयोः अभेदः। प्रति कल्पं परमेश्वरः वेदं स्मरति। न च ब्रह्मा वेदस्य कर्ता, स तु स्मर्ता अर्थात् केवलं स्मरणकर्ता इति। तदुक्तं पराशरसंहितायाम्-'न कश्चित् वेदस्य कर्तास्ति वेदस्मर्ता चतुर्मुखः' इति।

अर्थात् न कोऽपि अस्ति वेदस्य कर्ता। केवलं ब्रह्मा वेदस्य स्मरणकर्ता इति।

ब्रह्मादयः ऋषयः सर्वे स्मारकाः न तु कारकाः। आब्रह्मणः ऋषयः सर्वे एव मन्त्रद्रष्टारः वेदस्य धारकाः वाहकाः वा न च वेदस्य कर्ता रचयिता वा। नित्यं विद्यमानं वेदं परमेश्वरः प्रतिकल्पे ब्रह्मणे ददाति।

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति। वेदः नित्यः किञ्च, सदा विराजमानःअस्ति। प्रतिकल्पे ब्रह्मा तस्य पुनरावृत्तिं करोति। युगान्ते प्रलयकाले वा वेदः परब्रह्मणि अभिन्नरुपेण तिष्ठति। कल्पारम्भे पुनः ऋषयः तपस्याद्वारा वेदमन्त्रान् लभन्ते। तस्माद् उक्तं-

युगान्ते अन्तर्हितान् वेदान् सेतिहासान् महर्षयः।

लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भूवा।।

यास्कमते ऋषिशब्दास्यार्थः मन्त्रद्रष्टा इति। यास्कमतेन ऋषिशब्दस्य व्युत्पत्तिः-अजानन् ह वै पृश्नीं स्तपस्यमानान् ब्रह्म स्वयम्भू अभ्यानर्षत्तदृषयोऽभवन्। तपस्यरतानां जन्मरहितानाम् अजानाम् ऋषिणां समीपे स्वयं ब्रह्म अर्थात् वेदः अगमत्। मन्त्रद्रष्टा ऋषि इत्युच्यते। निरुक्ते वेदः स्वयम्भूः उत्पत्तिरहितः अपौरुषेयो वा इति।

वेदभाष्यकारः सायनाचार्यः वेदस्य अपौरुषेयत्वं स्वीकृतवान्। भाष्यरचनायाः पूर्वं महेश्वरं प्रणामान् निवेदयति।

'यस्य निःश्वसितं वेदाः यो वेदेभ्योऽखिलं जगत्।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्।।' इति। अर्थात् वेदचतुष्टयात् उत्पन्ननिखिलभुवनं यस्य निःश्वासस्वरूपः किञ्च, यः सर्वविद्यायाः आधारः तस्मै परमेश्वराय महेश्वराय अहं वन्दे। वेदः महेश्वरस्य निःश्वासस्वरूपः इत्युक्त्वा सायणाचार्यः वेदस्य अपौरुषेयत्वं प्रतिपादितवान्।

परमेश्वरः वेदस्याधारः न तु रचयिता इति। परमेश्वरस्य वेदकर्तृत्वेन प्रतिपादने वेदस्य अनित्यत्वं किञ्च, परमेश्वरस्य सर्वज्ञत्वाभावापत्तिः इति। परमेश्वरः त्रिकालदर्शी भवति। अतः सः सर्वज्ञः, तस्मात् तस्य न कोऽपि विषयः ज्ञानागम्यः इति वक्तुं न शक्यते। परमेश्वरः वेदं रचितवान् इत्युक्ते सति तस्य सर्वज्ञत्वापत्तिः इति। तस्य सर्वज्ञत्वात् वेदः सर्वदा तस्य ज्ञानगम्यः आसीत् इति। अतः वेदः नित्यः। कल्पभेदे अपि तस्य परिवर्तनं न भवति।



यस्य आदिः नास्ति सः अनादिः इति। आद्योच्चारणे शब्दस्य वाक्यस्य वा कर्तृत्वं प्रतिपाद्यते, किञ्च आद्योच्चारणत्वात् तस्य सदृशत्वम् उच्चारणात् पूर्वं न आसीत् इति ज्ञायते अतः सः शब्दः वाक्यं वा पौरुषेयम् इति। एतदेव पौरुषेयस्य धर्मः वैशिष्ट्यं वा इति। अतः प्रतिकल्पे वेदस्य स्मरणत्वं प्रतिपादितं न तु उच्चारणत्वमिति। ततः प्रतिकल्पे वेदस्य सजातीयोच्चारणत्वमपि प्रतिपद्यते। तेन वेदः अनादिः अनन्तः च इति। तस्मात् वेदः अपौरुषेयः न तु पौरुषेयः इति। यतो हि पुरुषस्य आदिः अस्ति। आदित्वात् तस्य विनाशः अपि अवश्यम्भावी। वेदस्य अपौरुषेयत्वात् तस्य विनाशः नास्ति अतः सः अनादिः अनन्तः नित्यः च इति। अतः परमेश्वरेण साकं वेदस्य सम्बन्धः अपि अनादित्वेन अनन्तत्वेन चेति।

पूर्वमीमांसकानां नये वेदः नित्यः। न च तस्य आधारः परमेश्वरः भवति। पूर्वमीमांसकानां वेदान्तिनां नये ब्रह्म वेदस्य उत्सः आधारो वा। वेदान्तदर्शने ब्रह्मसूत्रे 'शास्त्रयोनित्वात्' इति प्रथमाध्यायस्य तृतीयसूत्रे ब्रह्म वेदचतुष्टयस्य योनिः। अतः वेदस्य कारणं ब्रह्म इति। अस्मिन् सूत्रभाष्ये भगवान् शङ्कराचार्यः - 'न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञात् अन्यतः सम्भवोऽस्ति' इति। एवं सर्वविद्यायाः आधारः अखिलधर्ममूलः, वेदशास्त्रस्य उत्स इव सर्वज्ञः ब्रह्म वै नान्यत् किमपि। शुक्लयजुर्वेदस्य शतपथब्राह्मणे आम्नातं 'ब्रह्म एव त्रयीविद्या वा वेदविद्यायाः प्रकाशकः' इति। अतः उक्तं-'ब्रह्म एव प्रथमसृजत त्रयीमेव विद्याम्' (६-१-१४)। कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणे ब्राह्मणः वेदस्य उत्सः इत्युक्तम्। अतः तमनु त्रयो वेदा असृजन्त (२-३-१०-१)। वैशेषिकदर्शने तु वेदः ईश्वरस्य वाणी इति।तस्मात् तस्य प्रामाण्यं स्वीक्रियते।

वेदान्तदर्शने पूर्वमीमांसादर्शने च वेदस्य अपौरुषेयत्वं प्रामाण्यत्वञ्च प्रतिपाद्यते। किन्तु वेदस्य नित्यत्वविषये उभयदर्शने प्रस्थानभेदः लक्ष्यते। पूर्वमीमांसादर्शने शब्दस्य नित्यत्वं प्रतिपाद्यते। न्यायदर्शने शब्दस्य अनित्यत्वं प्रतिपाद्यते। जैमिनिन्यायदर्शने शब्दस्य अनित्यत्वं खण्डयित्वा नित्यत्वं च प्रतिपाद्यते। शब्दस्य नित्यत्वे प्रमाणिते वेदस्यापि नित्यत्वं प्रतिपाद्यते। कूटस्थनित्यताप्रवाहनित्यताभेदेन च वेदान्तदर्शने द्विविधा नित्यता। कूटस्थ अर्थात् सर्वदा एकरुपः निर्विकारः। वेदान्तदर्शने परब्रह्मणः कूटस्थनित्यता पारमार्थिकसत्ता च स्वीक्रियते। ब्रह्म वै सर्वे एव अनित्याः इति वेदान्तिनां सिद्धान्तः इति। यस्य आविर्भावेन साकं तिरोभावः अस्ति। यः प्रतिकल्पे अभिव्यक्तो भवति किञ्च, यस्य प्रलयकाले किञ्चित्कालस्य कृते तिरोभावः भवति सा एव प्रवाहनित्यता। तादृशपदार्थस्य कूटस्थनित्यता नास्ति केवलं प्रवाहनित्यता अस्ति। यतो हि कल्पं प्रति तेषां सृष्टिः प्रलयः च भवति। तथा वेदोऽपि प्रलयकाले परमेश्वरे लीयते। कल्पारम्भे पुनः परमेश्वरः वेदं स्मरति। तस्मात् वेदान्ते वेदस्य प्रवाहनित्यता न तु कूटस्थनित्यता स्वीक्रियते। वेदस्य नित्यताप्रसङ्गे वेदान्तिकसिद्धान्तः ब्रह्मसूत्रे प्रतिपादितः अस्ति(१-३-२९)। वाचा विरूपनित्यया इति, अनादिनिधना नित्या वागुत्सृष्टा स्वयमभूवा इति श्रुतिस्मृत्यादिषु वाक्येषु वेदस्य प्रवाहनित्यता उद्घोषिता। पूर्वमीमांसकानां नये एकरूपस्य जगतः प्रवाहनित्यताप्रसङ्गः एव नास्ति। अतः मीमांसादर्शने वेदस्य कूटस्थनित्यता पारमार्थकनित्यता वा स्वीक्रियते।





## पाठगतप्रश्नाः ७

३८. मीमांसकानां वैदान्तिकानां वेदो पौरुषेय अपौरुषेयो वा।

३९. पुरुषानां ज्ञानम् अपूर्णं कथम्।

४०. पुरुषाणां रचनायां कथं दोषाः सम्भवन्ति।

४१. कस्मात् वेदः स्वयं प्रकाशितः।

४२. वेदः परमेश्वरस्य किं स्वरुपः।

४३. वेदस्य स्मरणकर्ता कः।

४४. के मन्त्रद्रष्टारः।

४५. प्रतिकल्पे परमेश्वरः वेदं कस्मै ददाति।

४६. प्रलयकाले वेदः कुत्र तिष्ठति।

४७. यास्कमते कः ऋषिशब्दार्थः।

४८. वेदविषये निरुक्तकारमतं किम्।

४९. आचार्यरसायनस्य मतानुसारेण वेदः पौरुषेय अपौरुषेयो वा।

५०. वेदभाष्यकारमते वेदः कस्य किं स्वरुपः।

५१. कः अनादिः।

५२. कः अनादिः।

५३. पूर्वमीमांसकानां वेदो नित्यः अनित्यो वा।

५४. पूर्वमीमांसकानां वेदस्य उत्सः कः।

५५. शास्त्रयोनित्वत् इति सूत्रस्य कः सामान्यर्थतः।

५६. कस्मिन् दर्शने वेदः ईश्वरस्य वाणी।

५७. नैयायिकानां नये  शब्दो नित्य अनित्यो वा।

५८. नित्यता कतिविधा। के च ते।

५९. वेदान्तदर्शने ब्रह्मणः कीदृशी नित्यता।

६०. कूटस्थनित्यतायाः साधारणलक्षणं किम्।

६१. प्रलयकाले वेदः कुत्र लीयते।

६२. मीमांसादर्शने वेदस्य कीदृशी नित्यता।

## ५.८) सांख्यमते वेदः

सांख्यदर्शने वेदस्य नित्यता न स्वीक्रियते किन्तु वेदः अपौरुषेयः। वेदः ऋषिगणकर्तृकः दृष्टः। अतः न कोऽपि वेदस्य रचयिता इति। न कस्यापि स्वस्य मतानुसारेण वेदप्रामाण्यं वेदाविर्भावविषयो वा स्वीक्रियते। तस्माद् वेदः अपौरुषेयः। न कोऽपि वेदकर्तास्वरुपः अस्ति। अतः- न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्य अभावात् (सांख्यसूत्रं ५-४६)। श्रुतिस्मृत्यनुसारेण प्रतिपादितवेदस्य नित्यता सांख्यमते गुरुशिष्यपरम्परायां वेदस्य अविच्छिन्नप्रवाहः इति। ऋषिगणः उच्चारितवैदिकशब्दसमूहस्य गुरुशिष्यपरम्परायाम् अद्यापि अक्षुण्णरूपेण उच्चारणं भवति। परमेश्वर इव सांख्यपुरुष इव अनादिनित्यता कूटस्थनित्यता वा वेदस्य नास्ति। यतो हि प्रत्येकस्य मन्त्रस्य द्रष्टा कोऽपि ऋषिः इति। अतः तदृषेः पूर्वम् तस्य मन्त्रस्य अस्तित्वं नास्ति इति। आमन्त्रद्रष्टुः गुरुपरम्परापर्यन्तं वेदाध्ययनं निरवच्छिन्नभावेन चलति। तस्मात् यथा पूर्वकल्पे वेदोच्चारणम् अभवत्। तत्सादृशोच्चारणानुसारेण अद्यापि तदेवोच्चारणप्रथा आवहोकालात् चलति। तस्मात् वेदस्य सजातीयोच्चारणप्रवाहस्य नित्यता स्वीक्रियते अर्थात् प्रवाहनित्यता सांख्यदर्शने स्वीक्रियते। न तु अनाद्यनन्तनित्यता इति।

## ५.९) वैयाकरणमते वेदः

महाभाष्यकारः भगवान् पतञ्जलिः पाणिनिप्रणीतस्य तेन प्रोक्तम् इति सूत्रस्य भाष्ये वेदस्य नित्यताप्रसङ्गे उक्तवान् वेदस्य अर्थाः नित्याः किन्तु शब्दराशिः वर्णानुपूर्वी वा अनित्या इति। तदुक्तं- अर्थो नित्यः , असौ वर्णानुपूर्वी सा तु अनित्या इति। प्रति महाप्रलयं वेदस्य वर्णानुपूर्व्याः अक्षरपरम्परायाः विनाशो भवति। प्रति कल्पं पुनः ऋषिगणः वेदस्य स्मरणं करोति। वर्णराशीनां लोपे सत्यपि वेदस्य अर्थाः नित्याः तिष्ठन्ति। वर्णानुपूर्व्याः भेदवशात् नानाशाखानाम् उत्पत्तिः अभवत्। यथा ऋग्वेदस्य एकविंशतिः, सामवेदस्य सहस्रभेदाः (सहस्रवर्त्मा सामवेदाः) इति। अतः महाभाष्यकारपतञ्जलिमतानुसरेण वेदार्थाः नित्याः, वर्णानुपूर्वी अनित्या चेति। अर्थात् अंशतः नित्यः अंशतः अनित्यः चेति।

न्यायदर्शने वेदस्य शब्दस्य च नित्यता न स्वीक्रियते। वेदस्य अनाद्यनन्तनित्यता अर्थात् कूटस्थनित्यता न स्वीक्रियते। परन्तु प्रवाहनित्याता स्वीक्रियते। मन्त्रायुर्वेदवच्च तत्प्रामाण्यम् आप्तप्रामाण्यात् इति न्यायदर्शनसूत्रभाष्ये वात्स्यायनः उक्तवान् - मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यास-प्रयोगाविच्छेदो वेदानां नित्यत्वम् इति अर्थात् अतीते अनागते मन्वन्तरे प्रलयकल्पे सम्प्रदायक्रमे अभ्यासः तस्य प्रयोगश्च निरवच्छिन्नभावेन चलति तदेव वेदस्य नित्यता इति। एतदेव प्रवाहनित्यता इति।

भाष्यकारः सायनाचार्यः वेदस्य अनाद्यनन्तनित्यता न स्वीकरोति। तस्य मते वेदस्य नित्यता एककल्पस्थायी इति। प्रति कल्पं वेदः अभिव्यक्तं भूत्वा प्रलयकाले परमेश्वरे लीयते। अर्थात् उत्से प्रत्यावर्तितो भवति। अतः वेदभाष्यकारस्य आचार्यसायनस्य मतानुसारेण वेदस्य प्रवाहनित्यता इति।





## पाठगतप्रश्नाः- ८

६३. सांख्यमते वेदो नित्यः अनित्यो वा।

६४. व्याकरणे मते अर्थाः नित्याः न वा।



## पाठसारः

वशिष्ठविश्वामित्रयोः आख्यानम् च्यवानभार्गवस्य तथा मानवीसुकन्याख्यानम् ऊर्वशी-पुरूरवसोः उपाख्यानं शुनःशेपोपाख्यानम् इत्येतानि उपाख्यानानि वयम् अत्र ज्ञातवन्तः। एतद्विहाय वर्तन्ते उपाख्यानान्तराणि बहून्येव। परन्तु विस्तरभयादत्र तानि न उच्यन्ते।

एतदनन्तरं वयं वेदस्य पौरुषेयत्वविषये किञ्चिज्ज्ञातवन्तः। पूर्वमीमांसादर्शने वेदान्तदर्शने सांख्यदर्शने च वेदः अपौरुषेयः केवलं न्यायदर्शने पौरुषेयः इति। पूर्वमीमांसादर्शने वेदस्य कूटस्थनित्यता स्वीक्रियते। वेदान्तदर्शने सांख्यदर्शने न्यायदर्शने च वेदस्य प्रवाहनित्यता स्वीक्रियते न तु कूटस्थनित्यता इति। वैयाकरणानां नये वेदस्यार्थाः नित्याः परन्तु शब्दराशयः अनित्याः इति। श्रुतिस्मृत्यादिग्रन्थे वेदस्य नित्यता स्वीक्रियते। वेदान्तसांख्यन्यायनये वेदस्य कारणं ब्रह्म इति। वेदस्य उत्सत्वात् वेदप्रामाण्यं प्रवाहनित्यता च अस्ति। पूर्वमीमांसकानां नये परमेश्वरः न वेदस्य उत्सः। तेषां नये शब्दः नित्यः। ते जैमिनिन्यायदर्शने प्रमाणितं शब्दस्य नित्यत्वं च खण्डयित्वा शब्दस्य नित्यत्वं प्रतिपादयन्ति। तेषां नये शब्दस्य नित्यत्वात् वेदस्यापि नित्यत्वम् इति।



## पाठान्तप्रश्नाः

१. उर्वशीपुरुरवसोः एका रहस्यवादिनीं व्याख्यां लिखत।
२. वसिष्ठविश्वामित्रयोरुपाख्यानं संक्षेपेण लिखत।
३. उर्वश्याः पणत्रयं लिख्यताम्।
४. पुरुरवाः कथम् उर्वश्याः अविच्छिन्नसमागमम् अलभत्।
५. च्यवानभार्गवस्य तथा मानवीसुकन्याख्यानम् कुत्र कुत्र लभ्यते।
६. उर्वश्याः पणत्रयं लिख्यताम्
७. उर्वशी-पुरुरवसोराख्यानं प्रतिपादयत।
८. च्यवानभार्गवस्य तथा मानवीसुकन्याख्यानम् लिखत।



९. वसिष्ठविश्वामित्रयोराख्यानं संक्षेपेण लिखत।

१०. आख्यानानां तात्पर्यं लिखत।

११. शुनःशेपोपाख्यानं लिखत।

१२. न्यायदर्शनमते वेदं प्रतिपादयत।

१३. मीमांसामते वेदं प्रतिपादयत।

१४. सांख्यमते वेदं प्रतिपादयत।

१५. वैयाकरणमते वेदं प्रतिपादयत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि – १

१. हरिश्चन्द्रविश्वामित्रौ

२. वरुणस्य

३. अजीगर्तः।

४. ऋग्वेदे।

५. विश्वामित्रस्य।

६. विश्वामित्रः शुनःशेपाय।

### उत्तराणि - २

७. उर्वशीम्

८. राजानं नग्नं दृष्ट्वा

९. उर्वशी एका अप्सराः।

१०. समयं स्वीकृत्य विचार्य स्वकरोत्।

११. सा सदा घृताहारं करिष्यति।

१२. उर्वशीं विना गन्धर्वाः स्वर्गं नीरसं निर्जीवञ्च अनुभूतवन्तः

१३. गन्धर्वाः कपटेन मेषं चोरितवन्तः।

१४. मेषस्य करुणाध्वनिं श्रुत्वा, चौरात् मेषस्य त्राणाय च

१५. राज्ञः नग्नस्थं रूपं प्रेक्ष्य

१६. कुरुक्षेत्रस्य एकस्मिन् जलाशये हंसी-स्वरूपे स्वप्रियम् अपश्यत्

१७. अग्निविद्यानुष्ठानेन

१८. उ विक्रमोर्वशीयनाम त्रोटकम्

१९. पुरुरवाः



**उत्तराणि - ३**

२०. मानवीसुकन्येति

२१. च्यवानः' इति

२२. मानवीसुकन्या

२३. सौख्यस्य स्तम्भः'

**उत्तराणि- ४**

२४. ऋग्वेदे

२५. वसिष्ठविश्वामित्रौ

२६. क्षत्रीयः

२७. ब्राह्मणत्वप्राप्त्यर्थम्

**उत्तराणि– ५**

२८. नारीचरित्रस्य उदात्ततायाः तेजस्वितायाश्च प्रतिपादनम्

२९. शारीरिकतपस्यायाः

३०. पुरुषकारस्य

३१. ऋषेः गौरवं, प्रेम्णः महिमानं, कवेः साधनाञ्च अभिव्यक्तं करोति।

३२. परमेश्वरं प्रति प्रगाढा श्रद्धा जीवात्मना सह प्रेम। विश्वकल्याणाय इदमेव मङ्गलमयं मार्गमस्ति। इत

**उत्तराणि - ६**

३३. सृष्टस्य ।

३४. पौरुषेयः

३५. नित्यः।

३६. परमपुरुषेण ।

३७. परमेश्वरः।

**उत्तराणि - ७**

३८. अपौरुषेयः।

३९. ते अपूर्णाः अतः तेषां ज्ञानमपि अपूर्णाः।

४०. भ्रमः प्रमादः विप्रलिप्सा इन्द्रस्य च अपूर्णकारणात् दोषाः सम्भवन्ति।

४१. परमेश्वरसकाशात्।

४२. प्रज्ञास्वरुपः।

४३. ब्रह्मा।



४४. वेदमन्त्रं ये दृष्टवन्तः।

४५. ब्रह्मणे।

४६. परब्रह्मणि अभिन्नरुपेण ।

४७. मन्त्रद्रष्टा।

४८. वेदः स्वयम्भूः अपौरुषेयः।

४९. अपौरुषेयः।

५०. महेश्वरस्य निश्वाससस्वरुपः।

५१. यस्य आदिः नास्ति।

५२. यस्य अन्तः नास्ति।

५३. नित्यः।

५४. ब्रह्म ।

५५. ब्रह्म वेदचतुष्टस्य योनिः।

५६. वैशेषिकदर्शने।

५७. अनित्यः।

५८. द्विविधा। कूटस्थनित्यता प्रवाहनित्यता।

५९. कूटस्थनित्यता।

६०. यस्य आविर्भावेन साकं तिरोभावः अस्ति।

६१. परब्रह्मणि।

६२. कूटस्थनित्यता।

**उत्तराणि-८**

६३. अनित्यः

६४. नित्याः।

## ॥ इति पञ्चमः पाठः ॥



६

# वैदिकयागाः

## प्रस्तावना

वैदिककालात् भारतीयसंस्कृतौ यागानाम् अनुष्ठानं शुभकार्यस्य सूचकत्वेन माहात्म्यम् आवहति एव इत्यत्र नास्ति सन्देहः। यज्ञः भवति शुद्धीभवनस्य क्रियाविशेषः। अस्यां क्रियायाम् अग्निः पवित्रतायाः प्रतीकरूपेण प्रतिष्ठाप्यते। आयुर्वेदस्य औषधीय-विज्ञानस्य मतानुसारं यागे अस्मिन् अग्नेः उत्पन्नेन धूमेन वायुशोधनं भवति इति गुणः यज्ञस्य प्रचारे प्रसारे च बहु सहायकः वर्तते। तथाहि यागस्य माहात्म्यविषये भगवता भगवद्गीतायामुक्तं – अधियज्ञोऽहमेवात्र देहे देहभृताम वर (८/४) इति। यज्ञशब्दस्य त्रयः अर्थाः सन्ति -- १- देवपूजा, २-दानम्, ३-संगतिकरणं चेति। संगतिकरणस्य अर्थः संस्थापनम्। यज्ञस्य एकं प्रमुखम् उद्देश्यं हि धार्मिकप्रवृत्त्यै सत्प्रयोजनसिद्ध्यै च जनानां संहतिसाधनम्। अस्मिन् कलौ युगसंघे शक्तिः मुख्या वर्तते। परास्तभूतानां देवतानां पुनः विजयार्थं प्रजापतिः तस्य पृथक्-पृथक्-शक्तीनाम् एकीकरणं कृत्वा संघ-शक्तिरूपेण दुर्गा-शक्तेः प्रादुर्भावं कृतवान्। तेन च सर्वाः आपदः दूरीभूताः। मानवजातेः समस्यानां समाधानं समूहशक्तौ किञ्च संघे गूहितं वर्तते, एकाकी मानवः दुर्बलः स्वार्थपरश्च सञ्जायते।

यज्ञस्य महत् तात्पर्यं भवति त्यागः। स्वस्य प्रियपदार्थादिकम् अग्नेः तथा वायोः माध्यमेन सकलसंसारस्य कल्याणाय यज्ञद्वारा वितीर्यते। वायोः शोधनेन सर्वेषाम् आरोग्यवर्धनस्य अवसरः प्राप्यते। हूताः वायवः प्राणिमात्रस्य स्वास्थ्यवर्धनं कुर्वन्ति, रोगनिवारणे सहायकाश्च भवन्ति। यज्ञकाले उच्चरितैः वेदमन्त्रैः जनानाम् अंतःकरणे सात्त्विकी शुद्धता जायते। एवं प्रकारेण स्वल्पप्रयासेनैव जनानां महान् उपकारः साध्यते। यदि माता स्वस्य रक्त-मांसेभ्यः भागम् एकम् एकस्य नवजातकस्य निर्माणाय न त्यजति, प्रसववेदनां न सहते, नवजातकं दुग्धं न पाययति, पालन-पोषणादिषु आयासं न करोति, सर्वं निःस्वार्थभावेन नैव करोति, तर्हि मनुष्याणां जीवनं नैव सम्भवति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- यागादीनां प्रभेदं ज्ञातुं शक्नुयात्।
- होमस्य विध्यादिकं ज्ञातुं शक्नुयात्।
- इष्ट्यादीनां विषये विशिष्टं ज्ञानं प्राप्तुं शक्नुयात्।



- ➢ पशुयागानां विध्यादिकं ज्ञातुं समर्थो भवेत्।
- ➢ सोमादियागानां विध्यादिकं ज्ञातुं योग्यो भवेत्।
- ➢ सत्रयागस्य विषये ज्ञानं प्राप्तुं शक्नुयात्।
- ➢ स्वयमपि यागादीनां विषये लघुप्रबन्धं रचयितुं शक्नुयात्।

## ६.१) यागानां सामान्यपरिचयः

यागानां सामान्यतः पञ्च प्रकाराः दृश्यन्ते - होमः, इष्टिः, पशुः, सोमः, सत्रः च। वैदिकयागः प्रकृतिविकृतिभेदेन द्विविधः। प्रकृतियागः प्रधानयागः इत्युच्यते। प्रत्येकस्य प्रकृतियागस्य बह्व्यः विकृतयः सन्ति। समानजातीययागानां मूलं स्वरूपं प्रकृतिः यागः इत्युच्यते। तमेव प्रकृतियागम् आश्रित्य विकृतियागाः अनुष्ठीयन्ते। विकृतियागस्य अपरं नाम अङ्गयागः। प्रकृतियागः अङ्गी। पञ्चविधानां प्रकृतियागानां प्रकृतिः अत्र प्रदर्श्यते।

### ६.१.१) होमः

होमयागः दर्वीहोमः इति कथ्यते। अस्मिन् यागे प्रतिदिनं प्रातःकाले सायंकाले च गृहस्थस्य अग्निकुण्डे दुग्धदधिपुरोडाशादीनां आहुतिः प्रदीयते। सूर्यः अग्निश्च अस्य होमयागस्य देवता। प्रातः सूर्यम् उद्दिश्य सायं च अग्निम् उद्दिश्य मन्त्रपाठः आहुतिश्च क्रियते। यतः दर्व्या अग्निकुण्डे आहुतिः प्रदीयते। अतः अयं दर्वीहोमः इत्यपि उच्यते। होमजातीययागानां प्रकृतिः अग्निहोत्रः। वैदिककाले ब्राह्मण-क्षत्रिय-वैश्यैः प्रत्यहम् अग्निहोत्रः करणीयः आसीत्। तैः स्वयम् एव इदं करणीयम् आसीत्, पुरोहितद्वारा तत्करणस्य विधिः नासीत्। क्षत्रियवैश्यौ तु पुरोहितेन इदं साधयतः स्म। ब्राह्मणैः तु प्रत्यहं सस्त्रीकैः अग्निहोत्रः कर्तव्यः आसीत्।

ब्राह्मणः प्रत्यहम् अग्निहोत्रं कुर्यात् तत्र "ब्राह्मणोऽहरहः अग्निहोत्रं जुहुयात्" इति श्रुतिः प्रमाणम्। शतपथब्राह्मणस्य उक्तिः "एतद्वै जरामर्यं सत्रं जरया ह्येवास्मात् मुच्यते मृत्युना वा" अर्थात् अग्निहोत्रः एव जरामर्यसत्रः इत्युच्यते। कारणं हि मृत्युं विना अस्य यागस्य नित्यानुष्ठानात् ब्राह्मणस्य निष्कृतिः नास्ति। ब्राह्मणस्य इदं नित्यं कर्म। अद्यापि दाक्षिणात्ये महाराष्ट्रे च बहवः अग्निहोत्रकारिणः ब्राह्मणाः दृश्यन्ते। अस्मिन् यागे प्रातः सूर्यमुद्दिश्य सायं च अग्निमुद्दिश्य आहुतिः प्रदीयते। एक एव मन्त्रः प्रातः सायं च पठ्यते। प्रातः केवलं सूर्यो ज्योतिर्ज्योतिः सूर्यः इति, सायं च सूर्यशब्दस्य स्थाने अग्निशब्दं प्रयुज्य अग्निर्ज्योतिः ज्योतिरग्निः इति पठ्यते। सायंकाले सूर्यः तस्य तेजः अग्नौ प्रतिष्ठाप्य अस्तं गच्छति, अतः सूर्यस्य स्थाने अग्नेः पाठः विहितः। प्रातःकालीना आहुतिः सूर्योदयात् पूर्वम्, किञ्च सायंकालीना आहुतिः सूर्यस्य अस्तगमनात् परं विधेया इति विषये ब्राह्मणग्रन्थे विचारः विद्यते। एकस्मिन् पक्षे प्रातः सूर्योदयात् प्राक् होमः विधेयः, तेषां नये तथा न क्रियते चेत् आदित्यः आहुतिं न स्वीकरोति। शूकरः तामाहुतिं स्वीकरोति। अपरस्मिन् पक्षे विपरीतं मतं प्रदर्श्यते। असति सूर्योदये आहुतिदानं निष्फलं भवति। एवमेव पक्षद्वयस्य मतानुसारम् आहुतिप्रदानं कर्तव्यं भवति। श्रौतसूत्रैः अस्य विवादस्य समाधानं विहितम् अस्ति। वेदस्य शाखाभेदानुसारम् आहुतेः समयस्य भेदः कृतः वर्तते। यथा बह्वृच्-छन्दोमयशाखयोः



द्विजातिगणाः सूर्योदयात् पूर्वं होमं कुर्युः। तत्कारणात् ते अनुदितहोमिनः इत्युच्यन्ते। अपरत्र कठ-तैत्तरीय-मैत्रायणशाखानां ब्राह्मणाः उदयात् परमेव होमं कुर्युः। तस्मात् ते उदितहोमिनः उच्यन्ते। किन्तु उभाभ्याम् एव सूर्योदयात् पूर्वमेव गार्हपत्याग्नेः चयनं कृत्वा होमकुण्डस्य प्रज्वालनं कर्तव्यम्।

अग्निहोत्रस्य प्रधानम् आहुतिद्रवं हि दुग्धम्, तस्मात् यजमानेन पृथग् एका गौः पालनीया। सा अग्निहोत्री गौरित्युच्यते। यज्ञवेद्यां मृत्पात्रेण एकेन दुग्धम् उष्णीक्रियते। तच्च उष्णं दुग्धम् अग्निहोत्रवनी इति नामिकया दर्व्या अग्नौ आहूयते। प्रातः आहुतिद्वयोः मध्ये एका सूर्याय, अपरा च प्रजापतिम् उद्दिश्य प्रदीयते। यस्मिन् दिवसे अग्निहोत्रम् आरभ्यते। तस्मिन् दिवसे सायंकाले अग्निहोत्रं करणीयं भवति। तस्मात् कारणात् अयम् अग्निहोत्रम् इति प्रसिद्धिः आपस्तम्भस्य श्रौतसूत्रमते।

पूर्वमेव उक्तं यत् ब्राह्मणेन स्वयमेव इदं कर्तव्यम्। यदि ब्राह्मणः अस्वास्थ्यकारणात् अक्षमः भवति तदा तत्कार्यं पुत्रेण, पुत्राभावे च पुरोहितेन कर्तव्यं भवति। किन्तु पूर्णिमायाम् अमावास्यायाञ्च असुस्थतासत्त्वे अपि तेनैव करणीयं भवति। अविवाहितस्य अग्निहोत्रे अधिकारः नास्ति। विवाहितः किन्तु विपत्नीकः जातः, तस्यापि अधिकारः नास्ति। तेन पुनः दारपरिग्रहः कर्तव्यो भवति। ऐतरेयब्राह्मणे लिखितमस्ति यद् यदि पत्नी विगता स्यात् तर्हि पुनः विवाहः कार्यः नो चेत् श्रद्धां पत्नीरूपेण कल्पयित्वा ब्राह्मणः अग्निहोत्रं कुर्यात्।



## पाठगतप्रश्नाः

१. होमयागस्य अपरं नाम किम्।

२. होमयागस्य प्रकृतिः का।

३. केषां कृते अग्निहोत्रः आवश्यकः आसीत्।

४. अग्निहोत्रे केषाम् अधिकारः वर्तते।

५. विपत्नीकः अग्निहोत्री किं कुर्यात्।

### ६.१.२) इष्टिः

इष्टियागस्य प्रकृतिः भवति दर्शपूर्णमासः। दर्शशब्दस्य अर्थः सूर्येन्दुसङ्गमः अर्थात् अमावस्या। पौर्णमासी अर्थात् पूर्णिमा। पूर्णिमायाम् अमावास्यायाञ्च अयं यागः क्रियते। विवाहितः, सस्त्रीकः आहिताग्निः ब्राह्मणः क्षत्रियो वा शूद्रो वा अस्य यागस्य अधिकारी। आहिताग्निशब्दस्य अर्थो हि येन गार्हपत्याग्निः प्रतिष्ठितो वर्तते। अमावास्यायां दिवसद्वयं पूर्णिमायां च दिवसद्वयम् अस्य यागस्य अनुष्ठानं कर्तव्यम्। अयं यागः पूर्णिमायां प्रातः आरभ्य परस्मिन् दिवसे अर्थात् प्रतिपदि मध्याह्ने समाप्तो भवति। अमावास्यायामपि एवमेव अनुष्ठानं विहितम्। अस्य यागस्य प्रथमदिवसः पूर्णिमा भवेत्। अर्थात् अमावास्यायाम् आरम्भो न भवेत्। अस्मिन् यागे चत्वारः पुरोहिताः अपेक्ष्यन्ते – होता, अध्वर्युः, अग्नीध्रः,



ब्रह्मा चेति। पुरोहितेषु तारतम्यं नास्ति। सोमयागे ब्रह्मा सर्वश्रेष्ठः भवति। सर्वे तं प्रति सम्मानं प्रदर्शयन्ति। किन्तु इष्टियागे सर्वेषां पुरोहितानाम् अधिकारः समानो वर्तते। यद्यपि विविधाः गौणाहुतयः देवतानामानि च इष्टियागे श्रूयन्ते, तथापि तत्र आहुतिरेव मुख्या। प्रथमायाम् आहुतौ अग्निम् उद्दिश्य पुरोडाशः प्रदीयते। द्वितीया आहुतिः उपांशुरूपेण प्रसिद्धा। सा च विष्णु-प्रजापति-अग्नि-सोमानां कृते निवेद्यते। तृतीयाहुतौ अग्निषोमौ उद्दिश्य पुरोडाशः अर्प्यते। अमावस्यायां तु पुरोडाशनिष्ठा प्रथमाहुतिः अग्नेः इष्टा भवति। द्वितीयादिषु च आहुतेः देवता भवति इन्द्रः। हव्यद्रव्यं च यथाक्रमं दधि दुग्धं च। इष्टियागस्य समाप्तौ अग्निस्विष्टकृन्नामिका आहुतिः अग्नये अर्प्यते। अतःपरं पुरोहिताः यज्ञाहुतेः अवशिष्टम् अंशं प्रसादरूपेण गृह्णन्ति, तच्च ईडाभक्षणम् इत्युच्यते। सर्वेषां हव्यद्रव्याणां मिश्रणेन ईडा प्रस्तूयते। अनुयाजात् पत्नीयाजात् अनन्तरं यजमानस्य प्रतीकत्वेन कुशनिर्मिता मूर्तिः अग्नौ निक्षिप्यते। सा कुशमूर्तिः कुशप्रस्तरः इत्युच्यते। सा मूर्तिः यदा अग्नौ दग्धा सती भस्मसात् भवति, तदा यजमानः एवं चिन्तयति यत् तस्य पार्थिवशरीरं दग्धम् अभूत्। किञ्च यज्ञद्वारा तस्य आत्मा विष्णुसायुज्यम् प्राप्तवान्। इदम् अनुध्यानं यजमानेभ्यः प्रेरणां यच्छन्ति। यजमानः चिन्तयति यत् स विष्णुना सह एकीभूतः जातः। अपि च "विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति मन्त्रम् उच्चारयन् त्रिपदं गच्छति। इष्टियागः नित्यः काम्यो वा उभयप्रकारकः भवितुम् अर्हति। ये निरन्तरं पूर्णिमायाम् अमावास्यायां च अस्य अनुष्ठानं कुर्वन्ति तेषां कृते नित्यः। ये च नित्यं न कुर्वन्ति, कामनासिद्ध्यर्थमेव कुर्वन्ति तेषां कृते तु काम्यः इति। काम्यानुष्ठाने धान्येन पुरोडाशस्य निर्माणं कर्तव्यम्, तत्र गोधूमस्य व्यवहारः निषिद्धः।

शतपथब्राह्मणस्य मते दर्शपूर्णमासः सकलयागानां प्रकृतिः। अस्य ब्राह्मणस्य आदावेव इष्टेः आलोचना दृश्यते। इष्टियागस्य बहवः प्रकाराः सन्ति। पुत्रलाभाय पुत्रेष्टिः, अनावृष्टिसमये वृष्ट्यानयनाय कारीरिः इष्टिः, क्षेत्रस्य प्रथमं शस्यं देवतायै अर्पणाय आग्रायणेष्टिः इत्यादयः। अग्निप्रीत्यर्थकपुरोडाशयागः, इन्द्रप्रीत्यर्थकपुरोडाशयागः, इन्द्रप्रीत्यर्थकपयोद्रव्ययागश्चेति त्रयाणां यागानां समुहः दर्शयागः। अष्टकपालपुरोडाशयागः, उपांशुयागः, एकादशकपालपुरोडाशयागश्चेति त्रयाणां यागानां समुहः पौर्णमासयागः। एतेषां समानफलदायकानां षण्णां यागानां समूहः दर्शपौर्णमासयागः इत्युच्यते। अयं दर्शपौर्णमासयागः त्रिंशद्वर्षात्मकः।



## पाठगतप्रश्नाः

६. इष्टियागस्य प्रकृतिः का।

७. दर्शशब्दस्य कोऽर्थः।

८. इष्टियागस्य चत्वारः पुरोहिताः के।

९. सोमयागे सर्वश्रेष्ठः कः।

१०. पुरोहितानां प्रसादभक्षणं किम् उच्यते।



### ६.१.३) पशुः

दैक्षः प्राजापत्यपशवो वा सकलपशुयागानां प्रकृतिः। इदमेव निरूढपशुयागः इति प्रसिद्धम्। आहिताग्निः त्रैवर्णिकः पुरुषः अस्य यागस्य अधिकारी। अयं यागः प्रतिशरदम् एकवारं करणीयः इति निर्देशः। अपेक्ष्यते चेत् वारद्वयं वारषट्कम् अपि कर्तुं शक्यते। यदि सकृदेव सम्पादनीयः तर्हि स वर्षर्तौ सम्पादनीयः। यदि वारद्वयं तर्हि प्रथमः सूर्यस्य उत्तरायणवेलायाम् अपरश्च दक्षिणायनसमये। यदि वारषट्कं तर्हि प्रत्येकम् ऋतुषु एकैकम् सम्पादनीयम्।

पशुः अस्य यागस्य आहूतिद्रव्यम्। तस्मादयं यागः पशुयागः इति उच्यते। अस्य यागस्य देवता प्रजापतिः, सूर्यः, इन्द्रः अग्निः वा। अस्मिन् यागे षट् पुरोहिताः अपेक्षिताः भवन्ति - अध्वर्युः, प्रतिप्रस्थाता, होता, मैत्रावरुणः, अग्निः, ब्रह्मा च। इष्टिमूलकयागेषु होता एव अनुवाक्या याज्या इति उभयविधान् मन्त्रान् व्याहरति। किन्तु पशुयागे होता केवलं याज्यमन्त्रान् उच्चारयति। मैत्रावरुणनामकः ऋग्वेदीयः पुरोहितः अनुवाक्यमन्त्रान् उच्चारयति। प्रैषमन्त्राः अपि मैत्रावरुणेन एव पठनीयाः।

पशूनाम् आहूतये यूपदारु अपेक्ष्यते। पलाशखदिरविल्वरोहितकानां चतुर्णां वृक्षाणां मध्ये कस्यापि एकस्य काष्ठेन यूपदारूणि निर्मीयन्ते। प्रत्येकं यूपदारुभिः विशिष्टैहिकपारत्रिकफललाभः भवति। यज्ञवेद्याः पूर्वस्यां दिशि यूपः स्थापनीयः। साधारणतया दन्तुखञ्जत्वकाणत्वादिदोषरहिताः छागाः एव बलित्वेन आहूयन्ते। मन्त्रपूतं छागं पुरोहितः प्लक्षवृक्षस्य शाखाभिः स्पृष्ट्वा "अग्नये त्वा जुष्टमुपाकरोमि" इति मन्त्रं पठति। इदम् उपाकरणम् इति कथ्यते। बलित्वेन प्रदास्यमानः पशुः श्वासरोधेन निहन्यते। एवंविधं निधनं संज्ञपनम् इति उच्यते। निहतपशोः अङ्गानि शमितानामकः पुरोहितः विभनक्ति। यज्ञस्थलस्य उत्तरपूर्वस्यां दिशि पशुसंज्ञपनव्यवच्छेदादिनिमित्तम् एकं स्थानं निर्दिष्टम् अस्ति। पशोः वसा अर्थात् हृदयस्य मेदः अध्वर्युनामकः पुरोहितः आहवनीयाग्नौ जुहोति। एकस्मिन् मृत्पात्रे पश्वङ्गानि शामित्रप्रवेशानन्तरं शामित्रनामके वह्निकुण्डे पच्यन्ते। यागसमये एकः पुरोडाशः यज्ञाग्नौ आहूयते। केवलं प्रतिप्रस्थातारं विना सर्वे यजमानाः पुरोहिताः च समर्पितपुरोडाशस्य अवशेषान् भुञ्जते। इष्टियागस्य आलोचनायाम् उक्तं यत् कर्म इदं ईडाभक्षणम् इति प्रसिद्धम्। तदनन्तरं पशोः पक्वानि अङ्गानि मृत्पात्रात् बहिष्कृत्य खण्डशः कर्तयित्वा अध्वर्युः आहवनीयाग्नौ प्रददाति। मृत्पात्रे पशुमांसस्य वसानामकः यः रसः सञ्चितः भवति, तदपि पुरोहितः जुहोति। इतः परम् एकादश अनुयाजाः पत्नीसंयाजाश्च अनुष्ठीयन्ते।

अस्मिन् पशुयागे पशोः संज्ञपनश्वासरोधादिकं यत् क्रियते तत् पशुवधः इति न मन्यते। वैदिकविधानानुगुणम् अयं न वधः न च पापाय भवति। यज्ञे कोऽपि पशुः आहूयते चेत् स पशुः तस्य पार्थिवशरीरं परित्यज्य यं देवम् उद्दिश्य स आहूतः तस्य देवस्य सायुज्यम् आप्नोति। यज्ञेन अनायासेन एव अयं पशुः दैवीरूपं लभते। पशुम् उद्दिश्य अस्मिन् प्रसङ्गे ऋक्संहितायाः एकः ऋङ्मन्त्रः उल्लिख्यते -

**"न वा उ एतन्म्रियसे न रिष्यसि देवा -**
**इदेसि पथिभिः सुगेभिः।" इति।**



अर्थात् हे पशो, त्वं मृत्युलोकं न गच्छसि न वा वयं तव हिंसां कुर्मः। त्वं सरलेन पथा देवसायुज्यं गच्छसि। मनुः अपि मतम् इदं समर्थितवान् - यज्ञे वधोऽवधः। अर्थात् यज्ञे वधः न वधः। यज्ञे पशुः न वध्यते। तस्य देवत्वप्राप्तिः भवति।

पुरोडाशस्य ईडाभक्षणम् इव पशुयागे आहूत्यवशेषस्य पशुमांसस्य विधानं दृष्टं वर्तते। अस्य पशुमांसस्य भक्षणविषये द्वे विपरीते मते स्तः। एके वदन्ति यत् पशुः यजमानस्य चिह्नस्वरूपः। पशुद्वारा यजमानः आत्मानम् एव आहूत्य देवत्वं लभते। अतः यजमानः यदि पशुमांसं भुङ्क्ते तर्हि तत् यजमानस्य कृते स्वमांसभक्षणसमानं भविष्यति। अतः इदं निषिद्धम्। किन्तु ऐतरेयब्राह्मणे इदं मतं समालोचितं खण्डितं च। अग्नीषोमाभ्याम् उभाभ्यां देवताभ्याम् इन्द्रः वृत्रम् अवधीत्। अतः अग्निः सोमश्च इन्द्राय एकं पशुं याचितवन्तौ। इन्द्रोऽपि तदा प्रार्थितं वरं प्रदत्तवान्। अत्र यज्ञकाले इन्द्रप्रदत्तस्य वरस्य परिपूर्तये अग्निं सोमं च उद्दिश्य पशुबलिः विहितः। यजमानस्य प्रतीकतया पशुबलिः न प्रदत्तः। अतः पुरोहितानाम् अवशिष्टानां पशुमांसानां भक्षणं न दोषावहम्, न च निषिद्धम्। अद्यापि दाक्षिणात्यादिषु पुरोहिताः पशुयागे आहूतस्य पशोः अवशिष्टमांसं (प्रसादरूपेण) खादन्ति।



## पाठगतप्रश्नाः

११. सकलपशुयागानां का प्रकृतिः।

१२. पशुयागस्य आहुतिरूपेण किं दीयते।

१३. पशुयागस्य देवाः के।

१४. पशुयागस्य षट् पुरोहिताः के।

१५. यूपदारुणि केषां वृक्षाणां काष्ठेन निर्मीयन्ते।

---

## ६.१.४) सोमः

सर्वविधसोमयागस्य प्रकृतिः हि अग्निष्टोमः। बहुषु ब्राह्मणेषु सोमयागस्य विवृतिः दृश्यते। सोमरसः एव सोमयागस्य प्रधानम् आहुतिः। पञ्च दिवसं व्याप्य अयं यागः प्रचलति। तत्र प्रथमदिवसे यजमानः पुरोहितान् अभिनन्दति, दक्षिणायाः प्रतिश्रुतिं प्रदाय यज्ञे नियोजयति च। द्वितीयदिवसे प्रायणीय–इष्टेः अनुष्ठानं क्रियते। यया इष्ट्या यज्ञस्य आरम्भः भवति सा इष्टिः प्रायणीय–इष्टिः इत्युच्यते। एतदनन्तरं दशद्रव्याणां विनिमयेन शूद्रस्य सकाशात् सोमलतायाः क्रयणं क्रियते। सोमः हि यथा देवतानां तथा ब्राह्मणानां राजा। तृतीयदिवसे यज्ञस्थलस्य पूर्वदिशि प्राग्वंश–नामिका महावेदी निर्मीयते। चतुर्थदिवसे निरूठपशुबन्धयागस्य प्रक्रियानुसारम् अग्निं सोमं च उद्दिश्य एकः पशुयागः विधीयते। अन्तिमदिवसे अर्थात् पञ्चमदिवसे प्रकृतस्य अग्निष्टोमस्य अनुष्ठानं भवति। पूर्वतनेषु चतुर्षु





दिवसेषु अनुष्ठितानि अनुष्ठानानि अग्निष्टोमानुष्ठानस्य भूमिकास्वरूपाणि। पञ्चमदिवसे सोमरसः निष्काशनीयः। इदम् अनुष्ठानं सोमाभिषवः सोमसवनं वा उच्यते।

सर्वविधसोमयागस्य प्रकृतिः हि अग्निष्टोमयागः, स ज्योतिष्टोमः इत्यपि उच्यते। अस्मिन् यागे सोमलतायाः रस एव प्रधानम् आहुतिद्रव्यम्। एतादृशयागे यानि द्वादश स्तोत्राणि गीयन्ते, तेषु अन्तिमं स्तोत्रम् अग्निष्टोमम् इत्युच्यते। यतः अग्निष्टोमनामके सामगाने यज्ञः समाप्यते, तस्मात् तज्जन्ययागः अपि अग्निष्टोमः इति आख्यायते। बहुब्राह्मणयागे सोमयागस्य विवृतिः दृश्यते। ऐतरेयब्राह्मणे विशेषतः अग्निष्टोमयागस्य विवरणं वर्तते। अस्मिन् ब्राह्मणे चत्वारिंशत् अध्यायाः वर्तन्ते। तत्र आदितः षोडशसु अध्यायेषु अग्निष्टोमयागे ऋग्वेदीयपुरोहितानां कर्तव्यं विहितं वर्तते।

प्रति संवत्सरं वसन्त-ऋतौ त्रैवर्णिकयजमानः सपत्नीकः अस्य यागस्य अनुष्ठानं कुर्यात्। बहुदूरात् दुर्गमप्रदेशात् सोमलताम् आनीय यत्नेन तस्याः रक्षा क्रियते स्म। इदानीं सोमलता दुष्प्राप्या जाता। तस्मात् तस्याः स्थाने पूतिका-इत्याख्यायाः लतायाः विधानं दृश्यते। वैदिकयुगे एव सोमलता दुष्प्राप्या आसीत्। शतपथब्राह्मणे उक्तं यत् यदि सोमलता न प्राप्यते, तर्हि पूतिकया यज्ञं कुर्यात् इति। अस्मिन् यागे षोडश पुरोहिताः अर्थात् सर्वे एव अपेक्षिताः। यजमानः ब्राह्मणाः च मिलित्वा साकल्येन सप्तदश जनाः भवन्ति। कस्मिंश्चित् वेदग्रन्थे दृश्यते यत् - 'सदस्य' – इत्याख्यः पुरोहितः सप्तदशसंख्यायाः परिपूरको भवति। यज्ञस्य प्रथमदिवसे एव यजमानः पुरोहितान् अभिनन्दति अपि च दक्षिणायाः प्रतिश्रुतिं प्रदाय यज्ञे नियोजयति। इयं रीतिः ऋत्विग्वरणम् इत्युच्यते। तदनन्तरं दीक्षणीय-इष्टेः अनुष्ठानं भवति। यजमानः तत्पत्नी च यज्ञे दीक्षिते भवतः, एवं तया दीक्षया तयोः नवजन्म अर्थात् आध्यात्मिकजन्म भवति। द्वितीयदिवसे प्रातः प्रायणीय-इष्टेः अनुष्ठानं विहितं वर्तते। यया इष्ट्या यज्ञस्य आरम्भः भवति सा प्रायणीयः इष्टिः उच्यते। अस्याम् इष्टौ पथ्यास्वतिः, अग्निः, सोमः, सविता, अदितिः च एतेषां पञ्चानां देवानाम् आह्वानं क्रियते। अदितये पुरोडाशः किञ्च अन्येभ्यः चतुर्भ्यः देवेभ्यः द्रुतं घृतम् आज्यं वा आहुतित्वेन विहितं वर्तते। याज्ञिकपरिभाषायां घृतम् द्रुतं चेत् तत् आज्यम् उच्यते, किञ्च पीण्डिभूतं चेत् घृतम् उच्यते। "हविर्विलीनमाज्यं स्याद् घनीभूतं घृतं विदुः" इति श्रुतिः वर्तते। प्रायणीयेष्टेः परं सोमलताक्रयणस्य अनुष्ठानं दृश्यते। एषः सोमक्रयः इत्युच्यते। दशद्रव्याणां विनिमयेन कस्माच्चित् शूद्रात् सोमलतायाः क्रयणं क्रियते। तानि च दश द्रव्याणि हि एकवर्षीयः गोवत्सः, सुवर्णम्, एकः अजः, एका दुग्धवती गौः तस्याः वत्सः च, एकः वृषभः, शकटवहनाय एकः बलीवर्दः, एकः वृषभवत्सः, एकः गोवत्सः च, एकं वस्त्रं च। सोमः देवतानां ब्राह्मणानां च राजा। तदर्थं राजकीयसम्मानसहितं सोमस्य वहनं क्रियते। पुरोहितगणैः चालिताभ्यां बलीवर्दद्वयेन वाहिताभ्यां द्वाभ्यां शकटाभ्यां सोमः यज्ञस्थले नीयते। राजा सोमः यजमानानां मान्यः अतिथिः वर्तते। सोमस्य कृते आतिथ्येष्टिनामिकायाः इष्टेः विधानं वर्तते अस्मिन् स्थले। अस्याम् इष्टौ नवसु मृत्कपालेषु विष्णुम् उद्दिश्य पुरोडाशः अर्प्यते। आतिथ्येष्टेः अनन्तरं प्रवर्ग्यनामकम् अनुष्ठानम्, तदनन्तरं च उपसत्-इष्टेः अनुष्ठानं क्रियते। तृतीयदिवसे यज्ञस्थलस्य पूर्वदिशि प्राग्वंश-नामिका महावेदी निर्मीयते। चतुर्थदिवसे निरूठपशुबन्धयागस्य प्रक्रियानुसारम् अग्निं सोमं च उद्दिश्य एकः पशुयागः विहितः। अस्मिन् दिवसे दक्षिणस्थदिशि हविर्विधानवेद्यां सोमः नीयते। इदं च अनुष्ठानं हविर्विधानप्रणयनम् इति अभिधीयते।



माध्यन्दिनसवने पशुमांसस्य पुरोडाशस्य च आहुतिः निर्दिष्टा वर्तते, सायन्तने अर्थात् तृतीयसवने पशोः नाना-अङ्गानि आहुतित्वेन दीयन्ते। एतदनन्तरं पत्नीसंयाजः अनुष्ठितः वर्तते। पुरोहिताः अस्मिन् दिवसे प्रत्यूषसि पूतसलिले अवगाहनं कृत्वा सोमसवनं कुर्वन्ति। विहङ्गकाकल्याः आरम्भात् पूर्वं होता प्रातः अनुवाकं पठति। एकस्मिन् प्रस्तरखण्डे सोमलतां संस्थाप्य तदुपरि 'वसतीवरी' इति नामकस्य जलस्य सिञ्चनं करणीयम्। अपरस्मिन् प्रस्तरखण्डे सोमलतायाः पेषणेन रसः निष्काश्यते। ग्रहनामके पात्रे निष्काशितः सोमरसः स्थाप्यते, छागचर्मनिर्मितेन 'दशापवित्र' इति नामकेन तितउना तस्य परिशोधनं क्रियते। द्रोणकलशनामके पात्रे विशुद्धरसः संस्थाप्यते। प्रत्यहं वारत्रयं सोमरसस्य निष्काशनं विहितं वर्तते, प्रातः मध्याह्ने सायं च। एतेषां त्रयाणां सवनानां नाम यथाक्रमं हि प्रातःसवनम्, माध्यन्दिनसवनं, तृतीयसवनं चेति। आहुतेः अवशिष्टः सोमरसः चमसेन पुरोहितगणाय यजमानाय च पानं कार्यते। माध्यन्दिनसवनात् पुरोहितगणाय दक्षिणा दीयते। गौः अश्वः गर्दभः छागः महिषः तिलं द्विदलं मांसं धान्यं यवः च दक्षिणात्वेन दीयन्ते। तृतीयसवनात् परम् अवभृथस्नानस्य अनुष्ठानं क्रियते। इदं च अनुष्ठानम् अवभृथ-इष्टिः इत्यभिधीयते। यजमानः अन्ये सर्वे पुरोहिताः च अवभृथस्नानाय जलाशयं गच्छन्ति। इयम् अवभृथ-इष्टिः एव अग्निष्टोमस्य अन्तिमम् अनुष्ठानम्। वरुणः अग्निः च अस्याः इष्टेः देवता। चतुर्णां प्रयाजानां द्वयोः अनुयाजयोः च अनुष्ठानं विहितम्। वरुणम् उद्दिश्य एकः पुरोडाशः अर्प्यते। अवभृथ-इष्टौ सर्वाः आहुतयः एव जले दीयन्ते, न तु अग्नौ। यजमानः अवगाहनरतानां पुरोहितानां शिरसि जलं सिञ्चति। दीक्षणीय-इष्टिकाले यजमानः तत्पत्नी च पञ्चसु दिनेषु परिधृतं वस्त्रम् अवभृथस्नानानन्तरं त्यक्त्वा उन्नेता इति नामकेन पुरोहितेन प्रदत्तस्य नववस्त्रस्य परिधानं कुरुतः। जलाशयाद् यज्ञस्थलं प्रति प्रत्यावर्तनसमये यजमानः उदयनीय इति नामकम् अन्तिमम् अनुष्ठानम् आचरति। उदयनीय-इष्टौ दुग्ध-मधु-दधि-शर्करा-प्रभृतीनां मिश्रणेन निर्मितं चरु आहुतिरूपेण दीयते।



## पाठगतप्रश्नाः

१६. अग्निष्टोमस्य अपरं नाम किम्।

१७. अग्निष्टोमे मुख्या आहुतिः का।

१८. कस्मिन् ब्राह्मणे अग्निष्टोमस्य विवरणं विस्तृततया वर्तते।

१९. देवतानां ब्राह्मणानां च राजा कः।

२०. याज्ञिकपरिभाषायां द्रुतघृतस्य नाम किम्।

२१. सोमयागस्य कृते कति दिवसाः अपेक्षिताः।

२२. प्रत्यहं कतिवारं सोमरसनिष्काशनस्य विधानं वर्तते।

२३. अग्निष्टोमस्य अन्तिमम् अनुष्ठानं किम्।



### ६.१.५) सत्रः

अस्माकं लौकिकसंस्कृतौ बहवः यागाः अस्माभिः परिलक्ष्यन्ते किञ्च पाल्यन्ते अपि। वस्तुतस्तु वैदिकानां कृते यागाः बहु पुण्यप्रदायकाः सन्ति। वयम् अत्र बहूनां यागानां विषये ज्ञातुं शक्नुमः। वयं ज्ञातुं शक्नुमः कः यागः कतिषु दिवसेषु समाप्यते, कथं वा तेषां यागानाम् अनुष्ठानं विधेयम् इत्यादि।

सत्रयागस्य प्रकृतिः हि गवामयननामकयज्ञः। गवामयनयागो हि सोमयागे अन्तर्गतः। अतः गवामयनस्य प्रकृतिः हि अग्निष्टोमः। सत्रगवामयनयोः मध्ये श्रेणीविन्यासः पर्यालोचना क्रियते। अतः उच्यते यत् - यज्ञयोः जातिदृष्ट्या अवलोक्यते चेत् गवामयनयागः सोमयागे अन्तर्गतः भवति परन्तु कालदृष्ट्या तयोः स्वस्वरूपवशादेव श्रेणीविन्यासः क्रियते। ये यागाः एकस्मिन्नेव दिने समाप्यन्ते तर्हि एकाहयागाः। ये यागाः एकाधिकदिवसीयाः किञ्च द्वादशदिवसेभ्यः न्युनदिवसीयाः ते अहीनयागाः अपेक्ष्यन्ते ते सत्रयागाः। द्वादशदिवसेभ्यः अधिकदिवसाः यस्मिन् यागे प्रयोजनं भवति तर्हि सत्रयागः। सामवेदस्य पञ्चविंशब्राह्मणे विविधसत्रयागस्य विधिः अनुष्ठानस्वरूपं च वर्णितम्। गवामयनयागस्य सम्पादनाय एकवत्सरः अपेक्ष्यते। अतः गवामयनयागः सत्रयागे अन्तर्गतः। सत्रयागः त्रिषु भागेषु विभज्यते - प्रथमार्धे १८० दिवसाः , द्वितीयार्धे १८० दिवसाः किञ्च तृतीयार्धे १८० दिवसाः अपेक्ष्यन्ते। सौकर्यार्थं गवामयनयागान्तर्गतानां यागानां अनुष्ठानकालादीनां च आवली नीचैः उपस्थाप्यते -

| | **यागस्य नाम** | **अनुष्ठानकालः – दिनसंख्या** |
|---|---|---|
| **प्रथमेषु षट्सु मासेषु** | अतिरात्रयागः | १ |
| | चतुर्विंशस्तोमयुक्त–उक्थ्य | १ |
| | चत्वारः अभिप्लवषडहः (४*६=२४)<br>एकः पृष्ठ्यषडहः (१*६=६)<br>२४+६=३० (पञ्चकृत्वः आहुतिः = ३०*५=१५० | १५० |
| | त्रयः अभिप्लवषडहः (३*६) | १८ |
| | एकः पृष्ठ्यषडहः (१*६) | ६ |
| | अभिजित् | १ |
| | त्रयः स्वरसामः | ३ |
| | **साकल्येन दिवसाः –** | **१८०** |
| | | |
| | विषुवदिवसः(एकविंशयागः) | १ |
| | | |



| | | |
|---|---|---|
| शेषेषु षट्सु मासेषु | त्रयः स्वरसामः | ३ |
| | विश्वजित् | १ |
| | एकः पृष्ठ्यषडहः | ६ |
| | त्रयः अभिप्लवषडहः (३*६) | १८ |
| | एकः पृष्ठ्यषडहः (१*६=६)<br>चत्वारः अभिप्लवषडहः (४*६=२४)<br>२४+६=३० (चतुःकृत्वः आहुतिः = ३०*४=१२० | १२० |
| | त्रयः अभिप्लवषडहः | १८ |
| | एकः गोष्टोमः एकः आयुष्टोमश्च | २ |
| | दशरात्रः | १० |
| | महाव्रतः | १ |
| | अतिरात्रः | १ |
| | **साकल्येन दिवसाः –** | १८० |
| | **महायोगः - १८०+१+१८०** | **३६१** |

अनया आवल्या स्पष्टमेव ज्ञायते यत् आद्यानां १८० दिवसानां किञ्च अन्तिमानां १८० दिवसानां अनुष्ठानेषु विपरीतानुक्रमस्य अनुसरणं क्रियते।

आद्यानां १८० दिवसानाम् अनुष्ठाने प्रथमदिवसे अतिरात्रः किञ्च अन्तिमदिवसे स्वरसामः विहितः परन्तु अन्तिमानां १८० दिवसानाम् अनुष्ठाने प्रथमदिवसे स्वरसामः किञ्च अन्तिमदिवसे अतिरात्रः विहितः। अतः विपरीतानुक्रमानुसरणवशात् द्वयोः दर्पणप्रतिविम्बेन तुलना क्रियते। उपर्युक्तायाम् आवल्यां प्रकारद्वयस्य षडहस्य उल्लेखो दृश्यते , अभिप्लवषडहः पृष्ठ्यषडहश्च । षडहयागः षड्षु दिवसेषु निष्पन्नयागः। अभिप्लवषडहस्य षड् दिवसाः –

प्रथमदिवसः- ज्योतिष्टोमः।

द्वितीयदिवसः- गोष्टोमः।

तृतीयदिवसः- आयुष्टोमः।

चतुर्थदिवसः- गोष्टोमः।

पञ्चमदिवसः- आयुष्टोमः।

षष्ठदिवसः- ज्योतिष्टोमः।

अभिप्लवषडहे प्रथमदिवसे अन्तिमदिवसे च ज्योतिष्टोमयागः विहितः। अतः उच्यते - "उभयतो ज्योतिरभिप्लवषडहः।" द्वयोः ज्योतिष्टोमयागयोः मध्यस्थाः दिवसाः उक्थ्यनाम्ना ज्ञायन्ते। परन्तु



पृष्ठ्यषडहस्य प्रथमदिवसे ज्योतिष्टोमयागसत्वेऽपि अन्तिमदिवसे उक्थ्ययागो विहितो भवति ,अस्मिन् दिने ज्योतिष्टोमयागो न भवति। गवामयनयज्ञस्य अनुष्ठानावली कालविभागश्च सम्यक्तया परिलक्ष्यते चेत् बुध्यते यत् सूर्यस्य वार्षिकगतिना अस्य सौसादृश्यम् अस्ति। समग्रयागः विभागद्वये विभक्तः। अपि च प्रतिभागस्य अनुष्ठानकाले मासषड्कं किञ्च प्रतिमासे त्रिंशद्दिवसस्य अनुष्ठानमपि विहितम्। द्वयोः भागयोः मध्यस्थः विषुवदिवसः। आदित्यस्य वार्षिकगतेः भागद्वये अपि विपरीतक्रमो दृष्टः। सूर्यस्य उत्तरायणेन दिवसस्य स्थितिकालवृद्धिः भवति , दक्षिणायनेन दिवसस्य स्थितिकालह्रासो भवति। अयं वृद्धिह्रासः समानानुपातेनैव भवति।

गवामयनयागः सोमयागस्य अन्तर्गतः; अतः सोमयागस्य प्रकृतिः अग्निष्टोमः। तस्मात् द्वयोः यागयोः समानसंख्यकपुरोहितानां समानाहुतिद्रव्याणां प्रयोजनं भवति। ३६० दिवसेभ्यः अधिकदिवसे निष्पाद्यानां सकलसत्रयागानां प्रकृतिः गवामयनयागः किञ्च ३६० दिवसेभ्यः न्यूवदिवसे निष्पाद्यानां सकलसत्रयागानां प्रकृतिः द्वादशाहनामकयागः।



## पाठगतप्रश्नाः

२४. सत्रयागस्य प्रकृतिः काः।

२५. गवामयनयागः कस्मिन् अन्तर्भवति।

२६. ये यागाः एकस्मिन्नेव दिने समाप्यन्ते तेषां नामानि कानि।

२७. यो यागः एकाधिकदिवसात्मकः किञ्च द्वादशदिवसेभ्यः न्यूनदिवसात्मकः तस्य नाम किम्।

२८. द्वादशदिवसेभ्यः अधिकदिवसाः यस्मिन् यागे अपेक्षिताः, तस्य यागस्य किं नाम।



## पाठसारः

अपरः एकः यागो हि गवामयनयागः। यद्धि सत्रयागस्य प्रकृतिः। अयं गवामयनयागः हि सोमयागे अन्तर्गतः। अस्मात् कारणात् गवामयनयागस्य प्रकृतिः हि अग्निष्टोमः। एकस्मिन्नेव दिने सम्पन्नयागः एकाहयागः इत्युच्यते। द्वादशदिनेषु सम्पन्नयागः अहीनयागः। ततोऽधिकदिनेषु सम्पन्नयागः सत्रयागः। गवामयनयागस्य अनुष्ठानावल्या कालविभागेन सह सूर्यस्य वार्षिकगतेः सादृश्यम् अस्ति। सोमयागस्य प्रकृतिः अग्निष्टोमः अतः उभयोः समानसंख्यकपुरोहितानां समानाहुतिद्रव्याणां प्रयोजनं भवति। ३६० दिवसेभ्यः अधिकदिवसे ये यागाः सम्पाद्यन्ते तेषां यागानां प्रकृतिः हि गवामयनयागः। किञ्च ३६० दिवसेभ्यः न्यूवदिवसे ये यागा निष्पाद्यन्ते तेषां प्रकृतिः हि द्वादशाहनामकयागः। एवमत्र संक्षेपेण सोम–सत्र–पशु–आदयः केचन यागाः विस्तरेण वर्णिताः सन्ति। एतद्विहाय सन्ति नैके यागाः। ते



विस्तरभयादत्र नोच्यन्ते। एतादृशाः केचन यागाः वैदिके काले आर्यैः अनुष्ठीयन्ते स्म, परन्तु अधुना कालग्रासात् प्रायः बहवः लुप्ताः जाताः। तथापि विप्रैः अधुनापि एते यागाः क्रियन्ते बहुत्र। अस्माभिः वैदिकी रीतिः ध्रुवमेव रक्षणीया वर्तते।



## पाठान्तप्रश्नाः

१. यागविषये विस्तरेण व्याख्यात।
२. अग्निष्टोमयागविषये संक्षेपेण आलोचयतु।
३. सोमयागे पञ्चसु देनेषु अनुष्ठितानानाम् अनुष्ठानानां संक्षेपेणं विविरणं करोतु।
४. सोमरसविषये संक्षिप्तां टिप्पणीं लिखतु।
५. सोमयागे पञ्चमदिवसे विहितस्य अनुष्ठानस्य विवरणं करोतु।
६. इष्टियागः कदा कदा अनुष्ठीयते।
७. तिस्रः आहुतयः केभ्यः प्रदीयते।
८. इष्टियागस्य अन्ते पुरोहिताः किं कुर्वन्ति।
९. इष्टियागः केषां कृते नित्यः केषां कृते काम्यः इति विचार्यताम्।
१०. इष्टियागस्य काम्यानुष्ठाने किं किं वैशिष्ट्यं वर्तते।
११. होमस्य दर्वीहोमः इत्यभिधा कथम्।
१२. होमयागे कस्मिन् काले आहुतिः प्रदीयते।
१३. होमयागस्य आहुतिप्रदानविषये कीदृशी विमतिः विद्यते।
१४. असुस्थे सति ब्राह्मणः यजमानः किं कुर्यात्।
१५. अग्निहोत्रविधौ अविवाहितैः विपत्नीकैश्च किं किं कार्यम्।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-1

१. दर्वीहोमः।
२. अग्निहोत्रम्।
३. ब्राह्मणानाम्।
४. सपत्नीकानाम्।
५. पुनर्विवाहम्।



**उत्तराणि-२**

६. दर्शपूर्णमासः।

७. सूर्येन्दुसङ्गमः।

८. होता, अध्वर्युः, अग्नीध्रः, ब्रह्मा चेति।

९. ब्रह्मा।

१०. ईडाभक्षणम्।

**उत्तराणि-३**

११. दैक्षः प्राजापत्यो वा।

१२. पशुः

१३. प्रजापतिः, सूर्यः अथवा इन्द्रः, अग्निश्च

१४. अध्वर्युः प्रतिप्रस्थाता होता मैत्रावरुणः अग्निः ब्रह्मा

१५. पलाशखदिरविल्वरोहितकानां चतुर्णां वृक्षाणां मध्ये कस्यापि एकस्य

**उत्तराणि-४**

१६. ज्योतिष्टोमः।

१७. सोमरसः।

१८. ऐतरेयब्राह्मणे।

१९. सोमः।

२०. आज्यम्।

२१. पञ्च।

२२. त्रिवारम्।

२३. अवभृथ-इष्टिः

**उत्तराणि-५**

२४. गवामयननामकयज्ञः।

२५. सोमयोगे।

२६. एकाहयागः।

२७. अहीनयागः।

२८. सत्रयागः।

---

॥इति षष्ठः पाठः॥

---

७

# वैदिकदेवता

## प्रस्तावना

ब्राह्मणैः वेदविधिम् अनुसृत्य यज्ञादिकं क्रियते, तेन च स्वर्गादिप्राप्तिः, मानवानां सुष्ठुतया जीवनं तथा प्राकृतिकदुर्योगादिभ्यः आत्मनः परेषां च रक्षणम्, इत्यादिरूपं फलं प्राप्यते। तच्च फलं देवानां सन्तुष्टेः परं देवेभ्य एव लभ्यते। अतः वेदोक्तस्य कर्मणः लक्ष्यं देवानां सन्तुष्टिविधानमेव। के देवाः इति विषये अस्मिन् पाठे विस्तारेण आलोचना विद्यते। देवानां स्थानभेदेन तथा कालभेदेन च भुवः, अन्तरीक्षस्य तथा द्युलोकस्य देवाः भवन्ति इत्यस्य विस्तरः अस्मिन् पाठे प्राप्यते। देवेषु को मूलः इति विषये यास्कः कात्यायनश्च स्वस्वमतानि प्रस्तुतवन्तौ। तदस्मिन् अध्याये आलोचयिष्यते। देवानां आकारः अस्ति न वा इति विषये पण्डितानां केचन अभिप्रायाः सन्ति, तदपि अत्र आलोच्यते। केचन मुख्याः देवाः सन्ति यथा इन्द्रः अग्निः, रुद्रः, वरुणः इत्यादयः। पाठान्ते च एषां देवानां स्वरूपविषये संक्षेपेण ज्ञातुं शक्नुवन्ति भवन्तः।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- देवतानाम् सामान्यपरिचयः ज्ञास्यति।
- देवतानां विभाजनम् अवगच्छेत्।
- देवताविषये यास्कमतम् कात्यायनमतम् च बुध्यात्।
- देवतानाम् आकारचिन्तनम् अवगमिष्यति।
- इन्द्रस्वरूपम् ज्ञास्यति।
- अग्निस्वरूपम् अवगमिष्यति।
- वरुणस्वरूपम् बुध्यात्।
- अश्विनस्वरूपं तथा रुद्रस्वरूपं ज्ञास्यति।



## ७.१) देवतानाम् सामान्यपरिचयः

### ७.१.१) देवतापदस्य निर्वचनम्

दिवादिगणीयात् दिव्-धातोः अच्प्रत्यये देवः इति रूपं सिध्यति। दीव्यति प्रकाशते इति देवः। दिव्-धातोः क्रीडाविजिगीषादयः बहवः अर्थाः सन्ति। अत्र द्युत्यर्थकः कान्त्यर्थो वा गृहीतः। देवशब्दात् तल्प्रत्यये देवता इति रूपम्। देवशब्दः देवताशब्दश्च उभौ पर्यायौ।

देवशब्दस्य निर्वचनप्रसङ्गे निरुक्तकारः यास्काचार्यः आह- "देवो दानाद् वा दीपनाद् वा द्योतनाद् वा भवति" इति। अर्थात् यः दानं करोति, यः द्योतते, यः द्योतयति च सः देवः इति। यज्ञादिषु वेदमन्त्रैः देवाः स्तूयन्ते। परं तैः देवैः यजमानस्य अभीष्टसिद्धिः भवति। एवं देवाः अभीष्टदातारः। मन्त्राणां देवः चैतन्यस्वरूपः। देवानां प्रकृतं स्वरूपं ब्रह्म एव। ब्रह्म च स्वयंप्रकाशः। तदेकमेव ब्रह्म भिन्नरूपेण प्रकाशते। तथाहि "एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः" इति। किञ्च तस्य प्रकाशेनैव सर्वमिदं प्रकाशते। अतः द्योतनात् देवः इति सिध्यति।

दृश्यन्ते वेदे बहूनां देवानां नामानि। वैदिकसाहित्ये प्राधान्येन ग्रन्थद्वये वेदस्य देवतातत्त्वं प्रतिपादितम्। ग्रन्थद्वयं हि शौनकेन रचितः बृहद्देवता इति ग्रन्थः, यास्कर्षिविरचितस्य निरुक्तस्य दैवतकाण्डं च। वेदस्य प्रत्येकं मन्त्रः कमपि देवम् उद्दिश्य एव प्रयुक्तः। अतः वेदस्य सुष्ठु ज्ञानाय देवताज्ञानम् आवश्यकम्। बृहद्देवतायामुक्तम्-

**वेदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः।**

**दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति**॥ इति॥

अर्थात् वेदस्य प्रतिमन्त्रं देवताज्ञानं सयत्नम् अर्जनीयम्, यतो हि देवताज्ञानं जायते चेदेव मन्त्रस्य अर्थो हृद्गतो भवति। वेदे बहूनां देवानां तथा बह्वीनां देवीनां नामानि दृश्यन्ते। केचन देवाः तावत् - अग्निः, वायुः, इन्द्रः, सूर्यः, विष्णुः, सोमः, वरुणः, पूषा, मरुत्, रुद्रः, सविता, अर्यमा, अपान्नपात्, अश्विनः, आदित्यः, द्यौः, ऋभुः, यमः प्रभृतयः। काश्चन देव्यः तावत् - वाक्, उषा, अदितिः, रात्रिः, पृथिवी, सरस्वती, श्रीः, धिषणा प्रभृतयः। केषाञ्चन देवानां नामानि द्वन्द्वसमासेन सर्वदा कीर्तितानि यथा - मित्रावरुणौ, इन्द्राग्नी, सूर्याचन्द्रमसौ, द्यावापृथिव्यौ, अग्नीषोमौ इत्यादयः। अश्विनदेवता सदा युगलरूपेण तथा यमजरूपेण कल्पिता, अतः अश्विनौ इति द्विवचनप्रयोगः दृश्यते। प्राचीनरोमस्य क्यास्टर् (Castor) तथा पोलुक्स् (Pollux) इत्येतौ यथा युगलौ तद्वद् अश्विनदेवः अपि युगलरूपेण स्वीकृतः। विश्वेदेवाः इति सर्वदा बहुवचनान्ततया व्यवह्रियते, यतो हि अयम् गोष्ठीवाचकः बहुदेवतावाचकः च शब्दः।





## पाठगतप्रश्नाः

१. बृहद्देवता-ग्रन्थः केन रचितः।

२. केषाञ्चिद्देवानां नामानि लिखत।

३. कासाञ्चन देवीनां नामानि लेख्यानि।

४. द्वन्द्वसमासेन के देवाः कीर्तिताः।

५. विश्वेदेवाः इत्यत्र कथं बहुवचनम्।

## ७.२) देवतानां विभाजनम्

निरुक्तकारस्य यास्कस्य मतेन वेदस्य देवाः स्थानभेदेन कालभेदेन च त्रिषु प्रकारेषु विभज्यन्ते। यथा भूलोकस्य देवाः, अन्तरिक्षलोकस्य देवाः द्युलोकस्य देवाश्च। तत्र अग्निः, आपः, पृथिवी, सोमः भूलोकस्य देवाः। इन्द्रः, मरुत्, अपान्नपात् (विद्युत्), पर्जन्यः प्रभृतयः अन्तरिक्षस्य देवाः। सूर्यः मित्रः, वरुणः, द्युः, पूषा, सविता, आदित्यः, अश्विनीकुमारौ, ऊषा, रात्रिः इत्यादयः देवाः द्युलोकस्य च। तेषु त्रिषु प्रतिलोकम् एकः देवः प्रधानः अन्ये च तस्यैव भिन्नाः अभिव्यक्तयः। भूलोकस्य देवेषु **अग्निः,** अन्तरिक्षस्य **इन्द्रः,** द्युलोकस्य च **सूर्यः** इति एते मुख्याः देवाः। यास्केनापि उक्तम्- "तिस्र एव देवता इति नैरुक्ता अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः सूर्यो द्युस्थानः" इति। एतेषाम् त्रयाणां देवानां भिन्नानि कर्माणि, भिन्नानि च विशेषणानि इतरेषां देवानां नामकरणे निमित्तानि। अग्नेः विशेषणभेदात् कार्यभेदाद्वा वैश्वानरः, जातवेदाः, नाराशंसः, सुसमिद्धः, तदनुपात् इत्यादीनि नामानि, एवञ्च वायोः मातरिश्वा, इन्द्रः, रुद्रः, अपान्नपात् प्रभृतीनाम् देवानां नामानि तथा सूर्यात् आदित्यः, विष्णुः, मित्रः, वरुणः, पूषा, भगः, ऊषा, अश्विनीकुमारौ, सविता इत्येतेषां नामानि जातानि। यास्कस्य मतमेतत् न कपोलकल्पितम्, अपि तु ऋग्वेदे मतमेतत् समर्थितम्, " सूर्यो नो दिवस्पातु वातोऽन्तरिक्षादग्निर्नः पार्थिवेभ्यः" (१०.१५१.१) इति। ऋग्वेदे सर्वेषां देवानां नामानि नोल्लिखितानि, केवलं त्रयाणां नामोल्लेखात् तेषां मुख्यत्वं प्रतिपादितम्। देवानां निवासस्थलम् पृथिवी, अन्तरिक्षं द्युलोकश्च यथाक्रमं भूः, भुवः, स्वः चेति व्याहृतित्रयेण कीर्तितम्। वैदिके ग्रन्थे देवानां संख्या त्रयस्त्रिंशदिति स्वीकृतम्। तत्र एकादश भूलोके, एकादश अन्तरिक्षे एकादश च द्युलोके तिष्ठन्ति। शतपथब्राह्मणेऽपि त्रयस्त्रिंशद्देवाः इति स्वीकृतम्। किन्तु ऋक्संहितायां ३.१.९ संख्यके तथा १०.५२.६ संख्यके मन्त्रे ३३३९ देवाः सन्ति इत्युच्यते। पौराणिके काले एषा संख्या त्रयस्त्रिंशत्कोटिपरिमिता सञ्जाता। मुख्येषु अग्निवायुसूर्येषु त्रिषु अग्निः निकटतमः (अग्निर्वै देवानामवमः), तथा सूर्यस्य दूरत्वम् अधिकं (सूर्यो देवानां परमः)। अन्येषां देवानां च अनयोरेव अन्तर्भावः। सूक्ष्मविचारेण ज्ञायते यत् ते त्रयोऽपि देवाः परमात्मन एव तिस्रः अभिव्यक्तयः। देवताविचारकाले निरुक्ते यास्केन उक्तम्-— देवतायाः एक आत्मा बहुधा स्तूयते (निरुक्ते ७-४)'। यथा एकस्यैव देहस्य भिन्नानि अङ्गानि तथा एकस्यैव अङ्गिनः आत्मनः ते भिन्नाः देवाः



अङ्गस्वरूपाः - —एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति'। वेदस्य संहितायामपि देवानां स्वरूपम् स्पष्टम् उद्घोषितम्-

एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः। (ऋ. १.१६४.६४)

एकं सन्तं बहुधा कल्पयन्ति। (ऋ. १०.११४.५)

ऋग्वेदस्य तृतीयमण्डले पञ्चपञ्चाशत्तमस्य सूक्तस्य प्रत्येकं मन्त्राणामन्तिमे पादे -'महद्देवानामसुरस्त्वमेकम्' इति श्रूयते। असून् प्राणान् राति ददाति इति असुरः, प्राणान् ददाति स परमात्मा एव। ऋग्वेदस्य अपरस्मिन् मन्त्रे उच्यते-'एकं वै इदं विभु बभूव सर्वम्' इति। परमात्मनः एव देवानाम् उत्पत्तिरिति स्पष्टया वाचा शुक्लयजुर्वेदे उच्यते-'एतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः' इति। एवञ्च सर्वमेतत् पर्यालोच्य देवाः एकस्यैव परमात्मनः अंशा इति ज्ञायते।

वेदे वर्णिताः देवाः कस्यापि पार्थिववस्तुनः पार्थिवप्राकृतिकपदार्थस्य वा प्रतीकम्। प्रत्येकम् पार्थिवपदार्थस्य चैतन्यसत्ता अधिष्ठाता वा एकैकः देवो भवति। यथा दृश्यस्य पार्थिवस्य अग्नेः चैतन्यमयी देवता अग्निः, चक्षुर्ग्राह्यस्य सूर्यस्य अधिष्ठाता सूर्यदेवः, आदित्यदेवः, सविता वा। एवं पार्थिवपवनस्य वायुः, झञ्झावातादीनां मरुद्देवः, विद्युतः अपान्नपात्, मेघस्य पर्जन्यः। सूर्यस्य गगने अवस्थानभेदेन तथा पृथिव्याः आवर्तनगतेः स्थानभेदेन कालभेदेन च सूर्यस्य मित्र-वरुण-सवितृ-भग-पूषा-आदित्यादिनामानि भवन्ति। वज्रस्य देवः रुद्रः, अस्य विषये वेदे भूयसी वर्णना प्राप्यते। वज्रात् जीवाः सर्वे बिभ्यति, शिरसि वज्राघाते मृत्युरेव भवति। अत एव रुद्रस्य मन्त्रेषु सदैव त्रासस्य संहाकस्य च भीषणम् वर्णनम् लभ्यते। रुद्रस्य शिवमूर्तिः ऋग्वेदे नास्त्येव। शुक्लयजुर्वेदे रुद्राष्टाध्याय्यां रुद्रस्य भीषणरूपं तथा कल्याणरूपम् उभयमपि वर्णितम् 'घोरञ्च मे घोरतरञ्च मे' इति भीषणत्वम् तथा 'शिवाय च शिवतराय च' इति कल्याणत्वं च विघोषितम्।



## पाठगतप्रश्नाः

६. भूलोकस्य देवाः के।

७. अन्तरिक्षस्य देवाः के।

८. द्युलोकस्य देवाः के।

९. असुरशब्दस्य कः अर्थः।

१०. देवानां निवासस्थानविषये निरुक्ते किम् उक्तम्।

११. वायोः के देवाः सृष्टाः।

१२. अग्नेः निकटत्वख्यापिका श्रुतिः का।

१३. वज्रस्य देवः कः।

१४. रुद्रस्य कल्याणत्वं कया श्रुत्या द्योत्यते।

## ७.३) देवताविषये यास्कमतं कात्यायनमतञ्च

निरुक्तकारस्य यास्कस्य मतेन सर्वेषां देवानां मूलम् **अग्निः** एव। तन्मतं समर्थयितुम् ब्राह्मणग्रन्थस्थं मन्त्रमाह- 'अग्निः सर्वा देवताः' इति। पार्थिवाग्निरेव अन्तरिक्षे इन्द्ररूपेण विद्युद्रूपेण तथा द्युलोके सूर्यरूपेण प्रकटितः। द्युलोकस्य सर्वे देवाः सुर्यस्य तथा अन्तरिक्षस्य सर्वे इन्द्रस्य नानाप्रकाशस्वरूपाः। सूर्येन्द्रौ च अग्नेः रूपभेदमात्रम्। किञ्च त्रिलोकस्य सर्वाः देवताः अग्नेः नानाभिव्यक्तिमात्रम् इति स्वीकृत्य अग्निः एक एव देवः इति निरूपयता यास्केन ऋग्वेदीयमन्त्रः उद्धृतः- 'तमू अकृण्वन् त्रेधा भुवे' इति (१०.८८.१०)। अयमग्निः त्रेधा अर्थात् पृथिवी अन्तरिक्षम् द्युलोकः इति स्थानत्रयभेदेन भिन्नः। बृहद्देवताग्रन्थे दृश्यते-

**इहाग्निभूतस्तु ऋषिभिर्लोके स्तुतिभिरीडितः।**
**जातवेदा स्तुतो मध्ये स्तुतो वैश्वानरो दिवि॥ इति॥**

कात्यायनः मतमिदं न समर्थितवान्। सः स्वकृतौ 'सर्वानुक्रमणी'इति ग्रन्थे वैदिकदेवानां मूलम् **सूर्यः** आदित्यो वेत्याह। सर्वेषां देवानाम् उत्पत्तेः बीजं सूर्यस्य लक्षणे वर्णने च प्राप्यते। निःसन्दिग्धतया तेन स्पष्टम् उक्तम्- 'एक एव महानात्मा वेदे स्तूयते, स सूर्य इति व्याचक्षते' इति, तथा एकैव देवता स्तूयते आदित्य इति' इति च। आदित्यस्य कार्यं गुणं वा आधारीकृत्य देवानां नामानि जातानि। तथाहि दिवसे आदित्यस्य नाम सूर्यः, रात्रौ सः अदृश्योऽपि राजते, तदा स वरुणः। रात्रेः समाप्तौ स्वल्पान्धकारे अयं सवितेति। अन्धकारे नष्टे अयम् अश्विनः। सूर्योदयात् प्राक् पूर्वा दिक् रक्तवर्णयुता भवति, तदा अयम् ऊषेति। उदितमात्रमयं भगः। मध्याह्ने गगनमण्डलस्य मध्यभागे यदा राजते तदा अयं विष्णुरिति। एवमेव द्वादश आदित्याः भवन्ति। ऐतरेयब्राह्मणे आदित्यस्य अस्तगमनं व्याख्यातम्–'आदित्यो वा अस्तं गच्छन् अग्नावनुप्रविशति' इति।

यास्ककात्यायनयोः मतस्य समन्वयः प्रदर्श्यते अत्र। यास्कस्य अग्नेः तथा कात्यायनस्य सूर्यस्य सकलदेवतात्वं परस्परविरुद्धं सदपि यास्केन तत्समन्वयः प्रदर्शितः। देवताविचारकाले तेनोक्तं यत् मनुष्येषु यथा पितुः एव पुत्रस्य उत्पत्तिः, न तथा देवेषु। यतो हि देवः इतरेतरजन्मा तथा इतरेतरप्रकृतिः वा भवति, अर्थात् मिथः परस्परस्मात् जातः। श्रुतौ अपि आम्नातम्–'अग्नेर्वा आदित्यो जायते' इति। अग्नेः यथा सूर्यस्य जन्म तथा सूर्यादपि आदित्यस्येति भावः। पदार्थविज्ञानदृष्ट्या अपि यास्केन एतत् प्रमाणितम्– सूर्यरश्मिः काचं मणिं वा भित्त्वा शुष्कतृणस्य उपरि पतति चेत् अग्निः उत्पद्यते। तत्र सूर्यः अग्नेः जनकः। यथा मृन्निर्मितं घटशरावस्थाल्यादिकं परस्परं भिन्नं परन्तु मृदः दृष्ट्या सर्वम् एकमेव तथा देवस्य दृष्ट्या सर्वे देवाः भिन्नाः परन्तु एकत्वेन सर्वे परमात्मस्वरूपा एव।



### पाठगतप्रश्नाः

१५. तमू अकृण्व त्रेधा भुवे इत्यनेन किं ज्ञायते।



१६. बृहद्देवतायाम् अग्नेः निवासत्रयसूचकः श्लोकः कः।

१७. अग्नेर्वा आदित्यो जायते इत्यनेन किं ज्ञायते।

## ७.४) देवतानाम् आकारचिन्तनम्

देवाः साकाराः निराकाराः वा, शरीरिणः अशरीरिणः वा इति विषये नानादर्शनेषु नानानिरुक्तकारेषु नानामतानि परिलक्ष्यन्ते। वैदिके काले एव इदं मतपार्थक्यमासीत्। यास्कः आलोचनया साकारनिराकारयोः समन्वयम् प्रदर्शितवान्। साकारः शरीरी वा इत्यर्थे पुरुषविधशब्दं, निराकारः अशरीरी वा इत्यर्थे अपुरुषविधशब्दं च प्रयुक्तवान् यास्कः। तत्र **देवः पुरुषविधः साकारः** इति विषये युक्तयः आलोच्यन्ते-

१) देवानां शरीरं पुरुषशरीरमिव न भवति चेत् कर्मादि अपि न भवेत्। तदा तद्विषये स्तुतिरपि उन्मादप्रलापवद् भवेत्। मन्त्राः च निरर्थकाः भवेयुः। तथा च ऋग्वेदे सन्ति बहूनि संवादसूक्तानि यथा सरमापणिसंवादः, ऊर्वशीपुरुरवासंवादः, यमयमीसंवादः इत्यादीनि। सूर्यसूक्ते सूर्यायाः विवाहे बहूनां देवानाम् आह्वानं दृश्यते। एवञ्च देवानां शरीरं चैतन्यं च न भवति चेत् आलापः, विवाहः, प्रणयकथा वा कथं स्यात्।

२) वेदमन्त्रेषु मनुष्याणाम् इव देवानाम् अपि पाणिपादं नयनकर्णौ वा इत्यादि सम्यक् वर्णितमस्ति। यथा शुक्लयजुर्वेदीये पुरुषसूक्ते वेदपुरुषस्य महती वर्णना वर्तते।

३) वेदे देवानां अश्वः, रथः, वज्रः, गृहम्, पत्नी, दुर्गः इत्येतेषामपि वर्णना प्रमापयति यत् मनुष्याः इव देवाः अपि शरीरिण आसन्। इन्द्रसूर्ययोः अश्वस्य, त्वष्टुः वज्रनिर्माणस्य, इन्द्रस्य वज्रप्रयोगस्य, अग्नीन्द्रसवितृदेवानां रथस्य च कथाः वेदे भूयो भूयः प्राप्यन्ते। अग्नीन्द्ररुद्राणां यथाक्रमं अग्नायी-इन्द्राणी-रुद्राणीप्रभृतीनां स्त्रीणामपि वर्णना प्राप्यते।

४) मनुष्या यथा कर्मादिकं कुर्वन्ति, वेदे देवानामपि कर्मादिकं वर्णितम्। यथा इन्द्रः सोमरसं पिबति, युद्धं करोति, वृत्रं हन्ति, अश्वं चालयति। अग्निः यज्ञस्य हवींषि भुङ्क्ते, मरुतः वंशीं नादयन्ति, रुद्रं भीषणं गर्जति, विष्णुः विशालाभ्यां नेत्राभ्यां समग्रं जगत् निरीक्षते इत्येवं कथाः वेदे दृश्यन्ते।

एवञ्च केचन अनेन युक्तिचतुष्टयेन देवानां साकारत्वं प्रतिपादयितुं शक्यते, अन्ये तु एताः युक्तीः खण्डयित्वा देवानां निराकारत्वं प्रमापयितुं प्रायतन्त। तेषां च युक्तयः एवं-

१) मनुष्यशरीराणि प्रत्यक्षं दृश्यन्ते, अग्निवायुसूर्यादीनां शरीरं प्रत्यक्षप्रमाणेन न लभ्यते, तेन तेषां साकारत्वं न स्वीकारयोग्यम्।

२) स्तुतिः कृता तस्मादेव देवानां शरीरं वर्तते इति कारणम् अयुक्तम्। यतो हि वेदे अचेतनानाम् अपि स्तुतिर्विहिता। यथा अक्षक्रीडा, ओषधिवृक्षः, प्रस्तरः, उलूखमूषलः इत्यादीनां वर्णना प्राप्यते।



३) देवाः कर्म कुर्वन्ति इत्यतः ते पुरुषविधः इति न युक्त्या युज्यते यतो हि अचेतनाः अपि कर्म कुर्वन्ति इति वेदे प्राप्यते। यथा सोमरसस्य निष्कासनार्थं ये प्रस्तरखण्डाः व्यवहृताः तानुद्दिश्य उच्यते-'अभिक्रन्दति हरितेभिरासभिः'इति। अन्यस्मिन्नपि एकत्र उच्यते–'होतुश्चित् पूर्वे हविरद्यमाशते'इत्यत्र प्रस्तरखण्डाः होतुः प्राक् एव हविः भुङ्क्ते इत्युच्यते।

४) पुरुषभोग्यानि द्रव्याणि एव देवानां साकारत्वं प्रमापयितुं न शक्नुवन्ति, यतो हि वेदे अपुरुषविधे अशरीरिणि अपि पदार्थे भोग्यद्रव्याणां प्रयोगः दृश्यते, यथा 'सुखं रथं युयुजे सिन्धुरश्विन्'इत्यत्र नद्या रथयोजनायाः कथा उक्ता।

जैमिनेः मतेन तु देवानां पृथक्तया रूपादिकं नास्त्येव। मन्त्रमयी देवता। मन्त्रं व्यतिरिच्य नास्ति देवानां पृथक् सत्ता। यज्ञादिक्रियासु यदा मन्त्राः उच्चार्यन्ते तदा मन्त्ररूपेण देवानामाविर्भावो भवति। मतमेतत् समर्थयन् युक्तिमपि ब्रूते यद् देवानां पृथक्तया शरीरं भवति चेत् एकस्मिन् क्षणे एव भिन्नेषु यज्ञेषु यौगपद्येन सकलयज्ञे उपस्थितिः न सम्भवति। अतः मन्त्रमयित्वं स्वीकार्यम्। तेन मन्त्रोच्चारणकाले एव तेषाम् आविर्भावः इति गम्यते। महाभाष्यकारोऽपि अत एव आह–'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतः'इति। वेदान्तदर्शने वेदव्यासः पूर्वमीमांसास्थं जैमिनेः मतमेतत् न समर्थितवान्। शङ्कराचार्यः अपि ब्रह्मसूत्रभाष्ये वेदव्यासं समर्थयति।



## पाठगतप्रश्नाः

१८. साकारशब्दस्य पर्यायद्वयं लेख्यम्।
१९. केषाञ्चन संवादसूक्तानां नामानि लिखत।
२०. अचेतनानां स्तुतिः विहिता इत्यत्र किं मानम्।
२१. आकारत्वप्रश्ने जैमिनेः किं मतम्।

## ७.५) इन्द्रस्वरूपम्

इदि-धातोः निष्पन्नः इन्द्रशब्दः परमेश्वरवाचकः। इन्द्रः सर्वज्ञः, सर्वशक्तिमान्, शासकः, स्थावरजङ्गमयोः तथा चेतनाचेतनपदार्थयोः नियन्त्रकः। वेदस्य देवेषु इन्द्रस्य स्थानं महत् वर्तते। गुरुत्वे महिमनि शौर्ये वीर्ये सूक्तसंख्यायां च इन्द्रः अद्वितीयः। ऋग्वेदे प्रायः द्विशताधिकैः सूक्तैः इन्द्रस्याह्वानं विहितम्। तस्य रूपवर्णना अपि ऋषिभिः कृता। स ओष्ठाधरेण चारुः, नासिकया उन्नतः, वर्णेन उज्ज्वलः च। वैदिककाले आर्याणां शरीराकृतिः कथमासीत् इति विषये इन्द्रस्य रूपवर्णनामेव दृष्ट्वा सिद्धान्तमतं पोषयन्ति विद्वांसः। कपिशवर्णयुक्ताः अश्वाः तद्रथं नयन्ति। त्वष्टा एकसहस्रं सुवर्णान् वज्रान् निर्मीय तस्मै समर्पितवान्। तेन वज्रराशिना स असुरान् अनाशयत्।



सम्वर-अहि-वृत्र-अर्वुद-विश्वरूपादीन् असुरान् इन्द्रः नाशितवान्। वृत्रः जलं रुद्धवान्, अतः इन्द्रः तं नाशयित्वा धरायां जलं पातितवान्। इन्द्रः स्थले अश्वेन तथा नद्यां नावा याति स्म। तस्य शत्रुभिः अजेयेषु नवनवत्यां दुर्गेषु केचन लौहैः, केचन वा प्रस्तरैः निर्मिताः। देवानाम् अधिपतित्वेन वर्णितः अयम्। इन्द्रः सोमं सानन्दं पिबतीति सर्वेषु एव सूक्तेषु कीर्तितम्। तस्याः पत्नी इन्द्राणी शची वा। सा च नानावर्णयुतम् उष्णीषं परिधत्ते स्म। इद्रस्य अपरम् एकम् नाम शतक्रतुः इति। क्रतुशब्दस्य यज्ञः कर्म वा अर्थः। शतक्रतुः इत्यस्य अनन्तकर्मकर्ता इत्यर्थः। इन्द्रः युद्धजयः, असुरवधः, दस्यूनां पराभवः, जलनिष्कासनं इत्यादीनि कर्माणि करोति स्म। बलवीर्यस्य सर्वं कर्म इन्द्रस्य एव। उच्यते च 'या च का च बलकृतिः इन्द्रकर्मैव तत्' इति। वृत्रस्य हन्ता सः, अतः वृत्रघ्नः इति नाम। उपासकान् प्रति सः दयालुः, तेभ्यः महद्धनं ददाति। अतः मघवा इति नाम।

इन्द्रस्य सूक्तानि सर्वाणि त्रिष्टुभि एव ग्रथितानि। त्रिष्टुप्छन्दः, अन्तरिक्षलोकः, माध्यन्दिनसोमसवनम्, ग्रीष्मर्तुः, सोमपानम्, वीरत्वपूर्णं कर्म, असुरवधः इत्येते विषयाः इन्द्रेण साकं नित्यं सम्बद्धाः। इन्द्रस्य असुरवधः ऐतिहासिकवृत्तान्तः उत प्राकृतिकविघ्नचिह्नं इति विषये विद्वत्सभायां नानामतानि विराजन्ते। केचन इन्द्रस्य असुरवधः इति आर्याणाम् अनार्यवधस्य प्रतीकम् इत्याहुः, केचन वा सुर्येण असुरनाशः कल्प्यते। अन्ये केचन असुरेण सह मेघस्य तथा इन्द्रेण सार्धं वज्र–विद्युत्–वायूनां समावेशः कल्पितः।



## पाठगतप्रश्नाः

२२. इन्द्रशब्दः कस्माद् धातोः निष्पन्नः।

२३. इन्द्रस्य अश्वाः किंवर्णीयाः।

२४. इन्द्रस्य पत्नी का।

२५. इन्द्रस्य शतक्रतुरिति नामकरणं कथम्।

२६. इन्द्रस्य स्तुतिपरकाणि सूक्तानि केन छन्दसा रचितानि।

२७. इन्द्रस्य वृत्रघ्नः इति नामकरणं कथम्।

२८. इन्द्रः कथं मघवा इत्युच्यते।

## ७.६) अग्निस्वरूपम्

इन्द्रात् परमेव गुरुत्वस्य दृष्ट्या अग्नेः नाम आयाति। ऋग्वेदे द्विशतपरिमितैः सूक्तैः अग्नेः आवाहनं स्तुतिश्च विहिता। तस्य आननं पृष्ठदेशश्च घृतवर्णयुतः। केशराशिः स्फुलिङ्गवर्णयुक्तः। श्मश्रुः पिङ्गलवर्णयुक्तः। दन्तपङ्क्तिः सुवर्णभास्वरा। देवेषु अयं निकटतमः (अग्निर्वै देवानामवमः)। देवाः साक्षात्



हविः न भुङ्क्ते, अग्निना एव देवाः हवींषि आस्वादयन्ति। अत एव अग्निमुखा देवाः इत्युच्यन्ते (अग्निर्वै मुखं देवानाम्)। वैदिकाः आर्याः गृहेषु गार्हपत्याग्निं रक्षन्ति स्म। अग्नेः रथः हिरण्यवर्णीयः उज्ज्वलश्च। कपिशवर्णीयाः अश्वाः तद्रथं नयन्ति स्म। देवानामयं प्रतिनिधिः, पुरोवर्ती भूत्वा देवान् आह्वयति, अतः सः पुरोहितः। होता अध्वर्युः पुरोहितः ब्रह्मा चेति चतस्रः संज्ञाः अग्निमुद्दिश्य प्रयुज्यन्ते। द्युलोक-भूलोक-अन्तरिक्षलोकेषु सर्वत्रैव अस्य गमनम्। ऋग्वेदे आदिमसूक्तमेव अग्निसूक्तम् इत्यतः अग्नेः प्राधान्यम् स्पष्टम् ज्ञायते। अरणिद्वयघर्षणेन अग्निरुत्पद्यते। एतदेव अग्निमन्थनम् कथ्यते। अत एव द्वे अरणी पार्थिवाग्नेः पितरौ उच्येते। अग्नेः सर्वाणि सूक्तानि गायत्रीछन्दोबद्धानि।



## पाठगतप्रश्नाः

२९. अग्निमुखाः देवाः इति कथमुच्यते।

३०. अग्निः पुरोहितः इति कथमुच्यते।

३१. अग्निमुद्दिश्य काः संज्ञाः प्रयुज्यन्ते।

३२. ऋग्वेदस्य आदिमं सूक्तं किम्।

३३. अग्नेः मन्त्राः कस्मिन् छन्दसि वर्तन्ते।

## ७.७) वरुणस्वरूपम्

ऋग्वेदे द्वादशसु सूक्तेषु वरुणस्य स्तुतिः विद्यते। ऋग्वेदस्य मुख्येषु देवेषु अयमेकः। मित्रस्य सहचरः अयम्, अतः समासप्रकरणे मित्रावरुणौ इत्येवम् प्रयोगः दृश्यते। दिवसीयसूर्यस्य नाम मित्रः इति। रात्रीकालीनसूर्यस्य नाम वरुणः इति। निरुक्ते वृ-धातोः वरुणशब्दः निष्पन्नः। आवृणोति सतः पदार्थान् इति वरुणः। अत एव सूर्यः रात्रौ अपि तिष्ठतीति आर्याः जानन्ति स्म इति ज्ञायते, तथा च ऐतरेय-कौषीतकि-पञ्चविंशब्राह्मणेषु अयं विषयः सुस्पष्टम् उल्लिखितः। वरुणः नैतिकजगतः नियमस्य रक्षकः। तस्यैव नियन्त्रणेन सूर्य-चन्द्र-नक्षत्रादीनि स्वीयकक्षे एव आवर्तन्ते। अत एव धृतव्रतः, धर्मपतिः चेति तस्य संज्ञे। विहगाः ऊर्ध्वं यत्र यान्ति, दिक्चक्रवाले पोताः यत्र यान्ति, सर्वं स पश्यति। रात्रौ चौर्य-व्यभिचारादिपापानि तस्य परोक्षं न भवन्ति। अत एव वरुणे तुष्टे पापानि नश्यन्ति। अत एव तं सम्राट्, चरो वेति ब्रुवन्ति आर्याः।



## पाठगतप्रश्नाः

३४. वरुणशब्दः कस्माद् धातोः निष्पन्नः।

३५. सूर्यस्य दिवसे रात्रौ च किं नामद्वयम्।



३६. सूर्यचन्द्रादीनां कक्षे आवर्तनं केन नियन्त्र्यते।

३७. वरुणः चरः इति कथमुच्यते।

## ७.८) रुद्रस्वरूपम्

ऋग्वेदे रुद्रदेवस्य स्थानमाहात्म्यम् इन्द्र-अग्नि-वरुणादिनां देवानाम् अपेक्षया बहु न्यूनम् अस्ति। किन्तु यजुर्वेदे अथर्ववेदे च रुद्रदेवस्य स्थानम् अतीव महत्त्वपूर्णम् अस्ति। यजुर्वेदे एकः सम्पूर्णः अध्यायः रुद्रदेवसम्बन्धी। स च अध्यायः रुद्राध्यायः इति कथ्यते। जन्मनः परम् अयं देवः रुदितवान् इति रुद्रस्य रुद्रत्वे कारणम्। तथाहि आम्नातं- "स जात एवारोदीत् तद्रुद्रस्य रुद्रत्वम्" इति।

यजुर्वेदीयरुद्राध्यायस्य अनुसारं रुद्रः एकः बलवान् सुसज्जितः योद्धा। रुद्रस्य हस्ते पिनाकः, सुवर्णनिर्मितं धनुः बाणश्च सन्ति। तस्य धनुः सहस्रमपि जनान् हन्तुं समर्थम्। किञ्च तस्य हस्ते अस्ति कृपाणः। एतेन समं वज्रायुधमपि तस्य हस्ते सर्वदैव सुशोभते। शरीरस्य रक्षणाय तेन शिरसि शिरस्त्राणं संस्थापितं चर्मवस्त्रं च परिहितम्। रुद्रदेवस्य धनुः सर्वदैव बाणसहितं तिष्ठति। तस्य आयुधानि एतादृशानि भयङ्कराणि सन्ति यत् ऋषयः अपि अस्मात् स्वप्राणान् पुत्रपौत्रान् गाः अश्वान् प्राणिनां च रक्षयितुं सर्वदैव प्रार्थयन्ते। तथाहि आम्नातं यजुर्वेदे- "मा न स्तोके तनये मा न आयुषि मा न गोषु मा नो अश्वेषु रीरिषः"।

ऋग्वेदे रुद्रदेवः बलशालित्वेन स्तुतः। अयं स्वर्गस्य रक्तवराहः उच्यते। सः मरुतां पिता। रुद्रस्य रूपसौन्दर्यमपि बहुत्र प्राप्यते। तथाहि तस्य बाहू बलिष्ठौ, देहः आदित्यवत् भास्वरः, सुवर्णनिर्मितभूषणेन भूषितः तस्य देहः, कनकनिभं जटाकलापम्। अस्य त्रीणि अम्बकानि अर्थात् लोचनानि सन्ति। एवम् अम्बकत्रयस्य विद्यमानत्वात् अस्य नाम त्र्यम्बकः इति। जटावत्त्वात् कपर्दी इत्यप्युच्यते। "इमा रुद्राय तवसे कपर्दिने" इति श्रुतिः। अनेकरूपधारणत्वात् रुद्रः पुरुरूपः इति कथ्यते।

रुद्रदेवस्य संहारकरूपं यथा प्राप्यते तथैव तस्य शिवमूर्तिः अपि बहुत्र लभ्यते। स हि भिषजां श्रेष्ठः भिषक्। "भिषक्तमं त्वा भिषजां शृणोमि" इति श्रुतिः। ऋग्वेदेऽपि आम्नातं "शतं हिमा अशीय भेषजेभिः" इति। अर्थात् त्वया प्रदत्तेन औषधेन अहं यथा शतं वर्षाणि जीवेयम् इति। वेदेषु रुद्रः यथा घोर-घोरतरः इत्युक्तः तथैव शिव-शिवतरः इत्यप्युक्तः।



### पाठगतप्रश्नाः-

३८. रुद्रस्य रुद्रत्वे किं कारणम्।

३९. कथं रुद्रः त्र्यम्बकः इत्युच्यते।

४०. कस्य नाम कपर्दी।



४१. रुद्रस्य भिषक्त्वप्रमाणे श्रुतिः का।

४२. रुद्राध्यायः कस्मिन् वेदे वर्तते।

## ७.९) अश्विनस्वरूपम्

द्युलोकस्य द्वे देवौ स्तः अश्विनौ। इमौ परस्परं यमजौ। अश्वाः अनयोः सन्ति इति अश्विनौ। इमौ दीप्तिमन्तौ कमलमालाधारिणौ च। इमौ अधिकं मधु पिबतः। ऋग्वेदे अश्विनौ रुद्रस्य सिन्धोश्च पुत्रत्वेन उक्तौ। तौ पूर्वं राजानौ आस्ताम्। परं पुण्यकर्मणा देवत्वं लब्धवन्तौ। सूर्यकन्या सूर्या स्वयम्बरसभायाम् अश्विनौ पतिरूपेण परिगृहीतवती। अश्विभ्यां सह सूर्या रथेन गच्छति। तयोः रथः मधुमयः। तं रथं कदाचित् अश्वाः, कदाचित् विहङ्गाः, कदाचित् वृषभाः, कदाचित् पक्षयुक्तहयाः च वहन्ति। उषसः सूर्योदयस्य च मध्ये अश्विनोः आविर्भावः भवति। अर्थात् उषसः आगमनात् परम् इमौ ताम् अनुसरति।

विपदि प्राणिनां रक्षणं तयोः मुख्यं कर्म। तथाहि एकदा समुद्रे भुज्युनाम्नः राज्ञः पोतभङ्गे सति अश्विनौ प्रार्थितवान्। अश्विनौ च तस्य राज्ञः प्राणरक्षां कृतवन्तौ। अत्रिं तमोमयकारागृहात् मोचितवन्तौ। तद् ऋग्वेदे आम्नातं- "ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति" इति। न केवलं मनुष्यान् अपि तु मनुष्येतरप्राणिनामपि प्राणरक्षा ताभ्यां विधीयते इति ऋग्वेदे भूरिशः उदाहरणं प्राप्यते। तथाहि एकदा वृक-वर्तिका-संग्रामे वर्तिकापक्षिणं वृकेभ्यः रक्षितवन्तौ। तदाम्नातम् ऋग्वेदे- "आस्नो वृकस्य वर्तिकाममीके, युवं नरा नासत्यामुमुक्तम्" इति। स्वर्गलोकस्य चिकित्सकत्वेन इमौ बहुप्रसिद्धौ। एतौ स्वर्वैद्यौ इति कथ्यते। अनयोः चिकित्सया अन्धाः अपि दृष्टिशक्तिं प्राप्नुवन्ति। रोगिणः रोगमुक्ताः भवन्ति। अश्विनौ एव च्यवननाम्ने वृद्धर्षये यौवनं प्रदत्तवन्तौ।



## पाठगतप्रश्नाः

४३. अश्विनौ कौ।

४४. इमौ अधिकतया किं पिबतः सोमं मधु वा।

४५. अश्विनोः पत्नी का।

४६. अश्विनोः मुख्यं कर्म किम्।

४७. वृक-वर्तिका-संग्रामे अश्विनौ केभ्यः कं रक्षितवन्तौ।





## पाठसारः

अस्माकं मानवजीवनं यथा ब्राह्मणक्षत्रियविट्छूद्रभेदेन चतुर्विधं भवति। तथा वेदोक्तानां देवानामपि वर्णभेदः वर्तते। उच्यते च महाभारतस्य शान्तिपर्वणि-

**आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा।**
**अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ॥**
**स्मृतास्त्वङ्गिरसौ देवा ब्राह्मणा इति निश्चयः।**
**इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम्॥**

वेदे प्रत्येकं मन्त्रः कमपि देवमुद्दिश्य एव प्रयुज्यते। वेदे अग्नि-वायु-इन्द्रादिदेवानां तथा वाक्-उषा-आदित्यादिदेवीनां वर्णनं प्राप्यते। तत्र च भूलोकस्य देवेषु अग्निः, अन्तरीक्षस्य देवः इन्द्रः, द्युलोकस्य च सूर्यो मुख्यो देवः। यास्कस्य मते मुख्यो देवः अग्निस्तथा कात्यायनस्य मते मुख्यो देवः सूर्यः। केचन पण्डिताः देवानां साकारत्वं तथा केचन निराकारत्वं च प्रतिपादितवन्तः। वेदे मुख्यतया वर्णितानां इन्द्राग्निवरुणानां देवानां विस्तृतरूपेण व्याख्यानम् अस्माभिः प्राप्तम्। रुद्रोऽपि वेदे बहुभिः मन्त्रैः प्रशंसितः। तथा च परस्परं यमजौ अश्विनीकुमारौ विपदि प्राणिनां रक्षणं कुरुतः, तयोर्विषयेऽपि संक्षेपेण ज्ञातमस्मिन् पाठे इति शिवम्।



## पाठान्तप्रश्नाः

१. संक्षेपेण देवानां विभाजनं क्रियताम्।
२. वरुणस्वरूपं लिखत।
३. अग्निस्वरूपं लिखत।
४. इन्द्रस्य असुरवधः इत्यनेन किं किं द्योतितम्।
५. इन्द्रस्य माहात्म्यं वर्णयत।
६. इन्द्रस्य रूपं वर्णयत।
७. देवानां साकारत्वं युक्तिभिः समर्थयत।
८. वेदानां मन्त्रमयशरीरत्वं प्रमापयत।
९. सूर्यस्य स्थानभेदाद् नामानि कथं भिद्यन्ते।



## पाठगतप्रश्नोत्तराणि



### देवतायाः सामान्यपरिचयः

१. शौनकेन

२. केचन देवाः अग्निः, वायुः, इन्द्रः, सूर्यः, विष्णुः, सोमः, वरुणः, पूषा, मरुत्, रुद्रः, सविता, अर्यमा, अपान्नपात्, अश्विनः, आदित्यः, द्यौः, ऋभुः, यमः इत्यादयः।

३. काश्चन देव्यः वाक्, उषा, अदितिः, रात्रिः, पृथिवी, सरस्वती, श्रीः, धिषणा प्रभृतयः।

४. मित्रावरुणौ, इन्द्राग्नी, सूर्याचन्द्रमसौ, द्यावापृथिव्यौ, अग्नीषोमौ इत्यादयः

५. गोष्ठिवाचकत्वात् तथा बहुदेवतावाचकत्वाच्च

### देवानां विभाजनम्

६. अग्निः, आपः, पृथिवी तथा सोमः भूलोकस्य देवाःइन्द्रः, मरुत्, अपान्नपात् (विद्युत्), पर्जन्यः प्भृतयः अन्तरिक्षस्य देवाः।

७. सूर्यः मित्रः, वरुणः, द्युः, पूषा, सविता, आदित्यः, अश्विनीकुमारौ, ऊषा, रात्रिः इत्यादयः देवाः द्युलोकस्य

८. असून् प्राणान् राति ददाति इति असुरः, प्राणान् ददाति स परमात्मा एव।

९. तिस्र एव देवता इति नैरुक्ता

१०. अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः सूर्यो द्युस्थानः" इति।

११. वायोः मातरिश्वा, इन्द्रः, रुद्रः, अपान्नपात् प्रभृतयः।

१२. अग्निर्वै देवानामवमः इति।

१३. रुद्रः।

१४. शिवाय च शिवतराय च'

### देवताविषये आचार्यस्य यास्कस्य मतम्, कात्यायनस्य मतम्

१५. सूर्येन्द्रौ च अग्ने अभिव्यक्ती इति स्वीकृत्य अग्निरेव एकाभिन्नो देवः इति निरूपयता यास्केन ऋग्वेदः उद्धृतः– 'तमू अकृण्वन् त्रेधा भुवे' इति (१०.८८.१०)।

१६. इहाग्निभूतस्तु ऋषिभिर्लोके स्तुतिभिरीडितः।जातवेदा स्तुतो मध्ये स्तुतो वैश्वानरो दिवि।। इति।

१७. अग्नेः यथा सूर्यस्य जन्म तथा सूर्यादपि आदित्यस्येति भावः

### देवतानामाकारचिन्तनम्

१८. शरीरी,पुरुषविधः इति च।

१९. संवादसूक्तानि यथा सरमापणिसंवादः, ऊर्वशीपुरुरवासंवादः, यमयमीसंवादः इत्यादीनि

२०. यथा अक्षक्रीडा, ओषधिवृक्षः, प्रस्तरः, उलूखमूषलः इत्यादीनां वर्णना वेदे प्राप्यते।

२१. देवानां पृथक्तया रूपादिकं नास्त्येव इति।



### इन्द्रस्वरूपम्

२२. इदि-धातोः निष्पन्नः

२३. कपिशवर्णीयाः

२४. इन्द्राणी शची वा

२५. शतक्रतुः इत्यस्य अनन्तकर्मकर्ता इत्यर्थः। इन्द्रः युद्धजयः, असुरवधः, दस्यूनां पराभवः, जलसंवादसूक्तानि यथा सरमापणिसंवादः, ऊर्वशीपुरुरवासंवादः, यमयमीसंवादः इत्यादीनिनिष्कासनं इत्यादीनि कर्माणि कुर्वन्ति,तस्मात्।

२६. त्रिष्टुप्छन्दसा।

२७. वृत्रस्य हन्ता सः

२८. उपासकान् प्रति सः दयालुः, तेभ्यः महद्धनं ददाति

### अग्निस्वरूपम्

२९. देवाः साक्षात् हविर्न भुङ्क्ते, अग्निना एव देवाः हवींषि आस्वादयन्ति

३०. देवानामयं प्रतिनिधिः, पुरोवर्ती भूत्वा देवान् आह्वयति

३१. होता अध्वर्युः पुरोहितः तथा ब्रह्मा इति चतस्रः संज्ञाः

३२. अग्निसूक्तम्।

३३. गायत्रीछन्दसि

### वरुणस्वरूपम्

३४. वृधातोः

३५. मित्रः वरुणश्च

३६. वरुणेन

३७. सः दिवसे धरायां यत्र यद्भवति, सर्वं पश्यति, किञ्च रात्रौ चौर्य–व्यभिचारादिपापानि तच्चक्षुषोः परोक्षं न भवति, तस्मात् सम्राट् चरो वेत्युच्यते।

### इन्द्रस्वरूपम्

३८. जन्मनः परं अयं देवः अरोदीत् अतः सः रुद्रः इत्युच्यते।

३९. अम्बकत्रयस्य सत्त्वात् त्र्यम्बकः इत्युच्यते।

४०. जटावत्त्वात् रुद्रस्य नाम कपर्दी।

४१. "भिषक्तमं त्वा भिषजां शृणोमि" इति श्रुतिः।

४२. रुद्राध्यायः यजुर्वेदे वर्तते।



**अश्विस्वरूपम्**

४३. अश्विनौ द्युलोकस्य द्वै यमजौ देवौ।

४४. मधु पिबतः।

४५. सूर्यकन्या सूर्या।

४६. विपदि प्राणिनां रक्षणं तयोः मुख्यं कर्म।

४७. वृक-वर्तिका-संग्रामे अश्विनौ वृकेभ्यः वर्तिकां रक्षितवन्तौ।

॥ इति सप्तमः पाठः ॥



# वैदिकसूक्तानि

## भूमिका

इह खलु जगति आकीटपतङ्गं प्राणिनां सुखप्राप्तये दुःखपरिहाराय च प्रवृत्तिद्वयम् अहर्निशं दरीदृश्यते। सुप्रसिद्धं सर्वविदितम् च यत् सुखं शोभनकर्मानुष्ठानाद् जायते। दुःखम् अशोभनकर्मानुष्ठानाद् जायते। तदनुष्ठानं च अन्तरेण कर्मस्वरूपज्ञानं न भवति। अतः सुखम् इच्छता दुःखं परिजिहासता पुरुषेण अवश्यम् प्रथमं कर्मणां स्वरूपं शोभनीयत्वम् अशोभनीयत्वं च वेदनीयमेव। तज्ज्ञानम् ऋते वेदार्थज्ञानं दुष्करम्। अतः अध्येयः वेदः, विचार्यः च तदर्थः विपश्चिता। स च वेद ऋक् यजुः साम अथर्वा इति भेदेन चतुर्धा अपि। क्वचित् त्रेधापि प्रदर्श्यते। प्रतिभेदम् अपि अनेकशाखायुतः च। तासां शाखानां प्रतिस्वं मन्त्रब्राह्मणभेदविभिन्नत्वम्। तत्र मन्त्राः वैदिकेषु तत्त्वेन प्रसिद्धाः कर्मसमवेतार्थस्मारणैकफलकाः। विधिबोधकवाक्यस्य च ब्राह्मणसंज्ञा। विधिः कर्मणाम् इष्टसाधनत्वबोधनमुखेन इष्टसाधने पुरुषं प्रवर्तयति। निषेधस्तु अनिष्टसाधनबोधनमुखेन अनिष्टसाधनात् निवर्तयति। ब्राह्मणं च कर्मब्राह्मणम् उपसनाब्राह्मणम् ज्ञानब्राह्मणम् इति त्रेधा विभक्तम्। कर्मकाण्डे नित्यनैमित्तिककाम्यभेदेन त्रिविधानि कर्माणि आम्नातानि। तदेतेषां कर्मणाम् ज्ञानसंपत्तये वेदार्थज्ञानम् सुतराम् अपेक्षते।

भारते वर्षे वेदस्य संहितानां ब्राह्मणानाम् आरण्यकानाम् उपनिषदां च विद्यते महद् वैशिष्ट्यम्। संस्कृतपाठशालासु महाविद्यालयेषु च वेदस्य अध्ययनम् अध्यापनं च साग्रहं भवति। अस्मिन् पाठ्यांशे मन्त्राणां पदपाठानां व्याख्यानां च सम्यक् समावेशो वर्तते। ऋग्वेदस्य सारसंग्रहाणां परिचयोऽपि अत्र प्राप्स्यते। अनेन सूक्ताध्ययनेन अध्येतॄणां महान् उपकारो भवेद्। भूयसा प्रयत्नेन सौष्ठवेन च अस्य अध्ययनं छात्रेण कर्तव्यम्। वेदस्य व्याकरणम् लौकिकव्याकरणाद् भिन्नम्। शब्दाः अपि बाहुल्येन भिन्ना भवन्ति। स्वरभेदे अर्थभेदो भवति। प्रकरणभेदेऽपि अर्थभेदो भवति। काव्यात्मकशैली बहुत्र वेदे परिलक्ष्यते। अतः मन्त्राणाम् आपाततो योऽर्थः प्रतिभाति ततो भिन्न एव अर्थो भवितुमर्हति। व्याख्यानभेदेनापि अर्थे भेदाः सन्ति। तात्पर्यभेदेन अर्थे भेदो भवति। अतः मन्त्राणाम् अयमेवार्थ इति निर्णयः सुदुष्कर एव। तथापि प्रमाणभूतानाम् आचार्याणाम् श्रीमताम् सायणानाम् भाष्यमेव किञ्चित् सुबोधाय परिवर्तनेन छात्रोपयोगित्वं समासाद्य अत्र प्रदीयते। मन्त्रान्वयः, मन्त्रव्याख्या, मन्त्रस्य सरलार्थः, केषाञ्चित् शब्दानां व्याकरणम् इति रूपेणात्र मन्त्राः व्याख्याताः सन्ति।

८

# ॥सूर्यसूक्तं सञ्ज्ञानसूक्तं च॥

## प्रस्तावना

वेदो ज्ञानराशिः शब्दराशिश्च। वेदः अपौरुषेय इति एव परम्परा। जीवमात्रस्य इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकम् उपायं वेदयति वेदः। वेदेन ज्ञाप्यमाना उपायाः प्रत्यक्षेण अनुमानेन वा प्रमाणेन अगम्याः सन्ति। केवलम् वेदशब्देभ्य एव ते उपाया ज्ञातुं शक्याः। ईश्वरोऽपि सृष्टिकरणे वेदज्ञानम् आश्रित्य जगत् सृजत्। तदिदं वैदिकं ज्ञानं निर्भ्रान्तिम् प्रमादरहितं च। ऋक् यजुः साम अर्थवा इति चतुर्धो वेदः। स्तुत्यात्मक ऋग्वेदः। तस्य ऋग्वेदस्य मण्डलरूपेण अष्टकरूपेण च द्वेधा विभाजनमस्ति।

**अस्मिन् पाठे सूर्यसूक्तं सञ्ज्ञानसूक्तं चेति सूक्तद्वयं विद्यते।** प्रथमं सूर्यसूक्तम् उपस्थाप्यते।

मण्डलरूपेण विभागे सति सूर्यसूक्तम् प्रथममण्डले पञ्चदशाधिकशततमम् (म-१.११५)

सूर्यसूक्तम् अतीव महत्त्वपूर्णसूक्तम्। द्युलोके विद्यमानेषु देवेषु सर्वाधिकस्थूलः देवः सूर्यः यः भौतिकसूर्यसदृशः एव अस्ति। समग्रलोकस्य प्रकाशकः सूर्यः। सूर्यदेवतायाः स्तुतौ भौतिकसूर्यस्यैव विशेषगुणानां वर्णनं भवति। ऋग्वेदे दशसूक्तेषु सूर्यस्य स्तुतिः विहिता। यास्कमतानुसारेण सूर्यशब्दः सृधातोः अथवा षु-धातोः निष्पन्नः। तस्य मतानुसारेण सूर्यस्य एवं निर्वचनम् उक्तं यत्- सरतेः वा सुवतेर्वा इति। अर्थात् यः अन्तरिक्षे गतिप्रदानं करोति, जनान् स्वकार्यं प्रति प्रेरयति। तस्मात् एव स सूर्यः उच्यते। बृहद्देवताकारशौनकस्य मतानुसारेण यः प्राणिमध्ये विचरति। एवं सूर्यशब्दस्य निरुक्तिः उक्ता। अस्य सूर्यसूक्तस्य कुत्सः ऋषिः, त्रिष्टुप् छन्दः, सूर्यश्च देवता।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- सूक्तमाहात्म्यं ज्ञास्यति।
- सूक्तोक्तदेवतायाः स्वरूपं ज्ञास्यति।
- सूक्तस्थितानां मन्त्राणाम् संहितापाठं ज्ञास्यति।
- सूक्तस्थितानां मन्त्राणां पदपाठं रचयितुम् समर्थो भविष्यति।
- सूक्तस्थितानां मन्त्राणाम् अन्वयं कर्तुं योग्यः भवेत्।
- सूक्तोक्तानां मन्त्राणां व्याख्यां कर्तुं प्रभवेत्।
- वैदिकशब्दान् ज्ञास्यति।



- लौकिकवैदिकयोः शब्दयोः भेदज्ञानवान् भवेत्।
- वैदिकव्याकरणांशान् ज्ञास्यति।

## ॥सूर्यसूक्तम्॥

## ८.१) इदानीं मूलपाठं पठाम

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च॥१॥

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम्॥२॥

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः॥३॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै॥४॥

तन्मित्रस्य वरुणस्याभिचक्षे सुर्यो रूपं कृणुते द्योरुपस्थे।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति॥५॥

अद्या देवा उदिता सुर्यस्य निरंहसः पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥६॥

### ८.१.१) इदानीं मूलपाठम् अवगच्छाम (सूर्यसूक्तम्)

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च॥१॥



**पदपाठः - चित्रम्। देवानाम्। उत्। अगात्। अनीकम्। चक्षुः। मित्रस्य। वरुणस्य। अग्नेः॥ आ। अप्राः। द्यावापृथिवी इति। अन्तरिक्षम्। सूर्यः। आत्मा। जगतः। तस्थुषः। च॥१॥**

**अन्वयः -** देवानां चित्रम् अनीकं मित्रस्य वरुणस्य अग्नेः चक्षु उत् अगात्। द्यावापृथिवी अन्तरीक्षम् आ अप्राः, सूर्यः जगतः तस्थुषः च आत्मा॥

**व्याख्या-** देवानाम्। दीव्यन्तीति देवा रश्मयः तेषाम्। देवजनानामेव वा। अनीकं समूहरूपं चित्रम् आश्चर्यकरं सूर्यस्य मण्डलम्। उद् अगात् उदयाचलं प्राप्तमासीत्। कीदृशम्। मित्रस्य वरुणस्य अग्नेः च। उपलक्षणमेतत्। तदुपलक्षितानां जगतां चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदयं च द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च अप्राः। स्वकीयेन तेजसा आ समन्तात् अपूरयत्। ईदृग्भूतमण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा स्वरूपभूतः। स हि सर्वस्य स्थावरजगङ्गमात्मकस्य कार्यवर्गस्य कारणम्। कारणाच्च कार्यं नातिरिच्यते। तथा च पारमर्षं सूत्रं - 'तदनन्यत्वमारम्भणशब्दादिभ्यः'(ब्र०सू० २.१.१४) इति। यद्वा। स्थावरजङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते। तथा च श्रूयते - 'योसौ तवन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति'(तै०आ० १.१४.१) इति॥

**सरलार्थः-** देवानाम् उज्ज्वलमुखतुल्यः मित्रवरुणाग्नीनां चक्षुरिन्द्रयतुल्यः सूर्यः ऊर्ध्वलोकं गतः। आकाशम्, अन्तरिक्षं तथा पृथिवीं स्वालोकेन व्याप्नोति। सूर्यः स्थावराणां जङ्गमानाम् च प्राणिनाम् आत्मा अस्ति।

**व्याकरणम् -**

- उदगात् - उत्पूर्वकात् गाधातोः लुङि प्रथमपुरुषैकवचने।
- आप्राः - आ इत्युपसर्गपूर्वकात् प्राधातोः लुङि प्रथमपुरुषैकवचने।
- जगतः - गम्-धातोः क्विपि जगदिति रूपम्। तस्य षष्ठ्येकवचनम्।
- तस्थुषः - स्थाधातोः क्वसुप्रत्यये रूपम्।

**सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्।**
**यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम्॥२॥**

**पदपाठः - सूर्यः। देवीम्। उषसम्। रोचमानाम्। मर्यः। न। योषाम्। अभि। एति। पश्चात्॥ यत्र। नरः। देवऽयन्तः। युगानि। विऽतन्वते। प्रति। भद्राय। भद्रम्॥२॥**

**अन्वयः -** सूर्यः रोचमानां देवीम् उषसं पश्चात् मर्यः योषां न अभि एति। यत्र देवयन्तः नरः प्रति भद्राय भद्रं युगानि वितन्वते।



**व्याख्या-** सूर्यः देवीं दानादिगुणयुक्तां रोचमानां दीप्यमानाम् उषसं पश्चात् अभ्येति उषसः प्रादुर्भावानन्तरं तामभिलक्ष्य गच्छति। तत्र दृष्टान्तः। मर्यो न योषाम्। यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं सततमनुगच्छति तद्वत्। यत्र यस्यामुषसि जातायां देवयन्तः देवं द्योतमानं सूर्यं यष्टुमिच्छन्तः नरः यज्ञस्य नेतारो यजमानाः युगानि। युगशब्दः कालवाची। तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते यथा दर्शपूर्णमासौ इति। अग्निहोत्रादीनि कर्माणि वितन्वते विस्तारयन्ति। यद्वा। देवयन्तो देवयागार्थं धनमात्मनः इच्छन्तो यजमानपुरुषा युगानि हलावयवभूतानि कर्षणाय वितन्वते प्रसारयन्ति। तामुषसमनुगच्छतीत्यर्थः। एवंविधं भद्रं कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय स्तुमः इति शेषः। यद्वा। देवयन्तः देवकामा यजमाना युगानि यग्मानि भूत्वा पत्नीभिः सहिताः सन्तो भद्रं कल्याणम् अग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते विस्तारयन्ति।

**सरलार्थः-** युवा पुरुषः यथा युवतिम् अनुगच्छति तथैव सूर्यः दीप्तिमयीम् उषादेवीम् अनुगच्छति। तस्याः उषायाः प्रकाशसमये यजमानाः कल्याणप्रददेवानां कृते कल्याणफललाभाय यज्ञकर्म कुर्वन्ति।

**व्याकरणम् -**

- रोचमानाम् - रुच्-धातोः शानच्प्रत्यये टापि द्वितीयायाः एकवचने रूपम्।
- मर्यः - मृङ्-धातोः यति प्रथमैकवनम्।
- युगानि - युज्-धातोः घञि द्वितीयाबहुवचनम्।
- देवयन्तः - दिव्-धातोः क्यचि शतरि प्रथमाबहुवचने।
- वितन्वते - विपूर्वकात् तनोतेः आत्मनेपदिनः लटि प्रथमपुरुषबहुवचने।

**भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।**
**नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः॥३॥**

**पदपाठः - भद्राः। अश्वाः। हरितः। सूर्यस्य। चित्राः। एतऽग्वाः। अनुऽमाद्यासः॥ नमस्यन्तः। दिवः। आ। पृष्ठम्। अस्थुः। परि। द्यावापृथिवी इति। यन्ति। सद्यः॥३॥**

**अन्वयः -** सूर्यस्य भद्राः हरितः अश्वाः चित्राः एतग्वाः अनुमाद्यासः नमस्यन्तः दिवः पृष्ठम् आ अस्थुः। सद्यः द्यावापृथिवी परियन्ति॥३॥

**व्याख्या-** भद्राः कल्याणाः। अश्वाः एतग्वाः इत्येतदुभयम् अश्वनाम। तत्रैकं क्रियापरं योजनीयम्। अश्वाः तुरगा व्यापनशीला वा हरितः हर्तारः चित्राः विचित्रावयवाः अनुमाद्यासः अनुक्रमेण सर्वैस्तुत्या मादनीया एवंभुताः सूर्यस्य एतग्वाः अश्वाः। यद्व। एतं गन्तव्यं मार्गं गन्तारोऽश्वाः। एतं शबलवर्णं वा प्राप्नुवन्तोऽश्वाः। नमस्यन्तः अस्माभिः नमस्यमानाः सन्तः दिवः अन्तरिक्षस्य पृष्ठम्

उपरिप्रदेशं पूर्वभागलक्षणम् आ अस्थुः अतिष्ठन्ति प्राप्नुवन्ति। यद्वा। हरिते रसहरणशीलाः रश्मयः भद्रादिलक्षणविशिष्टाः दिवः पृष्टं नभःस्थलमातिष्ठन्ति। आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यः तदानीमेव एकेनाह्ना परि यन्ति परतो गच्छन्ति व्याप्नुवन्तीत्यर्थः॥

**सरलार्थः-** सूर्यस्य कल्याणकारिणः हरितवर्णीयाः विचित्राः गन्तव्यमार्गे स्वयम् एव गमनशीलाः आनन्दकारिणः सर्वैः स्तुत्याः अश्वाः द्युलोकम् आरूढवन्तः। ते शीघ्रमेव आकाशं पृथिवीं च परितः व्याप्तं करिष्यन्ति।

**व्याकरणम् -**

- अश्वाः - अश्-धातोः क्वन्प्रत्यये प्रथमाबहुवचने।
- एतग्वाः - इण्गतौ इति धातोः तन्प्रत्यये एत इति जाते ततः एतपूर्वकात् गम्-धातोः ड्वप्रत्यये।
- अनुमाद्यासः - अनुपूर्वकात् मद्-धातोः यति प्रत्यये।
- अस्थुः - स्थाधातोः लुङि प्रथमपुरुषबहुवचने।
- यन्ति - इण्गतौ इति धातोः लटि प्रथमपुरुषबहुवचने।



## पाठगतप्रश्नाः-१

१. सूर्यसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।
२. चित्रम् इत्यस्य कः अर्थः।
३. आप्राः इति रूपं कथं सिद्ध्येत्।
४. तस्थुषः इति रूपं कथं सिद्ध्येत्।
५. भद्राः इत्यस्य कः अर्थः।
६. सूर्यस्य अश्वाः कीदृशाः।
७. एतग्वाः इति रूपं कथं सिद्ध्येत्।
८. अनुमाद्यासः इति रूपं कथं सिद्ध्येत्।
९. देवयन्तः इति रूपं कथं सिद्ध्येत्।
१०. यन्ति इत्यत्र कः धातुः।

---

## ८.१.२) इदानीं मूलपाठम् अवगच्छाम

**तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।**
**यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै॥४॥**



**पदपाठः - तत्। सूर्यस्य। देवऽत्वम्। तत्। महिऽत्वम्। मध्या। कर्तोः। विऽततम्। सम्। जभार। यदा। इत्। अयुक्त। हरितः। सधऽस्थात्। आत्। रात्री। वासः। तनुते। सिमस्मै॥४॥**

**अन्वयः** - तत् सूर्यस्य देवत्वं तत् महित्वं कर्तोः मध्या विततं सं जभार। यदा इत् हरितः सधस्थात् अयुक्त आत् रात्री सिमस्मै वासः तनुते॥४॥

**व्याख्या-** सूर्यस्य सर्वप्रेरकस्य आदित्यस्य तत् देवत्वम्। स्वातन्त्र्यमिति यावत्। महित्वं महत्त्वं माहात्म्यं च तत् एव। तच्छब्दश्रुतेः यच्छब्दाध्याहारः। यत् कर्तोः। प्रारब्धापरिसमाप्तस्य कृष्णादिलक्षणस्य कर्मणः मध्या मध्ये अपरिसमाप्ते एव तस्मिन् कर्मणि विततं विस्तीर्णं स्वकीयं रश्मिजालम् अस्तं गच्छन् सूर्यः संजभार अस्माल्लोकात् स्वात्मन्युपसंहरति। कर्मकरश्च प्रवृत्तमपरिसमाप्तमेव विसृजति अस्तं यान्तं सूर्यं दृष्ट्वा। ईदृशं स्वातन्त्र्यं महिमानं चावगाहते। अपि च इत् इत्यवधारणे। यदेत् यस्मिन्नेव काले हरितः रसहरणशीलान्। स्वरश्मीन् हरिद्वर्णानश्वान् वा सधस्थात् सहस्थानात् अस्मात् पार्थिवाल्लोकादादाय अयुक्त अन्यत्र संयुक्तान् करोति। यद्वा। युजिः केवलोपि विपूर्वः द्रष्टव्यः। यदेवासौ स्वरश्मीनश्वान् वा सधस्थात् सह तिष्ठन्त्यस्मिन्निति सधस्थो रथः। तस्मात् अयुक्त अमुञ्चत्। आत् अनन्तरमेव रात्री निशा वासः आच्छादयितृ तमः सिमस्मै। सिमशब्दः सर्वशब्दपर्यायः। सप्तम्यर्थे चतुर्थी। सर्वस्मिन् लोके तनुते विस्तारयति। यद्वा। वासो वासरम् अहः। तत् सर्वस्मात् अस्माल्लोकादपनीय रात्री तमस्तनुते। अत्र निरुक्तं - 'तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासौ अयुक्त हरणानादित्यरश्मीन् हरितोश्वानिति वाथ रात्री वासस्तनुते सिमस्मै वासरमहरवयुवती सर्वस्मात्' (निरु - ४.११) इति।

**सरलार्थाः-** तदेव सूर्यस्य देवत्वं, तदेव सूर्यस्य महिमा यत् जनैः अनुष्ठितेषु कर्मसु स्वस्य प्रसारितकिरणजालं पृथिव्याः संहरति। यदैव स रसहरणशीलान् अश्वान् रथात् अथवा पृथिव्याः किरणजालं पृथक्करोति तदा रात्रिः सर्वेभ्यः कृष्णवस्त्रं तनुते।

**व्याकरणम् -**

- विततम् - विपूर्वकात् तन्-धातोः क्तप्रत्यये रूपम्।
- संजभार - सम्पूर्वकात् भृधातोः लिटि प्रथमपुरुषैकवचने रूपम्।
- अयुक्त - युज्-धातोः आत्मनेपदिनः लुङि प्रथमपुरुषैकवचने रूपम्।
- सधस्थात् - सहपूर्वकात् स्थाधातोः कप्रत्यये पञ्चम्यैकवचने रूपम्।
- तनुते - आत्मनेपदिनः तन्-धातोः लटि प्रथमपुरुषैकवचने रूपम्।
- सिमस्मै - सर्वनामपर्यायवाचकस्य सिमशब्दस्य चतुर्थ्यैकवचने रूपम्।
- रात्री - रात्रिशब्दस्य स्त्रियां ङीपि प्रथमैकवचने रूपम्।



**तन्मित्रस्य वरुणस्याभिचक्षे सुर्यो रूपं कृणुते द्योरुपस्थे।**
**अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति॥५॥**

**पदपाठः - तत्। मित्रस्य। वरुणस्य। अभिऽचक्षे। सूर्यः। रूपम्। कृणुते। द्योः। उपऽस्थे॥**

**अनन्तम्। अन्यत्। रुशत्। अस्य। पाजः। कृष्णम्। अन्यत्। हरितः। सम्। भरन्ति॥**

**अन्वयः -** तत् मित्रस्य वरुणस्य अभिचक्षे सूर्यः द्योः उपस्थे रुपं कृणुते। अस्य हरितः अनन्तम् अन्यत् रुशत् पाजः सं भरन्ति, अन्यत् कृष्णम्॥

**व्याख्या-** तत् तदानीम् उदयसमये मित्रस्य वरुणस्य एतदुभयोपलक्षितस्य सर्वस्य जगतः अभिचक्षे आभिमुख्येन प्रकाशनाय द्योः नभसः उपस्थे उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपं सर्वस्य निरूपकं प्रकाशकं तेजः कृणुते करोति। अपि च अस्य सुर्यस्य हरितः रसहरणशीला रश्मयः हरिद्वर्णाः अश्वा वा अनन्तम् अवसानरहितं कृत्स्नस्य जगतो व्यापकं रुशत् दीप्यमानं श्वेतवर्णं पाजः। बलनामैतत्। बलयुक्तम् अतिबलस्यापि नैशस्य तमसो निवारणे समर्थम् अन्यत् तमसो विलक्षणं तेजः संभरन्ति अहनि स्वक्रियागमनेन निष्पादयन्ति। तथा कृष्णं कृष्णवर्णम् अन्यत् तमः स्वकीयापगमनेन रात्रौ। अस्य रश्मयोप्येवं कुर्वन्ति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः॥

**सरलार्थः-** मित्रस्य वरुणस्य च दर्शनाय सूर्यः द्युलोकस्य मध्यभागे प्रकाशमानं रूपं प्रकटयति। तस्य हरितवर्णीयाः अथवा रसहरणशीलाः अश्वाः एकस्मिन् समये एव प्रकाशम् अन्धकारं च आनयन्ति।

**व्याकरणम् -**

- अभिचक्षे - अभिपूर्वकात् चक्ष्-धातोः क्विप्प्रत्यये वैदिकतुमर्थकैकारे रूपम्।
- द्योः - द्योशब्दस्य षष्ठ्येकवचने वैदिकरूपम्।
- उपस्थे - उपपूर्वकात् स्थाधातोः कप्रत्यये सप्तम्येकवचने रूपम्।
- कृणुते - कृधातोः लटि प्रथमपुरुषैकवचने रूपम्।
- पाजः - पाधातोः असुन्प्रत्यये रूपम्।
- भरन्ति - भृधातोः लटि प्रथमपुरुषबहुवचने रूपम्।

**अद्या देवा उदिता सुर्यस्य निरंहसः पिपृता निरवद्यात्।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥६॥**

**पदपाठः - अद्य। देवाः। उत्ऽइता। सूर्यस्य। निः। अंहसः। पिपृत। निः। अवद्यात्॥ तत्। नः।**

**मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः॥६॥**



**अन्वयः** - देवाः अद्य सूर्यस्य उदिता अंहसः निष्पिपृत निः अवद्यात्। नः तत् मित्रः वरुणः अदितिः सिन्धुः पृथिवी उत द्यौः ममहन्ताम्॥

**व्याख्या-** हे देवाः द्योतमानाः सुर्यरश्मयः अद्य अस्मिन्काले सुर्यस्य आदित्यस्य उदिता उदितौ उदये सति इतस्ततः प्रसरन्तो यूयम् अस्मान् अंहसः पापात् निःपिपृत निष्कृष्य पालयत। यदिदमस्माभिरुक्तं नः अस्मदीयं तत् मित्रादयः षड्देवताः ममहन्तां पूजयन्तु अनुमन्यन्ताम्। रक्षन्त्विति यावत्। मित्रः प्रतीतेस्त्रायकः अहरभिमानो देवः। वरुणः अनिष्टानां निवारयिता रात्र्यद्रिभमानी। अदितिः अखण्डनीया अदीना वा देवमाता। सिन्धुः स्यन्दशीलोदकाभिमानिनी देवता। पृथिवी भूलोकस्याधिष्ठात्री द्यौः द्युलोकस्य। उतशब्दः समुच्चये॥

**सरलार्थः-** अस्मिन् मन्त्रे देवान् प्रति उच्यते यत् हे देवाः सूर्यरश्मयः अद्य सूर्ये उदिते सति पापेभ्यः अस्मान् मुक्तिं प्रयच्छ, अपशब्दभाषणेभ्यः अपि मुक्तिं प्रयच्छ। अस्माकम् अस्य प्रार्थनस्य मित्रादिदेवाः अनुमोदनं कुर्वन्तु।

**व्याकरणम् -**

- उदिता - उत्पूर्वकात् इण्-धातोः क्ते डादेशे वैदिकरूपम् उदिता इति।
- अद्या - अत्र 'निपातस्य च' इति दीर्घः।
- अवद्यात् - वद्-धातोः यति वद्य इति रूपम्। न वद्य इति अवद्य, पञ्चम्येकवचने रूपम्।
- पिपृत - पृधातोः लट्मूलकलोटि प्रथमपुरुषबहुवचने।
- ममहन्ताम् - मम्ह् इति अथवा मह् इति धातोः लिट्मूलकलोट्लकारे प्रथमपुरुषबहुवचने रूपम्।



## पाठगतप्रश्नाः-२

११. सूर्यस्य अपरं नाम किम्।

१२. सिमशब्दस्य कः अर्थः।

१३. सिमस्मै इत्यत्र कस्मिन्नर्थे चतुर्थी।

१४. सधस्थात् इत्यत्र कस्मिन्नर्थे कप्रत्ययः।

१५. रात्री इत्यत्र कः प्रत्ययः।

१६. अयुक्त इति रूपं कथं सिद्ध्येत्।

१७. हरितः इत्यस्य कः अर्थः।

१८. पाजः इति रूपं कथं सिद्ध्येत्।

१९. अद्या इत्यत्र केन दीर्घः।

२०. ममहन्ताम् इति रूपं कथं सिद्ध्येत्।



## ८.२) सूर्यस्वरूपम्

वेदे नैकेषु देवेषु सूर्यदेवः विशिष्टं स्थानम् लभते। ऋग्वेदे सुवर्णकान्तिः तेजःस्वरूपः सूर्यः चराचरस्य विश्वस्य आत्मत्वेन पूजितः। कृष्णयजुर्वेदे आदित्यः विश्वस्य प्राणस्वरूपः इति आम्नातम्। तस्मादेव सूर्यात् प्राणिनाम् उत्पत्तिः। तथाहि "असौ वा आदित्यः प्राणः प्राणमेवैनानुत्सृजति" इति। ऋग्वेदे सूर्यः श्रेष्ठज्योतिःस्वरूपेण स्तुतः। तथाहि "इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम्" इति (ऋग्वेदः १०/१७०/३)। निरुक्तकारस्य मते सूर्यः द्युलोकस्थानां देवानां प्रतिनिधिः। "सूर्यो द्युस्थानः" इति (निरुक्त ७/५/२)। पुरुषसूक्ते सूर्यस्य उत्पत्तिः विराट्-पुरुषस्य चक्षुषः अभवत् इति प्राप्यते। तथाहि आम्नातं "चक्षोः सूर्यः अजायत" इति। सूर्यदेवो हि अनीकः अर्थात् देवानां मुखस्वरूपः। अस्माकं प्रत्यक्षदेवः सूर्यः। उषा तस्य भार्या। युवकः यथा युवतिम् अनुसरति तथैव सूर्यः दीप्तिमतीम् उषादेवीम् अनुधावति। ऋग्वेदे बहुत्र सूर्यदेवस्य रथस्य वर्णनं प्राप्यते। सूर्यस्य रथे सप्त अश्वाः सन्ति। सूर्यस्य रश्मयः एव अत्र अश्वाः। सूर्ये उदिते तस्य रश्मयः अश्वा इव बहुवेगेन सर्वासु दिक्षु वितताः भवन्ति। अतः रश्मीनाम् अश्वत्वम्। किञ्च एते रश्मयः पृथिवीपृष्ठतः जलीयांशं संहरन्ति। अतः रसहरणशीलत्वात् हरित् इत्युच्यते। एकस्मिन् दिवसे एव एते द्युलोकस्य पृथिवीलोकस्य च प्रदक्षिणां कुर्वन्ति। "परि द्यावा पृथिवी यन्ति सद्यः" इति श्रुतिः। सूर्यस्य रश्मयः तमसः दूरीकरणे समर्थाः। सूर्यस्य रश्मयः यदा पृथिवीलोकमागच्छति तदा पृथिव्यां दिनं भवति। किञ्च यदा सूर्यः स्वरश्मिरूपान् अश्वान् पृथिवीलोकात् संहरति तदा पृथिव्यां तमः वितनोति। तेन रात्रिः भवति। एवञ्च सूर्यः एव दिवसस्य रात्रेश्च कारणम्।

सूर्यः सर्वेषां प्राणिनां प्रेरकः अपि। सूर्ये उदिते एव सर्वे प्राणिनः स्वस्वकर्मसु व्यापृताः भवन्ति। अपि च सूर्यः उरुचक्षा। अर्थात् सः मनुष्याणां सर्वाणि पापपुण्यादीनि कर्माणि अवलोकयति। ऋग्वेदे कुत्रचित् सूर्यः अग्निश्च अभिन्नत्वेन प्रतिपादितः। दिवसे यः सूर्यः स एव रात्रौ अग्निः।

सूर्यदेवस्य एतदेव माहात्म्यं यत् सः स्वतन्त्रः। मनुष्यैः प्रारब्धे कृषिकर्मणि असमाप्तेऽपि प्रातः विस्तृतं स्वरश्मिजालं अस्तगमनसमये स्वस्मिन् संहरति। तदा पृथिवीलोकं तमः आवृणोति। जगत्प्रकाशनाय रश्मिजालस्य क्षणमात्रेण प्रसारणं पुनः संहरणञ्च नाल्पमहिम्नः सम्भवति, अतः सूर्यदेवस्य अत्यधिकम् एतद् माहात्म्यम्।

## ८.३) सूर्यसूक्तस्य सारः

ऋग्वेदस्य प्रथममण्डलस्य सूर्यसूक्तस्यास्य सूर्यः देवता, कुत्सः ऋषिः, त्रिष्टुप् छन्दः। सूक्तेऽस्मिन् ऋषिः भगवतः सूर्यस्य स्तुतिं कुर्वन् आह, जगतां चक्षुरिन्द्रियस्थानीयः सूर्यः उदयं प्राप्य दिवं पृथिवीम् अन्तरीक्षं च स्वकीयेन तेजसा समन्तात् अपूरयत्। ईदृग्भूतमण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा एव अस्ति। स हि स्थावरजंगमात्मकस्य कार्यवर्गस्य कारणम्। उदिते हि सूर्ये मृतप्रायं जगत्सर्वं पुनश्चेतनयुक्तं सदुपलभ्यते। सूर्यः एव दानादिगुणयुक्तां दीप्यमानाम् उषसम् अभ्येति। अर्थात् उषसः प्रादुर्भावानान्तरं तामभिलक्ष्य गच्छति। यथा कश्चिन्मनुष्यः लावण्यमयीं गच्छन्तीम् युवतिं सततमनुगच्छति, तद्वत्। एवंविधं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय स्तुमः इत्यभिप्रायः। इत्थम्



## वेदाध्ययनम्

अस्माभिः नमस्यमानः सूर्यः अन्तरीक्षस्य पृष्ठम् उपरिप्रदेशं पूर्वभागलक्षणम् प्राप्नोति। यद्वा, रहहरणशीलाः सूर्यस्य रश्मयः भद्रादिलक्षणविशिष्टाः दिवः पृष्ठम् नभःस्थलम् आतिष्ठन्ति। उदयसमये मित्रस्य वरुणस्य एतद्लक्षितस्य सर्वस्य जगतः सवितारूपं सर्वस्य निरूपकं प्रकाशकं तेजः करोति। अपि च अस्य सूर्यस्य रसहरणशीलाः रश्मयः हरिद्वर्णाः अश्वाः वा अनन्तरम् अवसानरहितं कृत्स्नस्य जगतः व्यापकं दीप्यमानं श्वेतवर्ण बलयुक्तं नैशस्य तमसो निवारणे समर्थम् अन्यत् तमसो विलक्षणं तेजः सम्भरन्ति स्वकीययागमनेन निष्पादयन्ति। एतद् सर्वम् सूर्यस्य माहात्मम्। हे सूर्यरश्मयः अद्य अस्मिन् काले सूर्यस्य उदये सति इतस्ततः प्रसरन्तो यूयम् अस्मान् अंहसः पापात् निष्कृष्य पालयत।

चित्रं देवानामुदगाननीकं, चक्षुर्मित्रस्य वरुणस्याग्नेः।

आप्रा द्यावापृथिवी अन्तरिक्षं, सूर्य आत्मा जगतस्तस्थुषश्च।। १।।

दीव्यन्तीति देवाः रश्मयः, तेषाम् देवानाम्, समूहरूपं आश्चर्यकरम् सूर्यस्य मण्डसम् उदयाचलं प्राप्तम् आसीत्। मित्रस्य वरुणस्य अग्नेः अथवा तदुपलक्षितानां जगतां प्रकाशकं चक्षुरिन्द्रियस्थानीयम् उदयं प्राप्य दिवम् पृथिवीम् अन्तरीक्षं च स्वकीयेन तेजसा समन्तात् अपूर्यत। ईदृदग्भूत-मण्डलान्तवर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः साक्षात् परमात्मा एव। स हि सूर्यः स्थावरजंगतात्मकस्य कार्यवर्गस्य कारणम्, स्थावरजंगत्माकस्य सर्वस्य प्राणिजातस्य जीवात्मा एवाऽस्ति। उदिते हि मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते।

सूर्यो देवीमुषसं रोचमानां, मयो न योषामभ्येति पश्चात्।

यत्रा नरो देवयन्ति युगानि, वितन्वते प्रति भद्राय भद्राम्।। २।।

मन्त्रेऽस्मिन् ऋषिः कुत्स्यः आह, सूर्यः दानादिगुणयुक्तां दीप्यमानाम् उषसं पश्चात् अभ्येति, अर्थात् उषसः प्रादुर्भावनन्तरं तामभिलक्ष्य गच्छति। यथा कश्चित् मनुष्यः शोभनावयवां गच्छन्तीं युवतिं सततम् अनुगच्छति। एवंविधं कल्याणं सूर्यं प्रति कल्याणरूपाय कर्मफलाय स्तुमः।

भद्रा अश्वा हरितः सूर्यस्य, चित्रा एतग्वा अनुमाद्यासः।

नमस्यन्तो दिव आ पृष्ठमस्थुः, परिद्यावापृथिवी यन्ति सद्यः।। ३।।

अश्वाः तुरगाः व्यापनशीलाः वा हरितः चित्राः विचित्रावयवाः अनुमाद्यासः अनुक्रमेण सर्वे स्तुत्या मादनीया एवं भूताः सूर्यस्य अश्वाः। एतं गन्तव्यं मार्गं गन्तारोऽश्वाः। नमस्यन्तः अस्माभिः नमस्यमानाः सन्तः दिवः अन्तरिक्षस्य पृष्ठम् उपरिप्रदेशं पूर्वभागलक्षणम् आ अस्थुः आतिष्ठन्ति प्राप्नुवन्ति वा। हरितः रसहरणशीलाः रश्मयः भद्रादिलक्षण-विशिष्टा दिवः पृष्ठं नभस्थलम् आतिष्ठन्ति।

तत्सूर्यस्य देवस्य तन्माहित्वं, मध्या कर्तोर्विततं सं जभार।

यदेदयुक्त हरितः सधस्थादाद्रात्री वास्ततनुते सिमस्मै।।

सूर्यस्य सर्वप्रेरकस्य आदित्यस्य तत् देवत्वम्, स्वातन्त्रमिति। महित्वं महत्वं माहात्म्यं च तत् एव। प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणः मध्या अपरिसमाप्तेः एव तस्मिन् कर्माणि विततं विस्तीर्णं स्वकीयं रश्मिजालम् अस्तं गच्छन् सूर्यः संजभारः अस्माल्लोकात् स्वात्मन्युपसंहरति। ईदृशं



स्वातन्त्र्यं महिमानं च अवगाहते। यदेत् यस्मिन् काले हरितः रसहरणशीलान् स्वरश्मीन् हरिद्वर्णान् अश्वान् वा सधस्थात् सहस्थानात् अस्मात् पार्थिवाल्लोकादादाय अयुक्त अन्यत्र संयुक्तान् करोति। अनन्तरमेव रात्री निशा वासः आच्छादयितृ तमः सिमस्स्मै। अत्र सिमशब्दः सर्वशब्दपर्यायः। सर्वस्मिन् लोके तनुते विस्तारयति। अर्थात् अस्माल्लोकाद् वासरम् अपनीय रात्री तमस्तनुते इत्यभिप्रायः।

तन्मित्रस्य वरुणस्याभिचक्षे, सूर्योरूपं कृणुते द्योरुपस्थे।

अनन्तमन्यदुशदस्य पाजः, कृष्णमन्यद्धरितः सं भरन्ति।। ५।।

तत् तदानीम् उदयसमये मित्रस्य वरुणस्य एतदुभयोपलक्षितस्य सर्वस्य जगतः अभिचक्षेः आभिमुख्येन प्रकाशनाय द्यौः नभसः उपस्थे उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपं सर्वस्य निरूपकं तेजः कृणुते। अपि च, अस्य सूर्यस्य हरितः रसहरणशीला रश्मयः हरिद्वर्णा अश्वा वा श्वेतवर्णं बलयुक्तं नैशस्य तमसो निवारणे समर्थम् अन्यत् तमसो विलक्षणं तेजः संभरन्ति अहनि स्वकीयागमनेन निष्पादयति।

अद्या देवा उदिता सूर्यस्य, निरंहसः पिपृता निरवद्यात्।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौ।। ६।।

हे देवाः द्योतमानाः सूर्यरश्मयः अद्य अस्मिन्काले सूर्यस्य आदितस्य उदिता उदितौ उदये सति इतस्ततः प्रसरन्तो यूयम् अस्मान् अंहसः पापात् निःपिपृत निष्कृष्य पालयत। यदिदम् अस्माभिरुक्तं नः अस्मदीयं तत् मित्रः वरुणः अदितिः, सिन्धुः, पृथिवी, द्यौश्च षड्देवताः मामहन्तां पूजयन्तु अनुमन्यन्ताम्। अत्र मित्रः प्रमीतेस्त्रायकः अहरभिमानी देवः।

वरुणः अनिष्टानां निवारयिता रात्र्याभीमानी देवः, अदिति उदकाभिमीनी देवता, पृथिवी भूलोकस्याधिष्ठात्री देवता, द्यौः द्युलोकस्य अभिमानी देवः।

##  पाठसारः (सूर्यसूक्तांशे)

सूर्यसूक्तस्य आदिममन्त्रे सूर्यस्य स्वरूपं वर्णितम्। ननु सूर्यः कीदृशः इति प्रश्नः मनसि उदेति। तस्य उत्तरम् आदिममन्त्रे एव उक्तम्। उच्यते सूर्यः देवानाम् उज्ज्वलमुखतुल्यः मित्रवरुणाग्नीनां चक्षुरिन्द्रियतुल्यः। सः स्वस्य आलोकसमूहेन समग्रं जगत् व्याप्नोति। स सर्वेषां स्थावरजङ्गमानाम् आत्मा। द्वितीये मन्त्रे सूर्यस्य एकं स्वभावं प्रकटयति। तत्र उच्यते यथा कश्चित् युवा पुरुषः युवतिम् अनुगच्छति तथैव सूर्यः अपि दीप्तिमयीम् उषादेवीम् अनुगच्छति। ततः परस्मिन् मन्त्रे सूर्यस्य अश्वविषये उक्तम्। तत्र उच्यते तस्य अश्वाः हरितवर्णीयाः, कल्याणकारिणः, विचित्राः, गन्तव्यमार्गे स्वयमेव गमनशीलाः, सर्वैः प्रणम्याः सन्ति। ततः परस्मिन् मन्त्रे सूर्यस्य देवत्वम् उक्तम्। जनैः अनुष्ठितेषु कर्मसु स्वस्य प्रसारितकिरणजालं पृथिव्याः संहरति। स यदा रसहरणशीलान् अश्वान् स्वरथात् पृथक्करोति तदा रात्रिः समागच्छति। ततः परस्मिन् मन्त्रे तस्य अश्वानां महिमानम् उच्यते। तत्र उक्तं तस्य रसहरणशीलाः अश्वाः एकस्मिन् समये प्रकाशम् अन्धकारं च आनयन्ति। ततः षष्ठे मन्त्रे सूर्यं प्रति प्रार्थनं



क्रियते यत् हे देव सूर्ये उदिते सति पापानाम् अपसारणं कृत्वा अस्मान् रक्षय। अपशब्दयुक्तवचनेभ्यः अस्मान् पृथक्कुरु। मित्रः, वरुणः, अदितिः, सिन्धुः, पृथिवी द्युलोकश्च एतत् प्रार्थनं स्वीकुर्वन्ति। एवं सम्पूर्णे सूर्यसूक्ते सूर्यस्य स्वरूपं, सूर्यस्य अश्वस्वरूपं, सूर्यस्य माहात्म्यम् इत्येते विषयाः प्रोक्ताः।

# संज्ञानसूक्तम्

## प्रस्तावना (संज्ञानसूक्तांशे)

ऋग्वेदेषु संज्ञानसूक्तम् अपि अत्यन्तं प्रसिद्धम् अस्ति। प्रकृतसूक्तस्य अस्य केवलं प्रथममन्त्रस्य देवता अग्निः भवति। एवञ्च अवशिष्टानां मन्त्राणां देवता तु संज्ञानम्। अस्य सूक्तस्य ऋषिः संवनन आङ्गिरसः। अनुष्टुभादिना छन्दसा एव संज्ञानसूक्तस्य मन्त्राः विलसन्ति। प्रकृतपाठे उत्तरार्धे अस्मिन् संज्ञानसूक्तस्य वर्णना विलसति।

## ८.४) संज्ञानसूक्तस्य सामान्य-परिचयः

संज्ञानसूक्तम् ऋग्वेदसंहितायाः दशममण्डलान्तर्गतेषु सूक्तेषु अन्यतमम् इति। अस्मिन् संज्ञानसूक्ते चत्वारः एव मन्त्राः सन्ति। अस्य सूक्तस्य प्रथमे मन्त्रे अग्निदेवतायाः स्तुतिरेव विहिता वर्तते। यत्र अग्निदेवतायाः स्तुतिविधानावसरे अग्निदेवताम् उद्दिश्य इदमुक्तं यत् हे अग्निदेव! त्वं समेषाम् उपसकानां यथेष्टम् अभिलषितं प्रापयसि। अतः अस्माकं कृतेऽपि धनादिरूपान् अभिलषितपदार्थान् तथैव प्रददत् भव इति।

अस्य सूक्तस्य अवशिष्टेषु त्रिषु मन्त्रेषु संज्ञानदेवतायाः उपासना विहिता वर्तते। तथा च सर्वैः सह मिलित्वा संभाषणम्, विरोधं परित्यज्य ऐक्येन निवसनम्, किञ्च परस्परं सौहार्दपूर्णो व्यवहारः – एतेषां विधानाय कामना वर्तते। येन प्रकारेण प्राचीनकाले अस्माकं पूर्वजाः परस्परं सौहार्देन सांमनस्येन वा व्यवहरन्ति स्म, तेन प्रकारेणैव परस्परं क्रियाकलापस्य प्रार्थनाापि कृता। ऋत्विजः तथा यजमानस्यापि ऐक्यमत्यस्य कामनापि अस्मिन् सूक्ते विहिता वर्तते।

## ८.५) इदानीं मूलपाठं पठाम (संज्ञानसूक्तम्)

**संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।**
**इळस्पदे समिध्यसे स नो वसून्या भर॥१॥**



**सङ्गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे सञ्जानाना उपासते॥२॥**

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि॥३॥**

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति॥४॥**

---

## ८.५.१) इदानीं मूलपाठम् अवगच्छाम (सञ्ज्ञानसूक्तम्)

अस्य सूक्तस्य आङ्गिरः ऋषिः, अनुष्टुप् त्रिष्टुप् च छन्दसी, अग्निः संज्ञानः च देवते।

**संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।**
**इळस्पदे समिध्यसे स नो वसून्या भर॥१॥**

**पदपाठः - सम्ऽसम्। इत्। युवसे। वृषन्। अग्ने। विश्वानि। अर्यः। आ॥ इळः। पदे। सम्। इध्यसे। सः। नः। वसूनि। आ। भर॥**

**अन्वयः** - वृषन् अग्ने, अर्यः विश्वानि आ संसम् इत् सम् युवसे इडस्पदे समिध्यसे सः नः वसूनि आ भर।

**व्याख्या-** हे वृषन् कामानां वर्षितः अग्ने अर्यः ईश्वरस्त्वम्। स त्वं विश्वानि सर्वाणि भूतजातानि संसम्। इच्छब्दोऽवधारणे। आ समन्तात् सं युवसे मिश्रयसि। देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि। नान्य इत्यर्थः। किञ्च इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे। एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः (ऐ. ब्रा. १. २८) इति ब्राह्मणम्। तत्र त्वं समिध्यसे ऋत्विग्भिः सन्दीप्यसे। सः तादृशस्त्वं नः अस्माकं वसूनि धनानि आ भर आहर।

**सरलार्थः-** हे अभिष्टफलद अग्ने त्वं प्रभुरूपेण सर्वान् सर्वाभिः दिग्भिः संयोज्य तिष्ठ, यज्ञवेदिमध्ये सम्यग्रूपेण प्रज्वलितो भूत्वा तिष्ठ। स एव त्वम्, अस्माकं कृते धनस्य आहरणं कुरु।

**व्याकरणम् -**

- युवसे- यु-धातोः लटि आत्मनेपदे मध्यमपुरुषैकवचने युवसे इति रूपम्।



- समिध्यसे- सम्पूर्वकात् इन्ध्-धातोः लटि मध्यमपुरुषैकवचने समिध्यसे इति रूपम्। कर्मवाच्ये वर्तते रूपमिदम्।
- भर- भृ-धातोः लोटि मध्यमपुरुषैकवचने भर इति रूपम्।

**सङ्गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे सञ्जानाना उपासते॥२॥**

**पदपाठः - सम्। गच्छध्वम्। सम्। वदध्वम्। सम्। वः। मनांसि। जानताम्। देवाः। भागम्।**
**यथा। पूर्वे। सम्ऽजानानाः। उपऽआसते।**

**अन्वयः** - सं गच्छध्वं सं वदध्वं वः मनांसि सं जानताम्। यथा पूर्वे देवाः सञ्जानानाः भागम् उपासते॥

**व्याख्या-** हे स्तोतारः यूयं सं गच्छध्वम्। संगताः संभूता भवत। तथा सं वदध्वं सह वदत। परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत्। वः युष्माकं मनांसि जानताम्। समानमेकरूपमेवार्थमवगच्छन्तु। यथा पूर्वे पुरातनाः देवाः सञ्जानानाः ऐकमत्यं प्राप्ता हविर्भागम् उपासते यथास्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः।

**सरलार्थः-** (हे स्तुतिकारिणः) (यूयं) मिथः गच्छत, मिथः वदत, युष्माकं मनांसि समानं भवतु। यथा प्राचीनदेवताः मिथः यज्ञभागं गृह्णन्ति स्म।

**व्याकरणम् -**

- गच्छध्वम्- गम्-धातोः लोटि आत्मनेपदे मध्यमपुरुषबहुवचने गच्छध्वम् इति रूपम्।
- वदध्वम्- वद्-धातोः लोटि आत्मनेपदे मध्यमपुरुषबहुवचने वदध्वम् इति रूपम्।
- संजानताम्- सम्पूर्वकात् ज्ञा-धातोः लोटि आत्मनेपदे मध्यमपुरुषबहुवचने संजानताम् इति रूपम्।
- सञ्जानानाः- सम्पूर्वकात् ज्ञा-धातोः शानच्प्रत्यये प्रथमाबहुवचने सञ्जानानाः इति रूपम्।
- उपासते- उपपूर्वकात् आस्-धातोः लटि आत्मनेपदे प्रथमपुरुषबहुवचने उपासते इति रूपम्।

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि॥३॥**

**पदपाठः - समानः। मन्त्रः। सम्ऽइतिः। समानी। समानम्। मनः। सह। चित्तम्। एषाम्॥**
**समानम्। मन्त्रम्। अभि। मन्त्रये। वः। समानेन। वः। हविषा। जुहोमि॥**



**अन्वयः** - एषां मन्त्रः समानः, समितिः समानी, मनः समानम्, चित्तं सह। वः समानं मन्त्रम् अभिमन्त्रये वः समानं हविषा जुहोमि।

**व्याख्या-** पूर्वोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः। एषाम् एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्मका गुप्तभाषणं वा समानः एकविधोऽस्तु। तथा समितिः प्राप्तिरपि समानी एकरूपास्तु। केवलमामक इत्यादिना समानशब्दात् ङीप्। उदात्तनिवृत्तिस्वरेण ङीप् उदात्तत्वम्। तथा मनः मननसाधनमन्तःकरणं चैषां समानम् एकविधमप्यस्तु। चित्तं विचारणं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु। अहं च वः युष्माकं समानम् एकविधं मन्त्रम् अभिमन्त्रये। ऐकविध्याय संस्करोमि। यथा वः युष्माकं स्वभूतेन समानेन। साधारणेन हविषा चरुपुरोडाशादिना अहं जुहोमि। वषट्कारेण हविः प्रक्षेपयामीत्यर्थः॥

**सरलार्थः-** (स्तोतॄणां) एतत् मननं समानं भवतु, एतेषां मेलनं समानं भवतु, हृदयेन सह मनः अपि समानं भवतु। युष्माकं कृते एका एव स्तुतिः उच्चारिता भवतु। अहं युष्माकं कृते एकस्यैव हविषः आहुतिं ददामि।

**व्याकरणम् -**

- समितिः- सम्पूर्वकात् इ-धातोः क्तिन्प्रत्यये प्रथमैकवचने समितिः इति रूपम्।
- अभिमन्त्रये- अभिपूर्वकात् मन्त्र-धातोः लटि आत्मनेपदे उत्तमपुरुषैकवचने अभिमन्त्रये इति रूपम्।
- जुहोमि- हूँ-धातोः लटि उत्तमपुरुषैकवचने जुहोमि इति रूपम्।

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति॥४॥**

**पदपाठः - समानी। वः। आऽकूतिः। समाना। हृदयानि। वः॥ समानम्। अस्तु। वः। मनः। यथा। वः। सुऽसह। असति॥**

**अन्वयः** - वः आकूतिः समानी, वः हृदयानि समानाः, वः मनः समानम् अस्तु यथा वः सुसह असति।

**व्याख्या-** हे ऋत्विग्यजमानाः वः युष्माकम् आकूतिः संकल्पोऽध्यवसायः समानी एकविधोऽस्तु। तथा वः युष्माकं हृदयानि समाना समानान्येकविधानि सन्तु। तथा वः युष्माकं मनः अन्तःकरणम्। प्रत्येकापेक्षया एकवचनम्। यथा वः युष्माकं सुसह शोभनं साहित्यम् असति भवति तथा समानमस्त्वित्यन्वयः। अस्तेर्लटि बहुलं छन्दसि इति शपो लुगभावः॥

**सरलार्थः-** (हे ऋत्विग्यजमानौ) अस्माकं अभिप्रायः समानः भवतु, युष्माकम् अन्तःकरणं समानं भवतु, युष्माकं मनः समानं भवतु। युष्माकं मेलनं शोभनं भवतु (एवमेव प्रार्थना)।



**व्याकरणम्-**

- आकूतिः- आपूर्वकात् कू-धातोः क्तिन्प्रत्यये।
- समाना- समानानि इत्यस्य वैदिकरूपम्।
- असति- अस्-धातोः लटि प्रथमपुरुषैकवचने वैदिकरूपम्।



## पाठगतप्रश्नाः-३

२१. सञ्ज्ञानसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।

२२. वृषन् इत्यस्य कः अर्थः।

२३. युवसे इति रूपं कथं सिद्ध्येत्।

२४. भर इति रूपं कथं सिद्ध्येत्।

२५. वदध्वम् इति कस्मिन् लकारे रूपम्।

२६. समानी इत्यस्य कः प्रत्ययः।

२७. वः इत्यस्य कः अर्थः।

२८. आकूतिः इत्यस्य कः अर्थः।

२९. असति इति रूपं कस्यधातोः।

३०. असति इत्यस्य लौकिकं रूपं किम्।



## पाठसारः

### ८.६) संज्ञानसूक्तस्य सारः

सर्वासाम् इच्छानां पूरयितारम् अग्निदेवमुद्दिश्य प्रकृतेऽस्मिन् संज्ञानसूक्ते प्रार्थ्यते यत् -- सर्वेषाम् अभीष्टप्रदाता यः अग्निदेवः सर्वस्य प्रणिसमूहस्य सम्यग्मेलनं साधयति। किञ्च पृथिव्याम् अर्थात् वेद्यां यः अग्निदेवः प्रज्वालितो भवति। तादृशः अग्निदेवः अस्माकं समेषां कृते धनप्रदानं करोतु इति।

समं हि स्तोतृगणं प्रति उच्यते यत् -- यूयं सर्वैः सह मिलित्वा गच्छथ, मिलित्वा वदथ इति। युष्माकं मनांसि समसमये एव ज्ञानं प्राप्नुयुः। पुरा यथा ज्ञाने समानाः सन्तः देवाः यज्ञभागं स्वीकुर्वन्ति स्म, तथैव यूयम् एकमतयः सन्तः धनानि स्वीकुरुत इति।



अपि च सर्वेषां स्तोतॄणां स्तुतिः एकविधा एव स्यात्। तेषां प्राप्तिरपि एका एव स्यात्। युष्माकं समाना स्तुतिः मया अभिमन्त्र्यते। समं च युष्माकं समानेन हविषा मया हूयते इति।

अन्ते च यजमानान् उद्दिश्य उच्यते यत् -- युष्माकं सङ्कल्पः समानः भवेत्। युष्माकं हृदयं समानं स्यात्। तथा च मनांसि अपि युष्माकं समानानि स्युः। तेन च युष्माकं सहभावः शोभनः अस्तु इति प्रार्थना।



## पाठान्तप्रश्नाः

**(सूर्यसूक्ते)**

३१. सं समिद्युवसे.. इतिमन्त्रं पूरयित्वा व्याख्यानं कुरुत।

३२. सूर्यस्य अश्वस्वरूपं समन्त्रं व्याख्यात।

३३. सूर्यस्वरूपं समन्त्रं व्याख्यात।

३४. अद्या देवा उदिता... इत्यदिमन्त्रं पूरयित्वा व्याख्यात।

३५. तन्मित्रस्य वरुणस्याभिचक्षे... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।

**(संज्ञासूक्ते)**

३६. संज्ञानसूक्तस्य सारं लिखत।

३७. संगच्छध्वम्.. इतिमन्त्रं पूरयित्वा व्याख्यानं कुरुत।

३८. समानो मन्त्रः समितिः... इत्यादिमन्त्रं पूरयित्वा व्याख्यानं कुरुत।

३९. समानी व आकूतिः.... इति मन्त्रं पूरयित्वा व्याख्यानं कुरुत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरपूगः- १ (सूर्यसूक्तम्।)**

१. कुत्सः ऋषिः, त्रिष्टुप् छन्दः, सूर्यः देवता।

२. आश्चर्यकरम्।

३. आ इत्युपसर्गपूर्वकात् प्राधातोः लुङि प्रथमपुरुषैकवचने।

४. स्थाधातोः क्वसुप्रत्यये।

५. कल्याणाः।

६. भद्राः हरितः चित्राः एतग्वाः अनुमाद्यासः नमस्यन्तः।

७. इण्गतौ इति धातोः तन्प्रत्यये एत इति जाते ततः एतपूर्वकात् गम्-धातोः ड्वप्रत्यये।



८. अनुपूर्वकात् मद्-धातोः यति प्रत्यये।

९. देव्य्-धातोः क्यचि शतरि प्रथमाबहुवचने।

१०. इण्धातुः।

**उत्तरपूगः- २ (सूर्यसूक्तम्।)**

११. आदित्यः।

१२. सर्वः।

१३. सप्तम्यर्थे।

१४. अधिकरणार्थे।

१५. ङीप्प्रत्ययः।

१६. युज्-धातोः आत्मनेपदिनः लुङि प्रथमपुरुषैकवचने।

१७. रसहरणशीलाः।

१८. पाधातोः असुन्प्रत्यये।

१९. निपातस्य च।

२०. मम्ह् इति अथवा मह् इति धातोः लिट्मूलकलोट्लकारे प्रथमपुरुषबहुवचने।

**उत्तरपूगः- ३ (संज्ञानसूक्तम्।।)**

१. ऋषिः- आङ्गिरः। छन्दः- १, २, ४ अनुष्टुप्, ३ त्रिष्टुप्। देवता- १ अग्निः, २, ३, ४ संज्ञानः।

२. कामानां वर्षितः।

३. यु-धातोः लटि आत्मनेपदे मध्यमपुरुषैकवचने युवसे इति रूपम्।

४. भृ-धातोः लोटि मध्यमपुरुषैकवचने भर इति रूपम्।

५. लोटि।

६. ङीप्प्रत्ययः।

७. युष्माकम्।

८. आपूर्वकात् कू-धातोः क्तिन्प्रत्यये।

९. अस्-धातोः।

१०. अस्ति।

॥इति अष्टमः पाठः॥



१

# ॥पूषन्सूक्तम् उषस्सूक्तं च॥

## प्रस्तावना

प्रस्तुतेऽस्मिन् पाठे सूक्तद्वयं पठिष्यते।

वेदे पूषन्सूक्तम् (म-६.५४) प्रसिद्धं सूक्तम् अस्ति। पूषा इति शब्दः पोषणार्थकपुष्-धातोः निष्पन्नः। यास्कस्य मतानुसारेण आदित्यस्य रूपं किरणैः पुष्टं भवति तस्मात् सः पूषा इति उच्यते। बृहद्देवताकारशौनकमतानुसारेण पूषा पोषणं कुर्वन् पृथिवीं पोषयति तथा किरणैः अन्धकारं निवारयति। पूषा वस्तुतः सूर्य एव। जनाः कलान्तरेण एनं भिन्नरूपं प्रदाय सूर्येतरवैशिष्ट्यम् आरोपितवन्तः। यत् सर्वं जनानाम् आवश्यकम् अस्ति। अस्य पूषन्सूक्तस्य भरद्वाजः ऋषिः, पूषन्देवता, गयत्री छन्दः। एतत् सूक्तम् आधारीकृत्य सायनाचार्यः भाष्यं रचितवान्। तत् सायनभाष्यमिति नाम्ना विख्यातम्। तस्य भाष्यस्यापि कश्चिद् अंशः प्रदत्तः अस्ति।

द्वितीयं सूक्तं तावत् उषस्सूक्तम् (ऋ.वे.३.५९)। तच्च ऋग्वेदीयम्। ऋग्वेदीये उषस्सूक्ते २०सूक्ताः सन्ति। तत्र उषादेव्याः स्तुतिः विहिता। उषादेव्याः नाम प्रायः २०० सूक्तेषु उल्लिखितम् अस्ति। उषाशब्दः प्रकाशार्थकाद् वस्-धातोः निष्पन्नः। एवम् उषाशब्दस्य अर्थः प्रकाशिका इति। उषादेव्याः वर्णनसमये वैदिकाः ऋषयः स्वकाव्यस्य प्रतिभां दर्शितवन्तः। ऋग्वेदीयस्य उषस्सूक्तस्य वामदेवः ऋषिः, त्रिष्टुप् छन्दः, उषा देवता। तृतीयमण्डले विद्यमानं सूक्तम् नवपञ्चाशम् (३.५९)।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- पूषन्सूक्तं ज्ञातुं शक्नुयात्।
- पूषन्देवतायाः स्वरूपं ज्ञातुं शक्नुयात्।
- उषादेवीविषयकं ज्ञातुं शक्नुयात्।
- उषादेव्याः माहात्म्यं ज्ञातुं प्रभवति।
- उषादेव्याः विषये विशिष्टं ज्ञानं प्राप्तुं शक्नुयात्।
- मन्त्राणां संहितापाठं ज्ञातुं शक्नुयात्।



- सूक्तस्थानां मन्त्राणां पदपाठं ज्ञातुं शक्नुयात्।
- स्वयमेव मन्त्राणां व्याख्यानं कर्तुं शक्नुयात्।
- स्वयमेव मन्त्राणाम् अन्वयादिकं कर्तुं पारयेत्।
- मन्त्रस्थशब्दानां व्याकरणं ज्ञातुं प्रभवेत्।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- लौकिकवैदिकयोः शब्दयोः भेदं ज्ञातुं शक्नुयात्।

## ॥पूषन्सूक्तम्॥

## १.१) इदानीं मूलपाठं पठाम (पूषन्सूक्तम्)

**वयमु त्वा पथस्पते रथं न वाजसातये।**
**धिये पूषन्नयुज्महि॥१॥**

**अभि नो नर्यं वसु वीरं प्रयतदक्षिणम्।**
**वामं गृहपतिं नय॥२॥**

**अदित्सन्तं चिदाघृणे पूषन्दानाय चोदय।**
**पणेश्चिद्वि म्रदा मनः॥३॥**

**वि पथो वाजसातये चिनुहि वि मृधो जहि।**
**साधन्तामुग्र नो धियः॥४॥**

**परि तृन्धि पणीनामारया हृदया कवे।**
**अथेमस्मभ्यं रन्धय॥५॥**

**वि पूषन्नारया तुद पणेरिच्छ हृदि प्रियम्।**
**अथेमस्मभ्यं रन्धय॥६॥**

**आ रिख किकिरा कृणु पणीनां हृदया कवे।**
**अथेमस्मभ्यं रन्धय॥७॥**



**यां पूषन्ब्रह्मचोदनीमारां विभर्ष्याघृणे।**
**तया समस्य हृदयमा रिरव किकिरा कृणु॥८॥**

**या ते अष्ट्रा गोओपशाघृणे पशुसाधनी।**
**तस्यास्ते सुम्नमीमहे॥९॥**

**उत नो गोषणिं धियमश्वसां वाजसामुत।**
**नृवत्कृणुहि वीतये॥१०॥**

---

## ९.१.१) इदानीं मूलपाठम् अवगच्छाम (पूषन्सूक्तम्)

**वयमु त्वा पथस्पते रथं न वाजसातये।**
**धिये पूषन्नयुज्महि॥१॥**

**पदपाठः- वयम्। ओं (ॐ) इति। त्वा। पथः। पते। रथम्। न। वाजऽसातये। धिये। पूषन्। अयुज्महि॥१॥**

**अन्वयः-** पथस्पते पूषन्, वयम् उ वाजसातये धिये रथं न त्वा अयुज्महि।

**व्याख्या-** हे पथस्पते मार्गस्य पालयितः पूषन् धिये कर्मार्थं वाजसातये अन्नस्य लाभाय च वयं न युद्धे रथमिव त्वा त्वाम् अयुज्महि युज्महि। अस्मदभिमुखं कुर्मः। उ इति पूरकः।

**सरलार्थः-** हे मार्गरक्षक पूषन् अस्माभिः धनप्राप्त्यर्थं तथा कर्मसम्पादनाय त्वं नियोजितः।

**व्याकरणम् -**

- पथस्पते-पथः मार्गस्य पते सम्बोधने एकवचने।
- सातये-सन्-धातोः क्तिनि साति चतुर्थ्यैकवचने।
- अयुज्महि-युजिर् इतिधातोः लुङि उत्तपुरुषबहुवचने।
- पूषन्-पुष्-धातोः कनिन्प्रत्यये सम्बोधने एकवचने।

**अभि नो नर्यं वसु वीरं प्रयतदक्षिणम्।**
**वामं गृहपतिं नय॥२॥**



**पदपाठः- अभि। नः। नर्यम्। वसु। वीरम्। प्रयतऽदक्षिणम्। वामम्। गृहऽपतिम्। नय॥२॥**

**अन्वयः-** नर्यं वसु वीरं प्रयतदक्षिणं वामं गृहपतिं अभि नः नय।

**व्याख्या-** हे पूषन् नर्यं नृभ्यो हितं वसु धनम् अभि प्राप्तुं वीरं दारिद्र्यस्य विशेषेण ईरयितारं गमयितारं पूर्वमन्येभ्योऽपि दत्तधनम्। यद्वा। प्रयतं शुद्धं दक्षिणं धनं यस्य तादृशम्। वामं वननीयमेवंविधं गृहपतिं गृहस्थं नः अस्मान् नय प्रापय।

**सरलार्थः-** हे पूषन् मनुष्याणां कृते धनं प्रति वीरं दक्षिणाप्रदं प्रशंसनीयगृहस्थं प्रति अस्मान् नय।

**व्याकरणम् -**

- नर्यम्-नृशब्दात् यत्प्रत्यये, नृभ्यः हितम्।
- वामम्-वन्-धातोः मनिन्प्रत्यये।
- प्रयत- प्रपूर्वकात् यत्-धातोः क्तप्रत्यये।

**अदित्सन्तं चिदाघृणे पूषन्दानाय चोदय।**
**पणेश्चिद्वि म्रदा मनः॥३॥**

**पदपाठः- अदित्सन्तम्। चित्। आघृणे। पूषन्। दानाय। चोदय। पणेः। चित्। वि। म्रद। मनः॥ ३॥**

**अन्वयः-** आघृणे पूषन्, अदित्सन्तं दानाय चोदय, पणेः चित् मनः वि म्रद।

**व्याख्या-** हे आघृणे आगतदीप्ते पूषन् अदित्सन्तं चित् दातुमनिच्छन्तमपि पुरुषं दानाय अस्मद्दानार्थं चोदय प्रेरय। पणेश्चत् वणिजो ऽपि वार्धुषिकस्य लुब्धस्यापि मनः हृदयं वि म्रद दानार्थं मृदूकुरु॥

**सरलार्थः-** हे दीप्तियुक्त पूषन् दातुम् अनिच्छन्तं दानाय प्रेरय। वणिजः अपि मनः विशेषरूपेण कोमलं कुरु।

**व्याकरणम् -**

- अदित्सन्तम्- सन्नन्तदा-धातोः शतृप्रत्यये दित्सत् इति रूपे नञ्समासे द्वितीयैकवचने।
- चोदय-चुद्-धातोः यणि लोटि मध्यमपुरुषैकवचने।
- विम्रद-विपूर्वकात् म्रद्-धातोः लोटि मध्यमपुरुषैकवचने।



**वि पथो वाजसातये चिनुहि वि मृधो जहि।**
**साधन्तामुग्र नो धियः॥४॥**

**पदपाठः- वि। पथः। वाजऽसातये। चिनुहि। वि। मृधः। जहि। साधन्ताम्। उग्र। नः। धियः॥**

**अन्वयः-** उग्र, वाजसातये पथः विचिनुहि, मृधः वि जहि, नः धियः साधन्ताम्।

**व्याख्या-** हे उग्र उद्गूर्णबल पूषन् पथः मार्गान् वाजसातये अन्नलाभाय वि चिनुहि। शोधितान् कुरु। ये पथिभिर्गता धनं लभेमहि तादृशान् पथः पृथक्कुर्वित्यर्थः। मृधः बाधकान् तस्करादींश्च वि जहि बाधस्व। तथा नः अस्माकं धियः कर्माणि अन्नलाभार्थं क्रियमाणानि साधन्तां सिध्यन्तु। सफलानि भवन्तु।

**सरलार्थः-** हे पूषन् धनस्य तथा अन्नस्य प्राप्त्यर्थं मार्गं विविधप्रकारेण परिष्कुरु। तथा उत्पन्नान् बाधकान् विविधप्रकारेण नाशय। अस्माकं कर्मसिद्धिं कुरु।

**व्याकरणम् -**

- चिनुहि- चि-धातोः लोटि मध्यमपुरुषैकवचने।
- मृधः-मृध्-धातोः क्विपि द्वितीयाबहुवचने।
- जहि-हन्-धातोः लोटि मध्यमपुरुषैकवचने।
- साधन्ताम्-आत्मनेपदिनःसाध्-धातोः लोटि मध्यमपुरुषबहुवचने।

**परि तृन्धि पणीनामारया हृदया कवे।**
**अथेमस्मभ्यं रन्धय॥५॥**

**पदपाठः- परि। तृन्धि। पणीनाम्। आरया। हृदया। कवे। अथ। ईम्। अस्मभ्यम्। रन्धय॥**

**अन्वयः-** कवि, आरया पणीनां हृदया परि तृन्धि, अथ ईन् अस्मभ्यं रन्धय।

**व्याख्या-** हे कवे प्राज्ञ पूषन् पणीनां वणिजां लुब्धानां हृदया हृदयानि कठिनानि आरया। सूक्ष्मलोहाग्रो दण्डः प्रतोद इति आरा इति चाख्यायते। तथा परि तृन्धि परिविध्य। हृद्गतं काठिन्यमपनयेत्यर्थः। अथ अनन्तरम् ईम् एनान् पणीन् अस्मभ्यं रन्धय वशीकुरु॥

**सरलार्थः-** हे प्राज्ञ पूषन् आरया वणिजः हृदयं परितृन्धि। ततः तम् अस्माकं वशे स्थापय।

**व्याकरणम् -**

- तृन्धि-तृद्-धातोः लोटि मध्यपुरुषैकवचने।
- रन्धय-रध्-धातोः लोटि मध्यमपुरुषैकवचने।
- हृदया-हृदयशब्दस्य द्विदीयाबहुवचने वैदिकं रूपम्। लोके तु हृदयानि।



- आरया-ऋ-धातोः अणि टापि तृतीयैकवयने।



## पाठगतप्रश्नाः- १

१. पूषन्सूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।
२. उ इति किमर्थम्।
३. पथस्पते इति रूपं कथं सिद्ध्येत्।
४. सातये इति रूपं कथं सिद्ध्येत्।
५. अयुज्महि इति रूपं कथं सिद्ध्येत्।
६. पूषन् इति रूपं कथं सिद्ध्येत्।
७. नर्यम् इत्यस्य कः अर्थः।
८. प्रयतदक्षिणम् इत्यस्य विग्रहः कः।
९. नर्यम् इति रूपं कथं सिद्ध्येत्।
१०. आघृणे इत्यस्य कः अर्थः।
११. प्रयतम् इत्यस्य कः अर्थः।
१२. तृन्धि इति रूपं कथं सिद्ध्येत्।
१३. चिनुहि इति रूपं कथं सिद्ध्येत्।
१४. मृधः इत्यस्य कः अर्थः।
१५. हृदया इत्यस्य लौकिकं रूपं किम्।

## ९.१.२) इदानीं मूलपाठम् अवगच्छाम (पूषन्सूक्तम्)

**विपूषन्नारया तुद पणेरिच्छ हृदि प्रियम्।**
**अथेमस्मभ्यं रन्धय॥६॥**

**पदपाठः- वि। पूषन्। आरया। तुद। पणेः। इच्छ। हृदि। प्रियम्॥ अथ। ईम्। अस्मभ्यम्। रन्धय॥६॥**

**अन्वयः-** पूषन्, आरया वितुद, पणेः (हृदि)प्रियम् इच्छ, अथ ईम् अस्मभ्यं रन्धय॥



**व्याख्या-** हे पूषन्, आरया प्रतोदेन पणेः वणिजः हृदयं वि तुद विविध्य। तस्य पणेः हृदि हृदये प्रियम् अस्मभ्यमनुकूलं धनम् इच्छ दातव्यमितीच्छां जनय। अथ अनन्तरनम् ईम् एनान् रन्धय वशीकुरु॥

**सरलार्थः-** हे पूषन् स्वस्य आरायाः कृते लोभिनः वनिजः हृदयं विशेषप्रकारेण पीडय। वणिजः हृदयस्य यत् प्रियं तत् इच्छ। ततः तम् अस्माकं वशे स्थापय।

**व्याकरणम् -**

- तुद-तुद्-धातोः लोटि मध्यमपुरुषैकवचने।
- इच्छ-इष्-धातोः लोटि मध्यमपुरुषैकवचने।

**आ रिख किकिरा कृणु पणीनां हृदया कवे।**
**अथेमस्मभ्यं रन्धय॥७॥**

**पदपाठः- आ। रिख। किकिरा। कृणु। पणीनाम्। हृदया। कवे॥ अथ। ईम्। अस्मभ्यम्। रन्धय॥७॥**

**अन्वयः-** कवे, पणीनां हृदया आ रिख, किकिरा कृण उ, अथ ईम् अस्मभ्यं रन्धय।

**व्याख्या-** हे कवे प्राज्ञ पूषन् पणीनां वणिजां हृदया हृदयानि आ रिख आलिख। च किकिरा कीर्णानि प्रशिथिलानि कृणु कुरु। मृदूनि कुर्वित्यर्थः। अन्यद्गतम्।

**सरलार्थः-** हे प्राज्ञ पूषन् वणिजः हृदयम् अनुकूलीकुरु। किञ्च कोमलमपि कुरु। ततः तम् अस्माकं वशे स्थापय।

**व्याकरणम् -**

- रिख-रिख्-धातोः लोटि मध्यमपुरुषैकवचने।
- किकिरा- कृ-धातोः अचि द्वितीयाबहुवचने नपुंसके वैदिकं रूपम्। लोके तु किकिराणि।
- कृणु-कृ-धातोः लोटि मध्यमपुरुषैकवचने।(कुरु इत्यस्य वैदिकरूपम् -कृणु)।

**यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणे।**

**तया समस्य हृदयमा रिख किकिरा कृणु॥८॥**

**पदपाठः- याम्। पूषन्। ब्रह्मऽचोदनीम्। आराम्। बिभर्षि। आघृणे॥ तया। समस्य। हृदयम्। आ। रिख। किकिरा। कृणु॥८॥**

**अन्वयः-** आघृणे पूषन्, ब्रह्मचोदनीयम् आरां विभर्षि तया समस्य हृदयं आरिख, किकिरा कृणु।



**व्याख्या-** हे आघृणे आगतहीप्ते पूषन् ब्रह्मचोदनीं ब्रह्मणोऽन्नस्य प्रेरयत्रीं याम् आरां बिभर्षि हस्ते धारयासि तथा समस्य सर्वस्य लुब्धजनस्य हृदयम् आ रिख आलिख। किकिरा किकिराणि कीर्णानि प्रशिथिलानि च कृणु कुरु।

**सरलार्थः-** हे दीप्तिमय पूषन् त्वम् अन्नेन प्रेरितां याम् आरां धारयसि तया आरया सर्वेषां लोकानां हृदयं कोमलीकुरु।

**व्याकरणम् -**

- ब्रह्मचोदनीम्-ब्रह्मोपपदात् चुद्-धातोः ल्युटि ङीपि।
- विभर्षि-विपूर्वकात् भृ-धातोः लटि मध्यमपुरुषैकवचने।

**या ते अष्ट्रा गोओपशाघृणे पशुसाधनी।**
**तस्यास्ते सुम्नमीमहे॥९॥**

**पदपाठः- या। ते। अष्ट्रा। गोऽओपशा। आघृणे। पशुऽसाधनी॥ तस्याः। ते। सुम्नम्। ईमहे॥ ९॥**

**अन्वयः-** आघृणे, ते या गोओपशा पशुसाधनी अष्ट्रा ते तस्याः सुम्नम् ईमहे।

**व्याख्या-** हे आघृणे आगतदीप्ते पूषन् ते त्वदीया या अष्ट्रा आरा गोओपशा। उपदेशेरते इत्योपशाः। गाव ओपशा यस्यास्तादृशी। अत एव पशुसाधनी पशूनां साधयित्री भवति ते त्वदीयायाः तस्याः सम्बन्धि सुम्नं सुखम् ईमहे याचामहे।

**सरलार्थः-** हे दीप्तिमय पूषन् तव गोः पार्श्वे शयनकारिका आरा अस्ति। किञ्च सा पशूनां कुशलेन प्रापयिका। वयं तव आरायाः सुखम् इच्छामः।

**व्याकरणम् -**

- अष्ट्रा-अश्-धातोः ष्ट्रनि टापि।
- गोओपशा-गवाम् ओपशा इति तत्पुरुषः।
- पशुसाधनी- पशोः साधनी। साध्-धातोः ल्युटि ङीपि साधनीति रूपम्।
- सुम्नम्-सुपूर्वकात् म्ना-धातोः कप्रत्यये द्वितीयैकवचने।
- ईमहे-आत्मनेपदिनः ईङ्-धातोः उत्तमपुरुषबहुवचने।

**उत नो गोषणिं धियमश्वसां वाजसामुत।**
**नृवत्कृणुहि वीतये॥१०॥**

**पदपाठः- उत। नः। गोऽसनिम्। धियम्। अश्वऽसाम्। वाजऽसाम्।उत॥ नृऽवत्। कृणुहि। वीतये॥१०॥**

**अन्वयः-** नः गोषणिम् उत अश्वसां उत वाजसां धियं नृवत् वीतये कृणुहि।

**व्याख्या-** उत अपि व हे पूषन् गोषणिं गवां सनित्रीम् अस्वसाम् अश्वानां सनित्रीं वाजसां वाजानामन्नानां सनित्रीम् उत अपि च नृवत् नृवतीं यद्वा नृणां वनीत्रीं दात्रीमेवंभूतां धियं बुद्धिं कर्म वा नः अस्माकं वीतये खादनायोपभोगार्थं कृणुहि कुरु।

**सरलार्थः-** हे पूषन् अस्माकं गवां प्रापिकां, अश्वानां प्रापिकां, अन्नानां प्रापिकां च अभिलाषां राजतुल्यानन्दाय पूर्णं कुरु।

**व्याकरणम् -**

- गोषणिम्-गोपूर्वकषणु-धातोः इप्रत्यते।
- अश्वसाम्, वाजसाम्-षष्ठीबहुवचने वैदिकं रूपम्।लोके तु अश्वानाम्, वाजानाम्।
- नृवत्-नृशब्दात् मतुप्प्रत्यये।
- वीतये-वी-धातोः क्तिन्प्रत्यये वीति, तस्य चतुर्थ्यैकवचने।
- कृणुहि-कृ-धातोः लोटि मध्यमपुरुषैकवचने वैदिकं रूपम्। लोके तु कुरु इति।



## पाठगतप्रश्नाः-२

१६. आरा इत्यस्य कः अर्थः।

१७. पणिः इत्यस्य कः अर्थः।

१८. वि तुद इत्यस्य कः अर्थः।

१९. किकिरा इत्यस्य कः अर्थः।

२०. किकिरा इत्यस्य लौकिकं रूपं किम्।

२१. किकिरा इति रूपं कथं सिद्ध्येत्।

२२. कृणु इति रूपस्य लौकिकं रूपं किम्।

२३. ब्रह्मचोदनीम् इति रूपं कथं सिद्ध्येत्।

२४. अष्ट्रा इति रूपं कथं सिद्ध्येत्।

२५. गोओपशा इति रूपं कथं सिद्ध्येत्।

२६. सुम्नम् इति रूपं कथं सिद्ध्येत्।

२७. ईमहे इति रूपं कथं सिद्ध्येत्।

२८. सुम्नम् इत्यस्य कः अर्थः।



२९. वीतये इत्यस्य कः अर्थः।

३०. कृणुहि इति रूपस्य लौकिकं रूपं किम्।

## १.२) पूषदेवस्य स्वरूपम्

ऋग्वेदे वर्णिताः सर्वे अपि देवाः प्राकृतिकशक्तिभावनया कल्पिताः। परन्तु पूषदेवस्य विषये तथा किमपि न श्रूयते येन सः प्राकृतिकशक्तेः कल्पितः इति वक्तुं शक्यते। पूषा-इत्ययं शब्दः पुष्-धातोः निष्पन्नः, पुष्धातोः अर्थः पोषणम् इति। अतः यः पुष्टिदाता पोषकः च स एव पूषा-शब्देन उच्यते। अस्माकं जगति अन्तरिक्षस्थानीयः सूर्यदेव एव सर्वोत्तमः पोषकः। सः यथा प्राणिनां जीवनशक्तेः पोषकः, तथैव पार्थिवसम्पदः वृद्धये सहायकः पार्थिवसम्पत्परिपोषको वा। सूर्यस्य तथाविधं स्वरूपम् एव पूषरूपेण वैदिकैः ऋषिभिः कल्पितम्। अतः पूषा द्युस्थानीयः देवः।

प्राचीनाः आचार्याः अपि पूषदेवस्य पुष्टिप्रदायकरूपविषये ज्ञानवन्तः आसन्। निरुक्तकारः यास्कमहर्षिः तस्य निरुक्तग्रन्थे पूषाशब्दस्य व्युत्पत्तिप्रदर्शनावसरे पूषदेवस्य पुष्टिप्रदायकं रूपम् एव वर्णयति। तथा च उक्तं यास्केन- 'यद्रश्मिपोषं पुष्यति तत् पूषा भवति'।(१२.७) इति। अपरत्र सः पूषदेवम् आदित्यरूपेण एव वर्णयति। तथाहि उक्तं तेन- 'सर्वेषां भूतानां गोपायितादित्यः' (७.९) इति। अपरस्मिन् वैदिकग्रन्थे शौनकेन उक्तं-

'पूष्यन् क्षितिं पोषयति प्रणुदन् रश्मिभिस्तमः।

तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः।।'(२.६३)। इति।

परस्मिन् काले वेदव्याख्याकर्ता सायणः पूषदेवम् उद्दिश्य उवाच- 'जगत्पोषकः पृथिव्यभिमानिदेवः'। इति। ऋग्वेदेषु साकल्येन अष्टसु सूक्तेषु पूषदेवस्य स्तुतिः कृता। सः आघृणिः अर्थाद् जाज्वल्यमानः। सः कपर्दी अर्थात् जटाजालयुक्तः श्मश्रुविशिष्टः। हेमवर्णीयः तीक्ष्णशरः बाणश्च तस्य प्रधानम् आयुधम्। तस्य वाहनम् अजः। तथाहि उक्तं- 'अजाः पूष्णश्च वाजिन'(बृहद्देवता८.१४१)। इति। घृतमिश्रितः यवस्य सक्तुः तस्य प्रधानं खाद्यम्। ब्राह्मणसाहित्ये उच्यते दन्तहीनत्वात् सः चूर्णं खाद्यद्रव्यं भक्षति स्म इति। तथाहि शुक्लयजुर्वेदस्य शतपथब्राह्मणे सः अदन्तकः आसीद् इति उच्यते। तद्विषयकम् एकम् उपाख्यानम् अपि प्राप्यते।

ऋग्वेदीयसमाजः कृषिप्रधानः आसीत्। कृषिक्षेत्रे च पशूनाम् उपयोगः अधिकः आसीत्। तस्मात् पशुपालनम् अपि जीविकारूपेण ते गृहीतवन्तः। पूषा ऋग्वेदे पशुपालकानाम् अभीष्टः देवः इति उच्यते। गोसम्पद् एव श्रेष्ठा सम्पद् आसीदिति श्रूयते। अतः तासां रक्षणाय जागरूकाः आसन् सर्वे। अतः ते पूषदेवं मन्त्रेषु प्रार्थयन्ति यत् हे पूषन् अस्माकं गोधनं सर्वदा सुरक्षितं भवेत्, व्याघ्रादीनां पशूनां त्रासात् मुक्तं भवेत्, कूपपाताद् रक्षितं भवेदिति। नूतनतृणक्षेत्रस्य अन्वेषणाय ते देशान्तरं गच्छन्ति स्म। तदा गमनसमये ते अस्यैव देवस्य स्तुतिं कुर्वन्ति स्म यतो हि पूषदेवः तेषां पथप्रदर्शकः रक्षकश्च। सः पशुपालकान् विघ्नरहितेषु मार्गेषु प्रवर्तयति, हिंस्रजन्तूनां दुष्टमानवानां च हस्ताद् रक्षयति। सः देवः तृणयुक्तेषु क्षेत्रेषु

तान् प्रवर्तयन्ति। यदा च पशवः ह्रियन्ते तदा स एव तेषां पशूनां प्रापकः। ऋग्वेदे विशिष्टपथप्रदर्शकरूपेणैव तस्य देवस्य आगमनम्। तदर्थं मृतपुरुषाणां परलोकगमनसमये पथप्रदर्शकरूपेण स एव हि आगच्छति इति ऋग्वेदमन्त्रेषु श्रूयते।

एवम् अनेकेषु कर्मसु तस्य देवस्य प्राधान्यं परिपश्यन्तः ऋषयः वेदमन्त्रैः तस्य स्तुतिं विहितवन्त इति शम्।

## १.३) पूषन्सूक्तस्य सारः

ऋग्वेदसंहितायाः षष्ठमण्डलस्य चतुःपञ्चाशं सूक्तं हि पूषन्सूक्तम्। अस्य सूक्तस्य ऋषिः भारद्वाजः, छन्दः चत्वारिंशदक्षरोपेता गायत्री, देवता च पूषा। अत्र दश मन्त्राः सन्ति। यः पुरुषः नष्टधनम् अधिगन्तुम् इच्छति सः अस्य सूक्तस्य जपं कुर्याद् इति आश्वलायनगृह्यसूक्ते अस्य सूक्तस्य विनियोगः उपलभ्यते। तथाहि आम्नातम् आश्वलायनगृह्यसूत्रे- 'संपूषन् विदुषा इति नष्टमधिजिगमिषन् मूलहो वा'। इति।

हे मार्गरक्षक पूषन् वयं धनप्राप्त्यर्थं तथा कर्मसम्पादनार्थं तव नियोगं कृतवन्तः। त्वम् अस्माकं पुष्टिं विधेहि। त्वं तस्य पुरुषस्य सन्धानम् अस्मभ्यं ददातु यः सरलेन उपायेन नष्टद्रव्यप्राप्त्युपायविषये उपदिशति, यश्च अस्माकं नष्टं धनम् कुत्र अस्ति इति दर्शयिष्यति। हे पुषन् देव अस्मभ्यम् अनुग्रहं कुर्वन्तु यथा वयं तस्य जनस्य सङ्गं प्राप्नुयाम यः जनः जानाति अस्माकं नष्टाः गावः पशवश्च कुत्र अवस्थानं कुर्वन्ति इति। स एव अस्मभ्यं तेषां गृहानां विषये बोधयति यत्र अस्माकं हृताः गावः सन्ति।

पूषन्-देवस्य आयुधं हि चक्रम्। तत् चक्रम् अविनाशि अस्ति अर्थात् तस्य चक्रस्य विनाशं कर्तुं नैव शक्यते। अस्य चक्रस्य कोशः अपि न हीयते। अस्य चक्रस्य या धारा सा व्यथां न प्राप्नोति अर्थात् न कुण्ठीभवति। तेनैव चक्रेण तान् चौरान् विनाशयतु ये अस्मदीयं धनं लुण्ठितवन्तः। तथाहि आम्नातं पूषन्सूक्ते-

'पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते।

नो अस्य व्यथते पविः'।।३। इति।

यः पूषदेवाय हविः ददाति अर्थात् हविर्द्रव्यैः यः अस्य पूजां करोति तं यजमानं पूषा कदापि न विस्मरति। अपि च पूषदेवः तस्मै सर्वप्रथमं सर्वविधं धनं प्रददाति। तथाहि आम्नातं पूषन्सूक्ते-

'यो अस्मै हविषाविधन्न तं पूषापि मृष्यते।

प्रथमो विन्दते वसु'।।इति।४।

हे पूषन्, अस्माकं पशूनां रक्षणाय सर्वदा तेषां पृष्ठतः गच्छतु। अस्माकम् अश्वान् चौरस्य हस्तात् अवतु, अस्मभ्यं च धनं प्रददातु। तथाहि आम्नातं- 'पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजं सनोतु नः'।।इति। यः सोमरसस्य पेषणं करोति तस्य यजमानस्य गवां पृष्ठतः गच्छतु तासां रक्षां च करोतु। अपि च मत्सदृशाः ये तव स्तोतारः तेषां याः गावः तासां गवां पृष्ठतः गच्छतु। तासां रक्षां च विदधातु। तथाहि आम्नातं पूषन्सूक्ते-



'पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः।

अस्माकं स्तुवतामुप'।।इति।

अस्माकं याः गावः सन्ति तासां कापि क्षतिः नाशो वा मा भवतु, कस्या अपि गोः पीडा न भवतु। कापि गौः कूपे पतिता सती मृता मा भवतु। अतः त्वम् अस्माकं विद्वेषरहिताभिः गोभिः सह सायंकाले आगच्छ। तथाहि आम्नातं पूषन्सूक्ते-

माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे।

अथारिष्टाभिरा गहि।। इति।

यः पूषा अस्माकं प्रार्थनां श्रृणोति, दरिद्रतां च दूरीकरोति, यद्धनं कदापि नष्टं न भवति तादृशः यः पूषदेवः, अपि च यः सर्वेषाम् ईशः अर्थात् शासनकर्ता तथाभूतस्य पूषदेवस्य वयं प्रार्थनां कुर्मः। तथाहि आम्नातं पूषन्सूक्ते-

'श्रृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम्।

ईशानं राय ईमहे'।।इति।

हे पोषक देव तव कार्ये निरताः वयं कदापि दुःखं कष्टं वा न प्राप्नुमः। वयं सर्वदा तव स्तोतारः स्मः। तव दक्षिणं हस्तं मां परितः प्रसारयतु, मम यद्गोधनं नष्टम् अस्ति तद् मह्यं प्रत्यर्पय अर्थात् नष्टं गोधनं पुनः आगच्छतु इति यजमानस्य अन्तिमा प्रार्थना। तथाहि आम्नातं-

'परि पूषा परस्ताद्धस्तं दधातु दक्षिणम्।

पुनर्नो नष्टमाजतु'।।इति।

एवं पूषन्सूक्तस्थाः ये दश ऋक्मन्त्राः तेषां सारः अतिसंक्षेपेण प्रस्तुत इति शम्।



## पाठसारः - १

अस्मिन् पाठे सूक्तद्वयं विद्यते। तयोः प्रथमं तावत् पूषन्सूक्तम्। अस्मिन् पूषन्सूक्ते दश मन्त्राः सन्ति। दशमन्त्रैः सर्वत्र प्रार्थना एव विहिता। तत्र आदिमे मन्त्रे धनप्राप्त्यर्थं कर्मसम्पादनाय उक्तम्। द्वितीये मन्त्रे धनवन्तं बलवन्तं प्रशंसनीयं गृहस्थं प्रति नयनाय उक्तम्। तृतीये मन्त्रे दातुम् इच्छन्तं जनं दानाय प्रेरय इति प्रार्थितम्। चतुर्थे मन्त्रे धनप्राप्त्यर्थं मार्गे विद्यमानं शत्रुं नाशय इति प्रार्थितम्। पञ्चमे मन्त्रे वणिजः हृदयस्य चतुर्षु दिक्षु कर्तनाय प्रार्थितम्। षष्ठे मन्त्रे पूर्वमन्त्रवत् तथैव उक्तम्। सप्तमे मन्त्रे वणिजः हृदयस्य कोमलीकरणाय प्रार्थितम्। अष्टमे मन्त्रे आरया सर्वेषां जनानां हृदयस्य कोमलीकरणाय प्रार्थितम्। नवमे मन्त्रे आरायाः सुखप्राप्त्यर्थं प्रार्थितम्। दशमे मन्त्रे गवां प्रापिकायाः, अश्वानां प्रापिकायाः, अन्नानां प्रापिकायाः च अभिलाषायाः राजतुल्यानन्दाय पूर्णकरणाय प्रार्थितम्। एवं सम्पूर्णे पूषन्सूक्ते प्रायः वणिजः हृदयस्य कोमलीकरणाय तथा धनप्राप्त्यर्थं बहुधा प्रार्थितम्।



## उषस्सूक्तम्

### ९.४) अधुना उषस्सूक्तस्य (ऋ.वे.३.५९) मूलपाठ उपन्यस्यते।

उषो वाजेन वाजिनि प्रचेताः
स्तोमं जुषस्व गृणतो मघोनि।
पुराणी देवि युवतिः पुरन्धि-
रनुव्रतं चरसि विश्ववारे॥१॥

उषो देवमर्त्या वि भाहि
चन्द्ररथा सूनृता ईरयन्ती।
आ त्वा वहन्तु सुयमासो अश्वा
हिरण्यवर्णां पृथुपाजसो ये॥२॥

उषः प्रतीची भुवनानि विश्वो-
र्ध्वा तिष्ठस्यमृतस्य केतुः।
समानमर्थं चरणीयमाना
चक्रमिव नव्यस्या ववृत्स्व॥३॥

अव स्यूमेव चिन्वती मघो-
न्युषा याति स्वसरस्य पत्नी।
स्वर्जनन्ती सुभगा सुदंसा
आन्ताद्दिवः पप्रथ आ पृथिव्याः॥४॥

अच्छा वो देवीमुषसं विभातीं
प्र वो भरध्वं नमसा सुवृक्तिम्।
ऊर्ध्वं मधुधा दिवि पाजो अश्रे-
त्प्र रोचना रुरुचे रण्वसंदृक्॥५॥



ऋतावरी दिवो अर्कैरबोध्या
रेवती रोदसी चित्रमस्थात्।
आयतीमग्न उषसं विभातीं
वाममेषि द्रविणं भिक्षमाणः॥६॥

ऋतस्य बुध्न उषसामिषण्यन्-
वृषा मही रोदसी आ विवेश।
मही मित्रस्य वरुणस्य माया
चन्द्रेव भानुं वि-दधे पुरुत्रा॥७॥

### ९.४.१) इदानीं मूलपाठम् अवगच्छाम (उषस्सूक्तम्)

उषो वाजेन वाजिनि प्रचेताः
स्तोमं जुषस्व गृणतो मघोनि।
पुराणी देवि युवतिः पुरन्धि-
रनुव्रतं चरसि विश्ववारे॥१॥

**पदपाठः- उषः। वाजेन। वाजिनि। प्रऽचेताः। स्तोमम्। जुषस्व। गृणतः॥ मघोनि। पुराणी। देवि। युवतिः। पुरम्ऽधिः। अनु। व्रतम्। चरसि। विश्ववारे॥**

**अन्वयः-** वाजेन वाजिनि मघोनि उषः प्रचेताः गृणतः स्तोमं जुषस्व। विश्ववारे देवि पुराणी युवतिः पुरंधिः व्रतम् अनुचरसि।

**व्याख्या-** वाजेन वाजिनि अन्नेनान्नवति। मघोनि धनवति। हे उषः प्रचेताः प्रकृष्टज्ञानवती सती त्वं गृणतः त्वं स्तोत्रं कुर्वतः स्तोतुः स्तोमं स्तोत्रं जुषस्व सेवस्व। यद्वा वाजेन हविर्लक्षणेनान्नेन सह स्तोमं जुषस्व इति सम्बन्धः। विश्ववारे विश्वैः सर्वैः वरणीये हे उषः देवि पुराणी पुरातनी। युवतिः इत्युपमा। तद्वत् शोभमाना। पुरंधिः पुरु बहुधीः स्तोत्रलक्षणं कर्म यस्याः सा बहुस्तोत्रवती। पुरंधिर्बहुधीः इति यास्कः, पुरन्धिः शोभमाना वा। एवंविधगुणोपेता त्वम् अनुव्रतं यज्ञकर्माभिलक्ष्य चरसि यष्टव्यतया वर्तसे॥



**सरलार्थः-** अन्नद्वारा अन्नवति धनवति हे उषे! प्रकृष्टज्ञानसम्पन्ना भवती स्तूयमानस्य जनस्य प्रार्थनां स्वीकरोतु। हे सर्वैः इष्यमाणे देवि उषे! पुरातनी युवतिः इव नानाप्रकारैः स्तूयमाना भवती इमं यज्ञं लक्षीकृत्य विचरणं करोतु।

**व्याकरणविमर्शः-**

- प्रचेताः- प्रपूर्वकात् चित्-धातोः तृच्प्रत्यये प्रथमाबहुवचने प्रचेताः इति रूपम्।
- गृणतः- गृ-धातोः श्नाप्रत्यये शतृप्रत्यये च षष्ठ्येकवचने गृणतः इति रूपम्।
- जुषस्व- जुष्-धातोः लोट्लकारे मध्यमपुरुषैकवचने जुषस्व इति रूपम्।
- चरसि- चर्-धातोः लट्लकारे मध्यमपुरुषैकवचने चरसि इति रूपम्।

**उषो॑ दे॒वमर्त्या॒ वि भा॑हि**
**च॒न्द्रर॑था सू॒नृता॑ ई॒रय॑न्ती।**
**आ त्वा॑ वहन्तु सु॒यमा॑सो॒ अश्वा॒**
**हिर॑ण्यवर्णां पृथु॒पाज॑सो ये॥२॥**

**पदपाठः- उषः॑। दे॒वि॒। अम॑र्त्या। वि। भा॒हि॒। च॒न्द्रऽर॑था। सू॒नृता॑। ई॒रय॑न्ती॥ आ। त्वा॒। व॒ह॒न्तु॒। सु॒ऽयमा॑सः। अश्वाः॑। हिर॑ण्यवर्णाम्। पृ॒थु॒ऽपाज॑सः। ये॥**

**अन्वयः-** उषः देवि अमर्त्या चन्द्ररथा सूनृता ईरयन्ती वि भाहि। पृथुपाजसः सुयमासः ये अश्वाः हिरणवर्णां त्वा आ वहन्तु।

**व्याख्या-** हे उषो देवि अमर्त्या मरणधर्मरहिता चन्द्ररथा सुवर्णमयरथोपेता सूनृता प्रियसत्यरूपा वाचः ईरयन्ती उच्चारयन्ती। तादृशी त्वं वि भाहि सूर्यकिरणसम्बन्धात् विशेषेण दीप्यस्व, पृथुपाजसः प्रभूतबलयुक्ता अरुणवर्णा ये अश्वा विद्यन्ते सुयमासः सुष्ठु नियन्तुं शक्या रथो योजितास्तेऽश्वाः हिरण्यवर्णां त्वा त्वाम् आ वहन्तु।

**सरलार्थः-** हे देवि उषे! मरणधर्मरहिता सुवर्णमयरथयुक्ता सत्यं प्रियां वाणीं च उच्चारयन्ती भवती विशेषरूपेण प्रकाशिता भवतु। प्रभूतवलयुक्ताः सुनियन्त्रिताः भवत्याः ये अश्वाः ते स्वर्णिमवर्णयुक्तां भवन्तीम् अत्र आनयन्तु।

**व्याकरणविमर्शः-**

- भाहि- भा-धातोः लोट्लकारे मध्यमपुरुषैकवचने भाहि इति रूपम्।
- ईरयन्ती- ईर्-धातोः णिच्प्रत्यये शतृप्रत्यये ङीप्प्रत्यये च प्रथमैकवचने ईरयन्ती इति रूपम्।
- वहन्तु- वह्-धातोः लोट्लकारे प्रथमपुरुषैकवचने वहन्तु इति रूपम्।
- सुयमासः- सुयमशब्दस्य प्रथमाबहुवचने वैदिकं रूपमिदम्। लौकिके तु सुयमाः इति रूपम्।



**उषः प्रतीची भुवनानि विश्वो-**
**र्ध्वा तिष्ठस्यमृतस्य केतुः।**
**समानमर्थं चरणीयमाना**
**चक्रमिव नव्यस्या ववृत्स्व॥३॥**

**पदपाठः- उषः। प्रतीची। भुवनानि। विश्वा। ऊर्ध्वा। तिष्ठसि। अमृतस्य। केतुः॥ समानम्। अर्थम्। चरणीयमाना। चक्रम्ऽइव। नव्यसि। आ। ववृत्स्व॥**

**अन्वयः-** उषः विश्वा भुवनानि प्रतीची अमृतस्य केतुः ऊर्ध्वा तिष्ठसि, नव्यसि समानं चरणीयमाना चक्रमिव आ ववृत्स्व।

**व्याख्या-** हे उषः देवि सर्वाणि भुवनानि प्रतीची। प्रति आभिमुख्येनाञ्चति प्राप्नोतीति प्रतीची। अमृतस्य मरणधर्मरहितस्य सूर्यस्य केतुः प्रज्ञापयित्री त्वम् ऊर्ध्वा नमस्युन्नता तिष्ठसि। नव्यसि पुनः पुनर्जायमानतया नवतरे हे उषो देवि, अर्थम् अर्यते गम्यतेऽस्मिन्नित्यर्थो मार्गः। समानम् एकमार्गमुदयात् प्राचीनकाललक्षणं चरणीयमाना चरितुमिच्छन्ती त्वम् आ ववृत्स्व पुनस्तस्मिन् मार्गे आवृत्ता भव। तत्र दृष्टान्तः। चक्रमिव। यथा नभसि चरितुः सूर्यस्य रथाङ्गं पुनः पुनरावर्तते तद्वत्॥

**सरलार्थः-** हे देवि उषे! समस्तस्य लोकस्य पुरस्तात् आगच्छन्ती मरणधर्मरहितस्य सूर्यस्य आगमनवार्तां ज्ञापयन्ती भवती आकाशमध्ये तिष्ठति। हे सर्वदा नवीना तिष्ठन्ति, एकस्मिन् एव मार्गे विचरणं कुर्वन्ती भवती चक्रवत् वारं वारम् आगच्छतु।

**व्याकरणविमर्शः-**

- प्रतीची- प्रतिपूर्वकात् अञ्च्-धातोः क्विन्प्रत्यये प्रतीची इति रूपम्। प्रति आभिमुख्येन अञ्चति प्राप्नोति इति सायणाचार्यः।
- तिष्ठसि- स्था-धातोः लट्लकारे मध्यमपुरुषैकवचने तिष्ठसि इति रूपम्।
- नव्यसि- नव्-धातोः लट्-लकारे मध्यमपुरुषैकवचने नव्यसि इति रूपम्।
- चरणीयमाना- चरणीयशब्दस्य शानच्प्रत्यये टाप्प्रत्यये च प्रथमैकवचने चरणीयमाना इति रूपम्।
- ववृत्स्व- वृत्-धातोः यङ्लुङन्ते लोट्लकारे मध्यमपुरुषैकवचने ववृत्स्व इति रूपम्।

**अव स्यूमेव चिन्वती मघो-**
**न्युषा याति स्वसरस्य पत्नी।**
**स्वर्जनन्ती सुभगा सुदंसा**
**आन्तादिवः पप्रथ आ पृथिव्याः॥४॥**



**पदपाठः- अव। स्यूमऽइव। चिन्वती। मघोनी। उषा। याति। स्वसरस्य। पत्नी॥ स्वः। जनन्ती। सुऽभगा। सुऽदंसाः। आ। अन्तात्। दिवः। पप्रथे। आ। पृथिव्याः॥**

**अन्वयः-** स्वसरस्य पत्नी मघोनी उषा स्यूम इव अव चिन्वती याति, स्वः जनन्ती सुभगा सुदंसा दिवः आ अन्तात् पृथिव्याः पप्रथे।

**व्याख्या-** येयम् उषा स्यूमेव वस्त्रमिव विस्तृतं तमः अवचिन्वती अवचयमपक्षयं प्रापयन्ती मघोनी धनवती स्वसरस्य सुष्ठुवस्यति क्षिपति तम इति स्वसरा सूर्यो वासरो वा। तस्य पत्नी सती याति गच्छति। स्वः स्वकीयं तेजः जनन्ती जनयन्ती सुभगा सुधना सौभाग्ययुक्ता वा सुदंसा शोभनाग्निहोत्रकर्मा सेयमुषा दिवः द्युलोकस्य आ अन्तात् पृथिव्याः च आ अन्तात् अवसानात् पप्रथे प्रथते प्रकाशते इत्यर्थः।

**सरलार्थः-** सूर्यस्य भार्या, धनयुक्ता उषा देवी वस्त्रमिव विस्तृतम् अन्धकारं नाशयन्ती गमनं करोति। स्वतेजः उत्पादयन्ती सुन्दरी धनयुक्ता सुन्दराग्निहोत्रादियज्ञानुष्ठानं कारयन्ती उषादेवी द्युलोकस्य पृथिवीलोकस्य च अन्तं यावत् स्वप्रकाशेन अन्धकारं नाशयति।

**व्याकरणविमर्शः-**

- चिन्वती- चि-धातोः शतृप्रत्यये ङीप्प्रत्यये च प्रथमैकवचने चिन्वती इति रूपम्।
- जनन्ती- जन्-धातोः णिच्प्रत्यये शतृप्रत्यये ङीप्प्रत्यये च प्रथमैकवचने वैदिकं रूपमिदम्। लौकिके जनयन्ती इति रूपं भवति।
- पप्रथे- प्रथ्-धातोः लिट्लकारे आत्मनेपदे प्रथमपुरुषैकवचने पप्रथे इति रूपम्।

**अच्छा वो देवीमुषसं विभातीं**
**प्र वो भरध्वं नमसा सुवृक्तिम्।**
**ऊर्ध्वं मधुधा दिवि पाजो अश्रे-**
**त्प्र रोचना रुरुचे रण्वसंदृक्॥५॥**

**पदपाठः- अच्छ। वः। देवीम्। उषसम्। विऽभातीम्। प्र। वः। भरध्वम्। नमसा। सुऽवृक्तिम्॥ ऊर्ध्वम्। मधुधा। दिवि। पाजः। अश्रेत्। प्र। रोचना। रुरुचे। रण्वसंदृक्॥**

**अन्वयः-** वः अच्छ विभातीम् उषसं देवीं वः नमसा सुवृक्तिं प्रभरध्वम्। मधुधा दिवि ऊर्ध्वं पाजः अश्रेत्। रण्वसंदृक् रोचना प्ररुरुचे।

**व्याख्या-** हे स्तोतारः वः युष्मान् अच्छ अभिलक्ष्य विभातीं शोभमानाम् उषसं देवीं प्रति वः युष्माकं सम्बन्धिना नमसा नमस्कारेण सह सुवृक्तिं शोभनां स्तुतिं प्रभरध्वं यूयं कुरुत। मधुधा मधुराणि स्तुतिलक्षणानि वाक्यानि दधतीति। मधुः सोमः। तं धारयतीति वा। यद्वा। मधुधादित्यधात्री। यद्वा। अवग्रहाभावादव्युत्पन्नावयवम् अखण्डमिदं पदम्, उषो नाम सेयमुषा दिवि नभसि ऊर्ध्वं पाजः





ऊर्ध्वाभिमुखं पाजस्तेजः अश्रेत् श्रयति तथा रोचना रोचनशीला रण्वसंदृक् रमणीयदर्शनोषाः प्र रुरुचे प्रकर्षेण यद्वा रोचना लोकान् प्ररुरुचे प्रकर्षेण स्वतेजसा दीपयति।

**सरलार्थः-** (हे स्तोतासमूह) यूष्मान् लक्ष्यीकृत्य प्रकाश्यमानाम् उषादेवीं प्रति यूयं यूष्माकं नमनयुक्तां सुन्दरस्तुतिं समर्पयन्तु। मधु धारयन्ती उषा देवी द्युलोके ऊर्ध्वं प्रति स्वप्रकाशं प्रसारयति। रमणदर्शनयुक्ता उषा देवी जनान् अत्यधिकं प्रकाशयति।

**व्याकरणविमर्शः-**

- विभातीम्- विपूर्वकात् भा-धातोः शतृप्रत्यये ङीप्प्रत्यये च द्वितीयैकवचने विभातीम् इति रूपम्।
- भरध्वम्- भृ-धातोः लोट्लकारे आत्मनेपदे मध्यमपुरुषबहुवचने भरध्वम् इति रूपम्।
- रोचना- रुच्-धातोः ल्युट्प्रत्यये टाप्प्रत्यये च रोचना इति रूपम्।
- अश्रेत्- श्रि-धातोः लङ्लकारे प्रथमपुरुषैकवचने वैदिकं रूपमिदम्।
- रुरुचे- रुच्-धातोः लिट्लकारे प्रथमपुरुषैकवचने रुरुचे इति रूपम्।

**ऋतावरी दिवो अर्कैरबो-**
**ध्या रेवती रोदसी चित्रमस्थात्।**
**आयतीमग्न उषसं विभातीं**
**वाममेषि द्रविणं भिक्षमाणः॥६॥**

**पदपाठः- ऋतऽवरी। दिवः। अर्कैः। अबोधि। आ। रेवती। रोदसी इति। चित्रम्। अस्थात्॥**
**आऽयतीम्। अग्ने। उषसम्। विऽभातीम्। वामम्। एषि। द्रविणम्। भिक्षमाणः॥**

**अन्वयः-** ऋतावरी दिवः अर्कैः अबोधि। रेवती रोदसी। चित्रम् अस्थात्। अग्ने! आयतीं विभातीम् उषसं भिक्षमाणः वामं द्रविणम् एषि।

**व्याख्या-** ऋतावरी सत्यवती येयमुषा दिवः द्युलोकात् अर्कैः तेजोभिः अबोधि सर्वैर्ज्ञायते। ततः रेवती धनवती येयं रोदसी द्यावापृथिव्यौ चित्रं नानाविधरूपयुक्तं यथा भवति तथा अस्थात् सर्वतो व्याप्य तिष्ठति। हे अग्ने आयतीं त्वदभिमुखमागच्छन्तीं विभातीं भासमानाम् उषसम् उषेदेवीं भिक्षमाणः हवींषि याचमानस्त्वं वामं वरणीयं द्रविणम् अग्निहोत्रादिलक्षणं धनम् एषि प्राप्नोषि।

**सरलार्थः-** सत्यवती उषा द्युलोकात् प्रसारितेन तेजसा ज्ञायते। धनवती उषादेवी द्युलोकं पृथिवीलोकं च विवधैः प्रकारैः व्याप्य तिष्ठति। हे अग्निदेव भवतः सम्मुखं प्रति आगच्छन्त्याः उषादेव्याः याचमानः वरणयोग्यं धनं प्राप्नोति।

**व्याकरणविमर्शः-**

- अस्थात्- स्था-धातोः लङ्लकारे प्रथमपुरुषैकवचने अस्थात् इति रूपम्।



- अबोधि- बुध्-धातोः लङ्लकारे प्रथमपुरुषैकवचने अबोधि इति रूपम्।
- आयतीम्- आङ्पूर्वकात् इण्-धातोः शतृप्रत्यये ङीप्प्रत्यये च द्वितीयैकवचने आयतीम् इति रूपम्।
- विभातीम्- विपूर्वकात् भा-धातोः शतृप्रत्यये ङीप्प्रत्यये च द्वितीयैकवचने विभातीम् इति रूपम्।
- भिक्षमाणः- भिक्ष्-धातोः शानच्प्रत्यये प्रथमैकवचने भिक्षमाणः इति रूपम्।
- एषि - इ-धातोः लट्लकारे मध्यमपुरुषैकवचने एषि इति रूपम्।

**ऋतस्य॑ बु॒ध्न उ॒षसा॑मिष॒ण्यन्-**
**वृषा॑ म॒ही रोद॑सी॒ आ वि॑वेश।**
**म॒ही मि॒त्रस्य॒ वरु॑णस्य मा॒या**
**च॒न्द्रेव॑ भा॒नुं वि द॑धे पु॒रु॒त्रा॥७॥**

**पदपाठः- ऋ॒तस्य॑। बु॒ध्ने। उ॒षसा॑म्। इ॒ष॒ण्यन्। वृषा॑। म॒ही इति॑। रोद॑सी॒ इति॑। आ। वि॒वे॒श॥**

**म॒ही। मि॒त्रस्य॑। वरु॑णस्य। मा॒या। च॒न्द्राऽइ॑व। भा॒नुम्। विऽद॒धे। पु॒रु॒त्रा॥**

**अन्वयः-** वृषा ऋतस्य बुध्ने उषसाम् इषण्यन् मही रोदसी आ विवेश। मित्रस्य वरुणस्य मही माया चन्द्रा इव भानुं पुरुत्रा विदधे।

**व्याख्या-** वृषा वृष्टिद्वारा अपां प्रेरक आदित्यः ऋतस्य अग्निहोत्रादिककर्मकरणे सत्यभूतस्याह्नः बुध्ने मूले उषसामिषण्यन् प्रेरणं कुर्वन् मही महत्यौ रोदसी द्यावापृथिव्यौ आ विवेश स्वतेजोभिः सर्वतः प्रविष्टवान्। यद्वा वृषा वर्षितेषण्यन् सर्वतो गच्छन्नुषसां सम्बन्धी रश्मिसमूहो रोदसी द्यावापृथिव्यौ विष्टवानिति योजनीयम्। ततः मही महती मित्रस्य वरुणस्य मित्रावरुणयोः माया प्रभारूपा सती चन्द्रेव सुवर्णानीव भानुं स्वप्रभां पुरुत्रा बहुषु देशेषु विदधे विदधाति सर्वत्र प्रसारयति।

**सरलार्थः-** वृष्टिद्वारा जलस्य प्रेरकः सूर्यः प्राकृतिकनियमानुसारं दिनस्यादौ उषां प्रेरयित्वा द्युलोके पृथिवीलोके च व्याप्तः जातः। मित्राणां वरुणदेवतानां च महती प्रभास्वरूपिणी उषा स्वर्णिमकान्तिः इव सूर्यं बहुषु स्थानेषु प्रसारितं करोति।

**व्याकरणविमर्शः-**

- इषण्यन्- इष्-धातोः णिच्प्रत्यये शतृप्रत्यये च प्रथमैकवचने इषण्यन् इति रूपम्।
- विवेश- विश्-धातोः लिट्लकारे प्रथमपुरुषैकवचने विवेश इति रूपम्।
- विदधे- विपूर्वकात् धा-धातोः लिट्लकारे प्रथमपुरुषैकवचने विदधे इति रूपम्।





## पाठगतप्रश्नाः-३

३१. उषस्सूक्तस्य कः ऋषिः। किम् छन्दः। का च देवता।

३२. ईरयन्ती इति पदस्य निष्पत्तिः कुतः।

३३. इषण्यन् इति पदस्य निष्पत्तिः कुतः।

३४. सूक्तमिदम् कस्मिन् वेदे अन्तर्भवति॥

३५. विभातीम् इति पदस्य निष्पत्तिः कुतः।

३६. अस्मिन् सूक्ते कस्य प्रार्थना विधीयते।

३७. पप्रथे इति पदस्य निष्पत्तिः कुतः।

३८. अस्थात् इति पदस्य निष्पत्तिः कुतः।

३९. आदिमे मन्त्रे का प्रार्थना विधीयते।

४०. अश्रेत् इति पदस्य निष्पत्तिः कुतः।

## १.५) उषस्स्वरूपम्

सम्पूर्णे ऋग्वेदे प्रायः विंशत्यां सूक्ते उषस्-देव्याः स्तुतिः विहिता। प्रकाशर्थकात् वस्-धातोः उषस्-शब्दो निष्पद्यते। तस्मात् उषस्-शब्दस्य अर्थो भवति प्रकाशमाना देवी इति। उषा देवी जरामरणरहिता इति ऋषिभिः वर्णिता। तस्याः स्वरूपम् अविनाशि वर्तते, परन्तु बहुत्र स्थलेषु द्युलोकस्य दुहितृत्वेन अस्याः वर्णना प्राप्यते। उषा देवी हि सुजाता अर्थात् तस्याः जन्म उच्चवंशे अभवत्। सम्पूर्णवैदिकसाहित्ये उषस्-देव्याः यत् मनोहरं स्वरूपं वर्णितं, तादृशं स्वरूपं तु न अन्यस्याः कस्याश्चित् देव्याः वर्तते। प्रातःकालस्य अधिष्ठात्रीदेवीरूपेण उषा चित्रिता। सूर्योदयात् किञ्चित् प्राक् यः समयः वर्तते, स एव उषस्-देव्याः आगमनसमय इत्युच्यते। अग्नेः अपि उषस्-देव्याः प्रेमित्वेन वर्णना प्राप्यते। अन्नद्वारा अन्नवती तथा धनवती हि उषा देवी। सर्वैरेव ज्ञायमाना इयं पुरातनी युवतिः इव भाति, विविधोपायेन स्तूयमाना एषा यज्ञम् उद्दिश्य विचरति। सुवर्णमये रथे आरूढा इयं सदा प्रियं तथा सत्यम् एव भाषते। प्रभूतबलयुक्ताः सुष्ठुतया नियन्त्रिताः स्वर्णिमरङ्गविशिष्टाः तस्याः अश्वाः तां यज्ञस्थलं प्रापयन्ति।

निखिलमनुष्याणां सम्मुखं गन्त्री मरणधर्मरहिता सूर्यागमनविषयकज्ञानदायिका इयं देवी आकाशे तिष्ठति। प्रत्यहम् एकवारम् एव उदयकारणात् इयं सदैव नवीना एव तिष्ठति। समाने एव मार्गे विचरन्ती इयं चक्रवत् पौनःपुन्येन आगच्छति। सूर्यस्य पत्नी प्रचुरधनयुक्ता उषा देवी अन्धकारं नाशयन्ती विचरति। स्वस्याः तेजसम् उत्पादयन्ती सुन्दरधनविशिष्टा इयम् अग्निहोत्रम् आचरति। उषा देवी प्रत्यहं द्युलोकस्य अन्तः यावत् प्रकाशिता भवति। यज्ञे सोमस्य धारिका इयं उषा देवी द्युलोकस्य उपरि स्वस्याः तेजसः



प्रसारं करोति। रमणीयदर्शनयुक्ता इयम् उषा देवी सम्पूर्णस्य जगतः प्रकाशं करोति। सत्यवती इयं देवी स्वस्याः तेजःप्रभावात् अस्मिन् जगति ख्याता। धनयुक्ता इयं विविधप्रकारेण द्युलोकं पृथिवीलोकं च व्याप्य स्थिता। उषा देवी अस्मिन् जगति वृष्टिमाध्यमेन जलं प्रापयति। मित्रस्य वरुणस्य च प्रभास्वरूपा अथवा शक्तिस्वरूपा उषा देवी सूर्यम् अनेकस्थाने प्रसारितं करोति।

## १.६) उषस्सूक्तस्य सारः

ऋग्वेदीयसमाजः पुरुषप्रधानः आसीत्। तत्र मन्त्राणाम् अधिष्ठातृरूपेण पुरुषदेवतायाः समधिकं प्राधान्यं परिलक्ष्यते। केषुचित् सूक्तेषु स्त्रीदेवतानाम् अपि स्तुतयः लभ्यन्ते परन्तु तासां स्तुतीनां संख्याः पुरुषापेक्षया न्यूनाः। कर्मवैचित्र्यानुसारं हि स्त्रीदेवताः पुरुषसमकक्षतां न भजन्ते। ताः अन्येषां देवानां कन्या, जाया, जननी वा भवन्ति। यद्यपि तासां स्वकीया महिमा विद्यते तथापि पुरुषदेवतानां समीपे तासां महिमा म्लायते यथा चन्द्रस्य पुरस्तात् अन्येषां नक्षत्राणाम्। समासेन वक्तुं शक्यते वैदिकपुरुषतान्त्रिकसमाजस्य नारीपुरुषसम्बन्धस्य चित्रं देवसमाजोपरि सम्यक् प्रतिफलितम्।

ऋग्वेदे यत्र देवीनां स्तुतयः विद्यन्ते तत्र एकः विषयः दृष्टिम् आकर्षयति तद्धि, ऋषीणां कवित्वभावना, सौन्दर्यचेतना च। प्राकृतिकरूपमाधुर्यम् एव सौन्दर्यभावनायाः प्रधानः उत्सः। न प्रकृतेः रुद्ररूपेषु परन्तु कोमल-मधुर-रसमयेषु रूपेषु एव नारीणां चिरन्तनं रूपं परिलक्षितम् ऋषिभिः। तदर्थम् एव प्रवाहिता स्रोतस्विनी, शस्यश्यामला पृथिवी, आलोकमयी उषा, अन्धकाररूपिणी रात्री, पवित्रतास्वरूपिणी सरस्वती च एताः सर्वाः ऋषिकल्पनायां देवीरूपेण ख्याताः। तासां रूपवर्णनायाम् ऋषीणाम् अलौकिककविभावनायाः सौन्दर्यभावनायाः सहृदयभावनायाः च परिचयः प्राप्यते।

एतादृशी एका देवी उषा। ऋग्वेदीयदेवीषु सा अन्यतमा। ऋग्वेदस्य पञ्चममण्डलस्य अशीतितमं सूक्तम् उषस्सूक्तम्। अत्र सत्यश्रवा ऋषिः, उषा देवता, त्रिष्टुप् छन्दः। अन्यासां देवीनाम् अपेक्षया तस्याः एव स्तुतिः अधिकसंख्यकसूक्तैः कृता। स्वर्गदुहिता उषा द्युलोकस्य अधिष्ठात्री देवी। प्रभाते सूर्योदयस्य पूर्वमूहूर्ते पूर्वगगने या मनोरमा अरुणवर्णीया आलोकच्छटा दिशः रञ्जयति सा हि अस्माकम् उषादेवी। उषोदये रात्रेः अन्धकारः शनैः अपसरति, पक्षीणां कूजनं रात्रेः निस्तब्धतां दूरीकरोति। उषायाः एनं महिमानं लक्षीकृत्य कविः अस्याः वन्दनां करोति। सा हि दिवो दुहिता (५.८०.५-६)। इति।

ऋग्वेदे स्तूयमाना उषा ऋषिकल्पनायां रूपलावण्यवती काचित् तरुणी। सा दीप्तिमती(भास्वती), शुक्लवसना युवती(युवतिः शुक्रवासाः)। तस्याः वक्षस्थलम् अनावृतं, दर्शनाय सा सर्वदा स्वकीयं शरीरं प्रकाशयति(१.१२३.११)। सूर्यदेवः तस्याः प्रणयी। मर्त्यलोकेषु कश्चिद् युवा यथा कामपि कन्यकाम् अनुसरति तथैव सूर्यः अपि उषादेव्याः पश्चाद् गच्छति। तथाहि आम्नातम् -

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्॥ (१.१२५.२)। इति।

उषा पुनः अश्विनीकुमारद्वयस्य सखी। उषायाः पश्चात् सूर्यस्य आविर्भावं परिलक्ष्य केचन कथयन्ति यत् सा सूर्यदेवस्य जननी। उषायाः देवीसत्ता सुस्पष्टा ऋग्वेदमन्त्रेषु। सा ऋतावरी, सत्यवती, सुनृतानां नेत्री च। सा रोगस्य नाशकारिणी, जगतां सुखकारिणी, विचित्रगतिमती। सा यजमानेभ्यः धनं



प्रददाति। प्रदीप्ते रथे आरूढा सा विश्वं व्याप्नोति। तस्या आगमनेन जीवजगति प्राणानां स्फुरणं भवति। नर्तकी यथा रात्रेः अन्धकारं दूरीकुर्वन् आविर्भवति तथैव आलोकमयी उषा रात्र्यन्धकारं नाशयति दिशश्च प्रकाशयति। तथाहि आम्नातम्- अधि पेशांसि वपते नृतुरिव। (१.९२.४)।

सा निद्रायाः जीवजगत् जागरयति। सा प्राणदायिनी मुक्तिदायिनी। सूर्यस्य आगमनवार्ता तया एव उद्घोष्यते। सा एव पृथिव्याः पूर्तिं विदधाति। उषायाः गतिं परिलक्ष्य एव कालस्य गतिः, सा चिरतरुणी अनवद्या च। अतः तस्याः स्तुतिपरायणाः सर्वे देवाः इति शम्।



## पाठसारः-२

अस्मिन् पाठे सूक्तद्वयम् उपन्यस्तम्। तत्र पूषन्सूक्तम् पूर्वार्धे वर्तते। तस्य सारः तत्रैव प्रदत्तः। अधुना अत्र उषस्सूक्तांशस्य सारांशः समासेन प्रदीयते।

सूक्तमिदम् ऋग्वेदस्य तृतीयस्य मण्डलस्य एकषष्टितमम्। अस्य सूक्तस्य वामदेवऋषिः उषादेवता त्रिष्टुप् -छन्दश्च। अत्र भगवतीम् उषादेवीं लक्षीकृत्य प्रार्थना विधीयते। तत्र आदिमे मन्त्रे प्रार्थना विधीयते यत् सर्वैः इष्यमाणा स्तूयमाना च देवी उषा आयोज्यमानं यज्ञं लक्षीकृत्य विचरतु इति। द्वितीये मन्त्रे प्रार्थ्यते यत् नानागुणयुक्ता उषा देवी प्रकाशिता भूत्वा तस्य अश्वानां रथम् आरुह्य यज्ञस्थलम् आगच्छतु इति। तृतीये मन्त्रे प्रार्थ्यते आकाशमध्यस्थिता भगवती उषा वारं वारं चक्रवत् आगच्छतु इति। चतुर्थे मन्त्रे कथम् उषादेवी स्वप्रकाशेन द्युलोकस्य पृथ्वीलोकस्य च अन्धकारं नाशयति इति वर्णितम् अस्ति। पञ्चमे मन्त्रे जनैः स्तूयमाना मधुधारयन्ती उषादेवी कथं जनान् कथम् अत्यधिकं प्रसारयति इति वर्णितम् अस्ति। षष्ठे मन्त्रे उषादेवी कथं ज्ञायते कथं द्युलोकं पृथ्वीलोकं च व्याप्य तिष्ठति इत्यादिकं वर्णितमस्ति। सप्तमे मन्त्रे कथं सूर्यदेवः द्युलोके पृथ्वीलोके च व्याप्तः भवति कथं च उषादेवी सूर्यं सर्वत्र प्रसारयति इत्यादिकं वर्णितमस्ति।



## पाठान्तप्रश्नाः

### पूषन्सूक्ते

१. पूषन्सूक्तस्य सारं लिखत।

२. वणिजः किं किं करणाय पूषदेवतां प्रति उच्यते इति समन्त्रं व्याख्यात।

३. वयमु त्वा पथस्पते... इत्यादिमन्त्रस्य व्याख्यानं कुरुत।

४. परि तृन्धि पणीनामारया... इत्यादिमन्त्रस्य व्याख्यानं कुरुत।

५. या ते अष्टा गोओपशाघृणे... इत्यादिमन्त्रस्य व्याख्यानं कुरुत।



**उषस्सूक्ते**

६. उषस्सूक्तस्य सारं लिखत।

७. उषो वाजेन... इति मन्त्रं व्याख्यात।

८. उषो देव्यमर्त्या... इति मन्त्रं व्याख्यात।

९. अव स्तूमेव... इति मन्त्रं व्याख्यात।

१०. उषः प्रतीची... इति मन्त्रं व्याख्यात।

११. अच्छा वो... इति मन्त्रं व्याख्यात।

१२. ऋतावरी... इति मन्त्रं व्याख्यात।

१३. ऋतस्य बुध्न... इति मन्त्रं व्याख्यात।

१४. मही मित्रस्य... इति मन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**१-पूषन्सूक्ते**

१. भरद्वाजः ऋषिः, गायत्री छन्दः, पूषन् देवता।

२. पूरकः।

३. पथः मार्गस्य पते सम्बोधने एकवचने।

४. सन्-धातोः क्तिनि साति चतुर्थ्यैकवचने।

५. युजिर् इतिधातोः लुङि उत्तपुरुषबहुवचने।

६. पुष्-धातोः कनिन्प्रत्यये सम्बोधने एकवचने।

७. नृभ्यो हितम्।

८. प्रयतं दक्षिणं यस्य तादृशम्।

९. नृशब्दात् यत्प्रत्यये।

१०. आगतदीप्ते।

११. शुद्धम्।

१२. तृद्-धातोः लोटि मध्यपुरुषैकवचने।

१३. चि-धातोः लोटि मध्यमपुरुषैकवचने।

१४. बाधकान् तस्करादींश्च।

१५. हृदयानि।



**२-पूषन्सूक्ते**

१६. प्रतोदः।

१७. वणिक्।

१८. विविध्य।

१९. कीर्णानि प्रशिथिलानि वा।

२०. किकिराणि।

२१. कृ-धातोः अचि द्वितीयाबहुवचने नपुंसके।

२२. कुरु।

२३. ब्रह्मोपपदात् चुद्-धातोः ल्युटि ङीपि।

२४. अश्-धातोः ष्ट्रनि टापि।

२५. गवाम् ओपशा इति तत्पुरुषः।

२६. सुपूर्वकात् म्ना-धातोः कप्रत्यये द्वितीयैकवचने।

२७. आत्मनेपदिनः ईङ्-धातोः उत्तमपुरुषबहुवचने।

२८. सुखम्।

२९. खादनाय।

३०. कुरु।

**३-उषस्सूक्ते**

३१. वामदेवः ऋषिः त्रिष्टुप् छन्दः उषा च देवता।

३२. ईर्-धातोः णिच्प्रत्यये शतृप्रत्यये ङीप्प्रत्यये च प्रथमैकवचने ईरयन्ती इति रूपम्।

३३. इष्-धातोः णिच्प्रत्यये शतृप्रत्यये च प्रथमैकवचने इषण्यन् इति रूपम्।

३४. ऋग्वेदे।

३५. अत्र भगवतीम् उषादेवीं लक्षीकृत्य प्रार्थना विधीयते।

३६. विपूर्वकात् भा-धातोः शतृप्रत्यये ङीप्प्रत्यये च द्वितीयैकवचने विभातीम् इति रूपम्।

३७. प्रथ्-धातोः लिट्लकारे आत्मनेपदे प्रथमपुरुषैकवचने पप्रथे इति रूपम्।

३८. स्था-धातोः लङ्लकारे प्रथमपुरुषैकवचने अस्थात् इति रूपम्।

३९. आदिमे मन्त्रे प्रार्थना विधीयते यत् सर्वैः इष्यमाणा स्तूयमाना च देवी उषा आयोज्यमानं यज्ञं लक्षीकृत्य विचरतु इति।

४०. श्रि-धातोः लङ्लकारे प्रथमपुरुषैकवचने वैदिकं रूपमिदम्।

## ॥ इति नवमः पाठः ॥

# १०

# ॥वरुणसूक्तम्॥

## प्रस्तावना

ईश्वरस्य निःश्वारभूताः वेदा अपौरुषेयाः अनादयश्च। मानवस्य सनातनं दिव्यचक्षुः अयं वेदः। ईश्वरोऽपि वेदम् अवलम्ब्य एव जगतः सृष्टिं करोति। संस्कृतसाहित्यव्योम्नि वेदाः सूर्यः इव। भारते धर्मव्यवस्था वेदायत्ता एव। वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयः तु वेदमूलकतया वर्तते। अत एव श्रुतिस्मृत्योः विरोधे श्रुतिरेव गरीयसी। न केवलं धर्ममूलकतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतया अपि। प्राचीनानि धर्मसमाज-व्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। विद्यन्ते धर्मादयः पुरुषार्थाः यैः ते वेदाः इति। सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकम् उपायं यो वेदयति स वेद इति। तत्र कारिका -

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

वेदाः चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति। तत्र ऋग्वेदे देवतासु वरुणस्य स्थानम् अतीव महत्त्वपूर्णम्। यद्यपि सम्पूर्णे ऋग्वेदे द्वादशसूक्तैः वरुणस्य स्तुतिः विहिता तथापि इन्द्रं विहाय अन्यः कोपि देवः वरुणात् महत्तरः नास्ति। वरुणशब्दः आवरणार्थकवृ-धातोः निष्पन्नः। आवरकरूपेणैव वैदिकदेवेषु स महत्त्वपूर्णः। ऋग्वेदीयसूक्तस्यास्य शुनःशेपः ऋषिः, वरुणः देवता, गायत्री छन्दः। इदं सूक्तं प्रथममण्डलस्य पञ्चविंशतितमं सूक्तम् (ऋ.वे. म-१.२५)।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान्

- वरुणसूक्तं ज्ञातुं शक्नुयात्।
- वरुणस्वरूपं ज्ञातुं शक्नुयात्।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- लौकिकशब्दान् ज्ञातुं शक्नुयात्।
- वैदिकलौकिकान् ज्ञातुं शक्नुयात्।
- स्वयमपि मन्त्रस्य व्याख्यानं कर्तुं शक्नुयात्।



- स्वयमपि मन्त्रस्य अन्वयादिकं कर्तुं शक्नुयात्।
- मन्त्रे स्थितं व्याकरणं ज्ञातुं शक्नुयात्।

## १०.१) अधुना मूलपाठं पाठाम

**यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्।**
**मिनीमसि द्यविद्यवि॥१॥**

**मा नो वधाय हत्नवे जिहीळानस्य रीरधः।**
**मा हृणानस्य मन्यवे॥२॥**

**वि मृळीकाय ते मनो रथीरश्वं न संदितम्।**
**गीर्भिर्वरुण सीमहि॥३॥**

**परा हि मे विमन्यवः पतन्ति वस्यइष्टये।**
**वयो न वसतीरुप॥४॥**

**कदा क्षत्रश्रियं नरमा वरुणं करामहे।**
**मृळीकायोरुचक्षसम्॥५॥**

**तदित्समानमाशाते वेनन्ता न प्र युच्छतः।**
**धृतव्रताय दाशुषे॥६॥**

**वेदा यो वीनां पदमन्तरिक्षेण पतताम्।**
**वेद नावः समुदियः॥७॥**

**वेद मासो धृतव्रतो द्वादश प्रजावतः।**
**वेदा य उपजायते॥८॥**

**वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः।**
**वेदा ये अध्यासते॥९॥**



नि ष॑साद धृतव्र॑तो वरु॑णः पस्त्या॒३॑स्वा।
साम्रा॑ज्याय सुक्रतु॑ः॥१०॥

अतो॒ विश्वा॒न्यद्भु॑ता चिकि॒त्वाँ अ॒भि प॑श्यति।
कृता॒नि या च कर्त्वा॑॥११॥

स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः सु॒पथा॑ करत्।
प्र ण॒ आयूं॑षि तारिषत्॥१२॥

बिभ्र॑द्द्रा॒पिं हि॑र॒ण्ययं॒ वरु॑णो वस्तनि॒र्णिज॑म्।
परि॑ स्पशो॒ नि षे॑दिरे॥१३॥

न यं दिप्स॑न्ति दि॒प्सवो॒ न द्रुह्वा॑णो॒ जना॑नाम्।
न दे॒वम॒भिमा॑तयः॥१४॥

उ॒त यो मानु॑षे॒ष्वा यश॑श्च॒क्रे अस॒ाम्या।
अ॒स्माक॑मु॒दरे॒ष्वा॥१५॥

परा॑ मे यन्ति धी॒तयो॒ गावो॒ न गव्यू॑ती॒रनु॑।
इ॒च्छन्ती॑रु॒रुचक्ष॑सम्॥१६।

सं नु वो॑चावहै॒ पुन॒र्यतो॑ मे॒ मध्वाभृ॑तम्।
होते॑व॒ क्षद॑से प्रि॒यम्॥१७॥

द॒र्शं नु वि॒श्वद॑र्शतं॒ द॒र्शं रथ॒मधि॒ क्षमि॑।
ए॒ता जु॑षत मे॒ गिर॑ः॥१८॥

इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृळय।
त्वाम॑व॒स्युरा च॑के॥१९॥



त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि।
स यामनि प्रति श्रुधि॥२०॥

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत।
अवाधमानि जीवसे॥२१॥

### १०.१.१) इदानीं मूलपाठम् अवगच्छाम

**यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्।**
**मिनीमसि द्यविद्यवि॥१॥**

**पदपाठः- यत्। चित्। हि। ते। विशः। यथा। प्र। देव। वरुण। व्रतम्॥ मिनीमसि। द्यविऽद्यवि॥**

**अन्वयः-** वरुण देव! यथा विशः ते व्रतं यत् चित् हि द्यविद्यवि प्रमिनीमसी।

**व्याख्या-** हे वरुण यथा लोके विशः प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयम् अपि ते तव सम्बन्धि यच्चिद्धि यदेव किञ्चित् व्रतं कर्म द्यविद्यवि प्रतिदिनं प्र मिनीमसि प्रमादेन हिंसितवन्तः। तदपि व्रतं प्रमादपरिहारेण साङ्गं कुरु इति शेषः॥

**सरलार्थः-** हे वरुणदेव! संसारे प्रजाः यथा प्रमादान् कुर्वन्ति, तथा एव वयम् अपि भवतः अपि नियमानां यत्किमपि उल्लङ्घनं कुर्मः, अस्माकं कृतानां तेषां प्रमादानां परिमार्जनं कृत्वा भवान् नियमैः पूर्णं करोतु।

**व्याकरणविमर्शः-**

- विशः- विश्-शब्दस्य प्रथमाबहुवचने विशः इति रूपम्।
- मिनीमसि- मीञ्-धातोः लट्लकारे उत्तमपुरुषबहुवचने वैदिकम् इदं रूपम्।
- द्यविद्यवि- द्योशब्दस्य सप्तम्येकवचने द्यवि इति रूपम्। द्यवि इत्यस्य वारद्वये प्रयुक्ते द्यविद्यवि इति रूपम्।

**मा नो वधाय हत्नवे जिहीळानस्य रीरधः।**
**मा हृणानस्य मन्यवे॥२॥**

**पदपाठः- मा। नः। वधाय। हत्नवे। जिहीळानस्य। रीरधः॥ मा। हृणानस्य। मन्यवे॥**



**अन्वयः-** जिहीळानस्य हत्नवे वधाय नः मा रीरधः। हृणानस्य मन्यवे मा (रीरधः)।

**व्याख्या-** हे वरुण जिहीळानस्य अनादरं कृतवतः हत्नवे हन्तुः पापिहननशीलस्य तव सम्बन्धिने त्वत्कर्तृकाय वधाय नः अस्मान् मा रीरधः संसिद्धान् विषयभूतान् मा कुरु। हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः॥

**सरलार्थः-** हे वरुणदेव! हिंसां करोति इति हिंसकशास्त्राणां विषयान् अस्मान् मा वदतु, तथा एव क्रोधिनं मां पुनः क्रोधपात्रं मा कारयतु।

**व्याकरणविमर्शः-**

- राध साध संसिद्धौ।
- हृणानस - हृणीङ् लज्जायाम् इति धातोः शानचि पृषोदरादित्वात् अभिमतरूपसिद्धिः॥
- हत्नवे- हत्नु इत्यस्य चतुर्थ्येकवचने हत्नवे इति रूपम्।
- जिहीळानस्य- हेडृ-धातोः कानच्प्रत्यये लिट्लकारे द्वित्वादिकार्ये कृते जिहीडान इति रूपं भवति। जिहीडान इत्यस्य षष्ठ्येकवचने जिहीळानस्य इति वैदिकं रूपमिदम्। लौकिके तु जिहीडानस्य इति रूपम्।
- रीरधः- राध्-धातोः लङ्लकारे लेट्लकारे मध्यमपुरुषस्य एकवचने रीरधः इति रूपम्।
- हृणानस्य- हृ-धातोः शानच्प्रत्यये निष्पन्नस्य हृणान इत्यस्य षष्ठ्येकवचने हृणानस्य इति रूपम्।

**वि मृ॑ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न संदि॑तम्।**
**गी॒र्भिर्व॑रुण सीमहि॥३॥**

**पदपाठः- वि। मृ॒ळी॒काय॑। ते॒। मनः॑। र॒थीः॑। अश्व॑म्। न। सम्ऽदि॑तम्। गी॒ःऽभिः॑। व॒रु॒ण।**
**सी॒म॒हि॒॥**

**अन्वयः-** वरुण! रथीः अश्वं संदितं न ते मनः मृळीकाय गीर्भिः विसीमहि।

**व्याख्या-** हे वरुण मृळीकाय अस्मत्सुखाय ते तव मनः गीर्भिः स्तुतिभिः विसीमहि विशेषेण बध्नीमः प्रसादयामः इत्यर्थः। तत्र दृष्टान्तः। रथीः रथस्वामी संदितं सम्यक् खण्डितं दूरगमनेन श्रान्तम् अश्वं न अश्वमिव। यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत्॥

**सरलार्थः-** हे वरुणदेव! यथा रथस्वामी अथवा रथं यः चालयति, स दूरगमानात् लप्स्यते इति एतादृशानि तृणानि दृष्ट्वा अश्वं सन्तोषयति, तथा एव वयम् अपि भवतः मनसः सुखप्राप्त्यर्थं नानाभिः स्तुतिभिः प्रसन्नं कुर्मः।

**व्याकरणविमर्शः-**



- दो अवखण्डने। निष्ठा इति क्त।
- सीमहि। षिवु तन्तुसंताने। व्यत्ययेनात्मनेपदम्। बहुलं छन्दसि इति विकरणस्य लुक्। षिञ् बन्धने इत्यस्मात् विकरणस्य लुक्। दीर्घश्छान्दसः॥
- रथीः- रथशब्दस्य मतुपि अर्थे वैदिके ईप्रत्यये रथीः इति रूपम्।
- संदितम्- सम्पूर्वकात् दो-धातोः क्तप्रत्यये इकारादेशे संदितम् इति रूपम्।
- विसीमहि- विपूर्वकात् षिञ्-धातोः षिवु-धातोः वा लट्लकारे उत्तमपुरुषबहुवचने विसीमहि इति रूपम्।

**परा हि मे विमन्यवः पतन्ति वस्यइष्टये।**
**वयो न वसतीरुप॥४॥**

**पदपाठः- परा। हि। मे। विऽमन्यवः। पतन्ति। वस्यःऽइष्टये। वयः। न। वसतीः। उप॥**

**अन्वयः-** (हे वरुण) मे विमन्यवः वस्यः इष्टये हि पराप तन्ति। वयः न वसतीः उप।

**व्याख्या-** हे वरुण मे मम शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयः वस्यइष्टये वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्तये परापतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति। हि शब्दः अस्मिन्नर्थे सर्वजनप्रसिद्धिमाह। परापतने दृष्टान्तः। वयो न। पक्षिणो यथा वसतीः निवासस्थानानि उप सामीप्येन प्राप्नुवन्ति तद्वत्॥

**सरलार्थः-** हे वरुणदेव! मम क्रोधसहितबुद्धिसमूहः धनसमूहेन युक्तं जीवनं प्रापणाय भवन्तं प्रति धावति, येन प्रकारेण पक्षी स्वस्य निवासस्थानं प्रति गच्छति।

**व्याकरणविमर्शः-**

- विमन्यवः- विगतः मन्युः याभ्यः ताः विमन्यवः इति बहुव्रीहिसमासः।
- इष्टये- इष्-धातोः क्तिन्प्रत्यये निष्पन्नस्य इष्टिशब्दस्य चतुर्थ्येकवचने इष्टये इति रूपम्।
- वसतीः- वस्-धातोः अतिप्रत्यये निष्पन्नस्य वसति इत्यस्य द्वितीयाबहुवचने वसतीः इति रूपम्।

**कदा क्षत्रश्रियं नरमा वरुणं करामहे।**
**मृळीकायोरुचक्षसम्॥५॥**

**पदपाठः- कदा। क्षत्रऽश्रियम्। नरम्। आ। वरुणम्। करामहे॥ मृळीकाय। उरुऽचक्षसम्॥**

**अन्वयः-** क्षत्रश्रियम् उरुचक्षसं नरं वरुणं मृळीकाय कदा आ करामहे।



**व्याख्या-** मृळीकाय अस्मत्सुखाय वरुणं कदा कस्मिन् काले आ करामहे अस्मिन् कर्मणि आगतं करवाम। कीदृशम्। क्षत्रश्रियं बलसेविनं नरं नेतारं उरुचक्षसं बहूनां द्रष्टारम्॥ क्षत्रश्रियम्। क्षत्राणि श्रयतीरि क्षत्रश्रीः। नरम्। ऋदोरप् इति अबन्तः आद्युदात्तः। करामहे। करोतेः व्यत्ययेन शप्। उरुचक्षसम्।

**सरलार्थः-** शासकीयशक्त्या सुशोभितं, विशालदृष्टिवन्तं त्रिकालदर्शिनं, सर्वेषां नेतरं वरुणदेवं वयं कदा अस्माकं समीपम् आनेष्यामः।

**व्याकरणविमर्शः-**

- क्षत्रश्रियम्- क्षत्राणि श्रयति अथवा क्षत्रेण श्रीः यस्य तम् क्षत्रश्रियम्।
- नरम्- नृ-धातोः ऋदोरप् इति सूत्रेण अप्प्रत्यये नरम् इति रूपम्।
- आ करामहे- आपूर्वकात् कृ-धातोः लुङ्लके लेट्लकारे उत्तमपुरुषबहुवचने आकरामहे इति रूपम्।
- उरुचक्षसम्- उरु चक्षः यस्य तम् उरुचक्षसम् इति बहुव्रीहिसमासः।

**तदित्स॒मा॒नमा॑शाते॒ वेन॑न्ता॒ न प्र यु॑च्छतः।**
**धृ॒तव्र॑ताय दा॒शुषे॑॥६॥**

**पदपाठः- तत्। इत्। स॒मा॒नम्। आ॒शा॒ते इति॑। वेन॑न्ता। न। प्र। यु॒च्छ॒तः॒॥ धृ॒तऽव्र॑ताय। दा॒शुषे॑॥**

**अन्वयः-** वेनन्ता समानं तत् इत् आशाते। धृतव्रताय दाशुषे न प्रयुच्छतः।

**व्याख्या-** धृतव्रताय अनुष्ठितकर्मणे दाशुषे हविर्दत्तवते यजमानाय वेनन्तौ कामयमानौ मित्रावरुणाविति शेषः। तावुभौ समानं साधारणं तदित् अस्माभिर्दत्तं तदेव हविः आशाते अश्नुवाते। न प्र युच्छतः कदाचिदपि प्रमादं न कुरुतः॥

**सरलार्थः-** शुभकामनां कुरुतौ व्रतधारिणौ अपि च हविप्रदानकारिणौ मित्रवरुणौ तं हविं समानतया स्वीकरोति। तौ यजमानानां कल्याणाय कदापि प्रमादं न कुरुतः।

**व्याकरणविमर्शः-**

- आत्मनेपदिनः अंश्-धातोः लिट्लकारे प्रथमपुरुषद्विवचने आशाते इति रूपम्।
- वेनन्ता- वेन्-धातोः शतृप्रत्यये प्रथमाद्विवचने वेनन्तौ इत्यस्य वैदिकं रूपमिदम्।
- दाशुषे- दाशृ-धातोः क्वसुप्रत्यये चतुर्थ्येकवचने दाशुषे इति रूपम्।
- धृतव्रताय- धृतं व्रतं येन तस्मै धृतव्रताय इति बहुव्रीहिसमासः।



**वेदा यो वीनां पदमन्तरिक्षेण पतताम्।**
**वेद नावः समुद्रियः॥७॥**

**पदपाठः- वेद। यः। वीनाम्। पदम्। अन्तरिक्षेण। पतताम्॥ वेद। नावः। समुद्रियः॥**

**अन्वयः-** यः अन्तरिक्षेण पततं वीनां पदं वेद। समुद्रियः नावः वेद।

**व्याख्या-** अन्तरिक्षेण पतताम् आकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यः वरुणः वेद। तथा समुद्रियः समुद्रेऽवस्थितः वरुणः नावः जले गच्छन्त्याः पदं वेद जासनाति सोऽस्मान् बन्धनान्मोचयत्विति शेषः॥ वेद। विद ज्ञाने।

**सरलार्थः-** यः वरुणदेवः आकाशमार्गेण उड्डीयमानानां पक्षिणां मार्गं जानाति तथा समुद्रमार्गेण गम्यमानानां नौकानां मार्गं जानाति, स वरुणदेवः अस्मान् बन्धनात् मुक्तं कुर्यात्।

**व्याकरणविमर्शः-**

- पतताम्- पत्-धातोः शतृप्रत्यये षष्ठीबहुवचने पतताम् इति रूपम्।
- समुद्रियः- समुद्रे भव इत्यर्थे घप्रत्यये इयादेशे समुद्रियः इति रूपम्
- वेद- विद्-ज्ञाने इत्यर्थकात् धातोः लिट्लकारे प्रथमपुरुषैकवचने वेद इति रूपम्।



## पाठगतप्रश्नाः-१

१. वरुणसूक्तस्य कः ऋषिः। किम् छन्दः। का देवता
२. मिनीमसि इति पदस्य व्युत्पत्ति कथम्।
३. हत्नवे इति पदस्य व्युत्पत्ति कथम्।
४. वेनन्ता इति पदस्य व्युत्पत्ति कथम्।
५. कीदृशं वरुणदेवं  वरुणदेवं ते समीपम् आनेष्यन्ति।
६. हन्-धातोः कः अर्थः।
७. वसतीः इति पदस्य निष्पत्तिः कुतः।
८. समुद्रियः इति पदस्य निष्पत्तिः कुतः।
९. विद्धातोः कः अर्थः।
१०. दाशुषे इत्यत्र षत्वम् केन सूत्रेण।



### १०.१.२) इदानीं मूलपाठम् अवगच्छाम

**वेद मासो धृतव्रतो द्वादश प्रजावतः।**
**वेदा य उपजायते॥८॥**

**पदपाठः- वेद। मासः। धृतऽव्रतः।द्वादश। प्रजाऽवतः॥ वेद। यः। उपऽजायते॥**

**अन्वयः-** धृतव्रतः प्रजावतः द्वादश मासः वेद। यः उपजायते वेद।

**व्याख्या-** धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतः तदा तदोत्पद्यमानप्रजायुक्तान् द्वादश मासः चैत्रादीन् फाल्गुनान्तान् वेद जानाति। यः त्रयोदशोऽधिकमासः उपजायते संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेद। वाक्यशेषः पूर्ववत्॥ मासः। द्वादश। द्वौ च दश च इति द्वन्द्वः।

**सरलार्थः-** व्रतधारी वरुणः प्रजायुक्तान् द्वादशविधान् मासान् जानाति अपि च यत् वर्षभिः अधिकाः मासाः उत्पद्यन्ते तान् अपि जानाति।

**व्याकरणविमर्शः-**

- प्रजावतः- प्रजाशब्दस्य मतुप्प्रत्यये षष्ठ्येकवचने प्रजावतः इति रूपम्।
- उपजायते- उपपूर्वकात् जन्-धातोः लट्लकारे प्रथमपुरुषैकवचने उपजायते इति रूपम्।

**वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः।**
**वेदा ये अध्यासते॥९॥**

**पदपाठः- वेद। वातस्य। वर्तनिम्। उरोः। ऋष्वस्य। बृहतः॥ वेद। ये। अधिऽआसते॥**

**अन्वयः-** उरो ऋष्वस्य बृहतः वातस्य वर्तनिं वेद। ये अधि आसते वेद।

**व्याख्या-** उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनि मार्गं वेद वरुणो जानाति। ये देवाः उपरि तिष्ठन्ति तानपि वेद जानाति॥

**सरलार्थः-** वरुणदेवः विस्तृतं व्यापकं दर्शनीयं तथा गुणैः महतः वायोः अर्थात् अन्तरिक्षस्य मार्गान् जानाति अपि च यः तत्र निवसति, तम् अपि जानाति।

**व्याकरणविमर्शः-**

- बृहतः- बृहत्-शब्दस्य षष्ठ्येकवचने बृहतः इति रूपम्।
- वर्तनिम्- वृत्-धातोः अनिप्रत्यये वर्तनिम् इति रूपम्।
- ऋष्वस्य- ऋषी-धातोः मतुपि अर्थे क्वन्प्रत्यये षष्ठ्येकवचने ऋष्वस्य इति रूपम्।



- अध्यासते- आत्मनेपदिनः आस्-धातोः लट्लकारे प्रथमपुरुषबहुवचने अध्यासते इति रूपम्।

**नि षसाद धृतव्रतो वरुणः पस्त्याइस्वा।**
**साम्राज्याय सुक्रतुः॥१०॥**

**पदपाठः- नि। ससाद। धृतव्रतः। वरुणः। पस्त्यासु। आ॥ साम्ऽराज्याय। सुऽक्रतुः॥**

**अन्वयः-** धृतव्रतः सुक्रतुः वरुणः आ साम्राज्याय प्रत्स्यासु निषसाद।

**व्याख्या-** धृतव्रतः पूर्वोक्तः वरुणः पस्त्यासु देवीषु प्रजासु आ नि षसाद आगत्य निषण्णवान्। किमर्थम्। प्रजानां साम्राज्यसिद्ध्यर्थं सुक्रतुः शोभनकर्मा।नि षसाद। सदिरप्रतेः (पा. सू. ८.३.६६) इति षत्वम्। साम्राज्याय। सम्राजो भावः साम्राज्यम्। गुणवचनब्राह्मणादिभ्यः (पा. सू. ५.१.१२४) इति ष्यञ्।

**सरलार्थः-** व्रतधारी तथा शोभितकर्मकारी वरुणः सर्वतः शासनाय स्वस्य जलगृहे उपविष्टः अस्ति।

**व्याकरणविमर्शः-**

- निषसाद- निपूर्वकात् सद्-धातोः लिट्लकारे प्रथमपुरुषैकवचने निषसाद इति रूपम्।
- सुक्रतुः- शोभनः क्रतुः यस्य सः सुक्रतुः इति बहुव्रीहिसमासः। सुपूर्वकात् कृ-धातोः अतुप्रत्यये सुक्रतुः इति रूपम्।
- साम्राज्याय- सम्राजो भावः। सम्राज्शब्दस्य ष्यञ्प्रत्यये चतुर्थ्येकवचने साम्राज्याय इति रूपम्।

**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति।**
**कृतानि या च कर्त्वा॥११॥**

**पदपाठः- अतः। विश्वानि। अद्भुता। चिकित्वान्। अभि। पश्यति॥ कृतानि। या। च। कर्त्वा॥**

**अन्वयः-** अतः चिकित्वान् विश्वानि या कृतानि च कर्त्वा अद्भुता अभिपश्यति।

**व्याख्या-** अतः अस्मात् वरुणात् विश्वानि अद्भुता सर्वाण्याश्चर्याणि चिकित्वान् प्रज्ञावान् अभि पश्यति सर्वतोऽवलयति या कृतानि यान्याश्चर्याणि पूर्वं वरुणेन सम्पादितानि। चकारात् अन्यानि यान्याश्चर्याणि कर्त्वा इतः परं कर्तव्यानि तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः।

**सरलार्थः-** तस्मात् स्थानात् एव प्रज्ञावान् वरुणदेवः समाप्तानि कर्माणि तथा क्रियमानानि कर्माणि सर्वतः पश्यति।

**व्याकरणविमर्शः-**



- चिकित्वान्- चिकित्वस्शब्दस्य प्रथमैकवचने चिकित्वान् इति रूपम्।
- विश्वानि- विश्वशब्दस्य नपुंसकलिङ्गे द्वितीयाबहुवचने विश्वानि इति रूपम्।
- कर्त्वा- कृ-धातोः त्वन्प्रत्यये कर्त्वा इति रूपम्।
- अभिपश्यति- अभिपूर्वकात् दृश्-धातोः लट्लकारे प्रथमपुरुषैकवचने अभिपश्यति इति रूपम्।

**स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः सु॒पथा॑ करत्।**
**प्र ण॒ आयूं॑षि तारिषत्॥१२॥**

**पदपाठः- सः। नः॒। वि॒श्वाहा॑। सु॒ऽक्रतुः॑। आ॒दि॒त्यः। सु॒ऽपथा॑। क॒र॒त्॥ प्र। नः॒। आयूं॑षि। ता॒रि॒ष॒त्॥**

**अन्वयः-** सुक्रतुः स आदित्यः नः विश्वाहा सुपथा करत्। नः आयूंषि प्रतारिषत्।

**व्याख्या-** सुक्रतुः शोभनप्रज्ञः सः आदित्यः वरुणः विश्वाहा सर्वेष्वहःसु नः अस्मान् सुपथा शोभनमार्गेण सहितान् करत् करोतु। किं च नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु॥

सुपथा।

**सरलार्थः-** शोभितकर्मकारी स अदितिपुत्रः वरुणः अस्मान् प्रत्यहम् एव उत्तममार्गैः संयुक्तं कुर्यात् अपि च अस्माकम् आयोः वर्धनं कुर्यात्।

**व्याकरणविमर्शः-**

- आदित्यः- अदितिशब्दात् ण्यप्रत्यये प्रथमैकवचने आदित्यः इति रूपम्।
- सुपथा- शोभनश्चासौ पन्थाः सुपन्थाः तेन सुपथा।
- करत्- कृ-धातोः लुङ्लके लोट्लकारे प्रथमपुरुषैकवचने करत् इति रूपम्।
- प्रतारिषत्- प्रपूर्वकात् तृ-धातोः णिच्प्रत्यये लुङ्लके लेट्लकारे प्रथमपुरुषैकवचने प्रतारिषत् इति रूपम्।

**बिभ्र॑द्द्रा॒पिं हि॑र॒ण्ययं॒ वरु॑णो वस्तनि॒र्णिजं॑म्।**
**परि॒ स्पशो॒ नि षे॑दिरे॥१३॥**

**पदपाठः- बिभ्र॑त्। द्रा॒पिम्। हि॒र॒ण्यय॑म्। वरु॑णः। व॒स्त॒। निः॒ऽनिजं॑म्॥ परि॑। स्पशः॑। नि। से॒दि॒रे॥**

**अन्वयः-** हिरण्यं द्रापिं बिभ्रत् वरुणः निर्णिजम् वस्त। स्पशः परि निषेदिरे।

**व्याख्या-** हिरण्यं सुवर्णमयं द्रापिं कवचं बिभ्रत् धारयत् वरुणः निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति। स्पशः हिरण्यस्पर्शिनो रश्मयः परि निषेदिरे सर्वतः निषण्णाः।



**सरलार्थः-** स्वर्णकवचधारी स वरुणदेवः स्वस्य पुष्टं शरीरम् आवृणोति। तस्य चाकचिक्यकिरणसमूहः सर्वत्र व्याप्नोति।

**व्याकरणविमर्शः-**

- बिभ्रत्- भृ-धातोः शतृप्रत्यये निष्पन्नस्य बिभ्रत्-शब्दस्य प्रथमैकवचने बिभ्रन् इत्यस्य वैदिकं रूपमिदम्।
- द्रापिम्- द्रापिशब्दस्य द्वितीयैकवचने द्रापिम् इति रूपम्।
- निर्णिजम्- निर्पूर्वकात् णिजिर्-धातोः कप्रत्यये निर्णिजशब्दस्य द्वितीयैकवचने निर्णिजम् इति रूपम्।
- निषेदिरे- निपूर्वकात् सद्-धातोः लिट्लकारे आत्मनेपदे प्रथमपुरुषबहुवचने निषेदिरे इति रूपम्।

**न यं दिप्संन्ति दिप्सवो न द्रुह्वांणो जनांनाम्।**
**न देवमभिमांतयः॥१४॥**

**पदपाठः- न। यम्। दिप्संन्ति। दिप्सवः। न। द्रुह्वांणः। जनांनाम्॥ न। देवम्। अभिऽमांतयः॥**

**अन्वयः-** दिप्सवः यं देवं न दिप्सन्ति, जनानां द्रुहाणः न, अभिमातयः न।

**व्याख्या-** दिप्सवः हिंसितुमिच्छन्तो वैरिणः ये  वरुणं न दिप्सन्ति भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति। जनानां प्राणिनां द्रुह्वाणः द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति। अभिमातयः पाप्मानः। पाप्मा वा अभिमातिः (तै. सं. २.१.३.५) इति श्रुत्यन्तरात्। देवं तं वरुणं न स्पृशन्ति॥

**सरलार्थः-** जिघांसवः अपि वरुणदेवं हिंसितुं न प्रभवति। सामान्यमनुष्येषु द्रोहिव्यक्तिः अपि यं प्रति द्रोहं कर्तुं न शक्नोति किञ्च पापिनः अपि यस्य हानिं कर्तुं न पारयन्ति।

**व्याकरणविमर्शः-**

- दिप्सन्ति- दम्भ्-धातोः लट्लकारे प्रथमपुरुषबहुवचने दिप्सन्ति इति रूपम्।
- द्रुह्वाणः- द्रुह्-धातोः क्वनिप्प्रत्यये निष्पन्नस्य द्रुह्वशब्दस्य प्रथमाबहुवचने द्रुह्वाणः इति रूपम्।
- अभिमातयः- मीञ्-धातोः अभिभूय मिनाति हिनस्ति इत्यर्थे क्तिन्प्रत्यये अभिमाति इति रूपं भवति। अभिमातिशब्दस्य प्रथमाबहुवचने अभिमातयः इति रूपम्।



## पाठगतप्रश्नाः-२

११. व्रतधारी वरुणः कीदृशान् मासान् जानाति।

१२. उपजायते इति पदस्य निष्पत्तिः कुतः।



१३. वरुणदेवः कस्य मार्गं जानाति।

१४. द्रुह्वाणः इति पदस्य निष्पत्तिः कुतः।

१५. निषसाद इत्यत्र षत्वं केन सूत्रेण।

१६. निर्णिजम् इति पदस्य निष्पत्तिः कुतः।

१७. द्राधातोः कः अर्थः।

१८. करत् इति पदस्य निष्पत्तिः कुतः।

१९. कर्त्वा इति पदस्य निष्पत्तिः कुतः।

२०. कितधातोः कः अर्थः।

---

### १०.१.३) इदानीं मूलापाठम् अवगच्छाम

**उत यो मानुषेष्वा यशश्चक्रे असाम्या।**
**अस्माकमुदरेष्वा॥१५॥**

**पदपाठः- उत। यः। मानुषेषु। आ। यशः। चक्रे। असामि। आ। अस्माकम्। उदरेषु। आ॥**

**अन्वयः-** उत यः मानुषेषु यशः आचक्रे, असामि आ, अस्माकम् उदरेषु आ।

**व्याख्या-** उत अपि च यः वरुणः मानुषेषु यशः अन्नम् आ चक्रे सर्वतः कृतवान् स वरुणः कुर्वन्नपि आ सर्वतः असामि संपूर्ण चक्रे न तु न्यूनं कृतवान्। विशेषतः अस्माकम् उदरेषु सर्वतः चक्रे

**सरलार्थः-** येन वरुणदेवेन मनुष्येषु अन्नम् उत्पादितम् अपि च तत् अन्नं सम्पूर्णतया उत्पादितं तथा अस्माकम् उदरेषु अन्नस्य सर्वैः एव प्रकारैः पाचनाय शक्तिः दत्ता।

**व्याकरणविमर्शः-**

- मानुषेषु- मनोरपत्यम् इत्यर्थे मनोर्जातावञ्यतौ पुक् इति सूत्रेण मनुशब्दात् अञ्प्रत्यये षुगागमे च मानुषशब्दः निष्पद्यते। मानुषशब्दस्य सप्तमीबहुवचने मानुषेषु इति रूपम्।
- चक्रे- कृ-धातोः लिट्लकारे प्रथमपुरुषैकवचने चक्रे इति रूपम्।

**परा मे यन्ति धीतयो गावो न गव्यूतीरनु।**
**इच्छन्तीरुरुचक्षसम्॥१६॥**

**पदपाठः- परा। मे। यन्ति। धीतयः। गावः। न। गव्युतीः। अनु॥ इच्छन्तीः। उरुऽचक्षसम्॥**

**अन्वयः-** उरुचक्षसम् इच्छन्तीः मे धीतयः गव्यूतीः अनु गावः न परायन्ति।



**व्याख्या-** उरुचक्षसं बहुभिर्द्रष्टव्यं वरुणम् इच्छन्तीः मे धीतयः शुनःशेपस्य बुद्धयः परा यन्ति पराङ्मुखा निवृत्तिरहिता गच्छन्ति। तत्र दृष्टान्तः। गावो न। यथा गावः गव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत्॥

**सरलार्थः-** बहुभिः दर्शनयोग्यस्य तथा व्यापकदृष्टिमतः वरुणस्य दर्शनाय काम्यमानस्य मम बुद्धिसमूहः भावनासमूहः वा तं प्रति गच्छति, येन प्रकारेण गोस्थानं लक्षीकृत्य सायंकाले तत्र गम्यमानाः गावः तं प्रति धावन्ति।

**व्याकरणविमर्शः-**

- धीतयः- ध्या-धातोः क्तिन्प्रत्यये यकारस्य वैदिके सम्प्रसारणे कृते इकाराकारयोः पूर्वरूपे इकारस्य च दीर्घे निष्पन्नस्य धीतिशब्दस्य प्रथमाबहुवचने धीतयः इति रूपम्।
- गव्यूतीः- गोपूर्वपदात् यू-धातोः क्तिन्प्रत्यये गोर्यूतौ छन्दसि इति सूत्रेण ओकारस्य अवादेशे निष्पन्नस्य गव्युतिशब्दस्य प्रथमाबहुवचने गव्यूतीः इति रूपम्।
- इच्छन्तीः- इष्-धातोः शतृप्रत्यये ङीप्प्रत्यये च प्रथमाबहुवचने इच्छन्तीः इति रूपम्।
- उरुचक्षसम्- उरुभिः चक्षसं यस्य तम् उरुचक्षसम् इति बहुव्रीहिसमासः।

**सं नु वो॑चावहै पुनर्यतो॑ मे मध्वाभृ॑तम्।**
**होते॑व क्षद॑से प्रियम्॥१७॥**

**पदपाठः- सम्। नु। वोचावहै। पुनः॑। यतः॑। मे। मधु॑। आऽभृ॑तम्॥ होता॑ऽइव। क्षद॑से। प्रियम्॥**

**अन्वयः-** यतः मे मधु आभृतं पुनः नु संवोचावहै। होता इव प्रियं क्षदसे।

**व्याख्या-** यतः अस्मात् कारणात् मे मज्जीवनार्थं मधुरं हविः आभृतम् अञ्जःसवये कर्मणि संपादितं अतः कारणात् होतेव होमकर्तेव त्वमपि प्रियं हविः क्षदसे अश्नासि। पुनः हविः स्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च नु अवश्यं सं वोचावहे संभूय प्रियवार्तां करवावहै॥

**सरलार्थः-** यतो हि अस्मिन् यज्ञे मम मधुरहविः भवतः कृते सम्पादितम्। तस्मात् पुनरपि निश्चयतया आवां प्रेमभावनया आलापं कुर्वः। भवान् होतुः इव तस्य प्रियहविषः भक्षणं करोति।

**व्याकरणविमर्शः-**

- आभृतम्- आपूर्वकात् भृ-धातोः क्तप्रत्यये नपुंसके आभृतम् इति रूपम्।
- वोचावहै- ब्रू-धातोः लुङ्लकारे उत्तमपुरुषद्विवचने वोचावहै इति रूपम्।
- यतः- यच्छब्दस्य तसिल्प्रत्यये तकारस्य अकारादेशे पररूपे च यतः इति रूपम्।
- होता- हू-धातोः तृच्प्रत्यये निष्पन्नस्य होतृशब्दस्य प्रथमैकवचने होता इति रूपम्।
- प्रियम्- प्री-धातोः कप्रत्यये ईकारस्य इयङादेशे नपुंसके प्रियम् इति रूपम्।
- क्षदसे- क्षद्-धातोः आत्मनेपदे लट्लकारे मध्यमपुरुषैकवचने क्षदसे इति रूपम्।



**दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि।**
**एता जुषत मे गिरः॥१८॥**

**पदपाठः- दर्शम्। नु। विश्वऽदर्शतम्। दर्शम्। रथम्। अधि। क्षमि। एताः। जुषत। मे। गिरः॥**

**अन्वयः-** विश्वदर्शतं नु दर्शम् अधि क्षमि रथं दर्शम्। एताः मे गिरः जुषत।

**व्याख्या-** विश्वदर्शतं सर्वैर्दर्शनीयम् अस्मदनुग्रहार्थमत्राविर्भूतं वरुणं दर्शं नु अहं दृष्टवान् खलु। क्षमि क्षमायां भूमौ रथं वरुणसंबन्धिनम् अधि दर्शम् आधिक्येन दृष्टवान् अस्मि। एताः उच्यमानाः मे गिरः मदीयाः स्तुतीः जुषत वरुणः सेवितवान्॥

दर्शम्। दृशेः इरितो वा (पा. सू. ३.१.५७) इति च्लेः अङादेशः। ऋदृशोऽङि गुणः (पा. सू. ७.४.१६) इति गुणः। विश्वदर्शम्। दृशेः भृमृदृशि... (उ. सू. ३.३९०) इत्यादिना अवच्प्रत्ययान्तो दर्शतशब्दः। विश्वं दर्शनीयमस्येति बहुव्रीहिः। बहुव्रीहौ विश्वं संज्ञायाम् इति पूर्वपदान्तोदात्तत्वम्। क्षमि।

**सरलार्थः-** सम्पूर्णविश्वेन द्रष्टुं योग्यं तं वरुणं निश्चयेन अहं दृष्टवान्। भूमौ तस्य वरुणः रथम् अहं दृष्टवान्। तेन वरुणदेवेन मम एषा स्तुतिः स्वीकृता।

**व्याकरणविमर्शः-**

- दर्शम्- दृश्-धातोः लुङ्लके लेट्लकारे उत्तमपुरुषैकवचने दर्शम् इति रूपम्।
- विश्वदर्शतम्- विश्वपूर्वपदात् दृश्-धातोः अतच्प्रत्यये नपुंसके विश्वदर्शतम् इति रूपम्।
- जुषत- जुष्-धातोः लङ्लकारे प्रथमपुरुषैकवचने जुषत इति रूपम्।

**इमं में वरुण श्रुधी हवमद्या च मृळय।**
**त्वामवस्युरा चके॥१९॥**

**पदपाठः- इमम्। मे। वरुण। श्रुधि। हवम्। अद्य। च। मृळय। त्वाम्। अवस्युः। आ। चके॥**

**अन्वयः-** वरुण! मे इमं हवं श्रुधि, अद्य च मृळय। अवस्युः त्वाम् आचक्रे।

**व्याख्या-** वरुणप्रघासेषु इमं मे वरुण इति वारुणस्य हविषः अनुवाक्या। पञ्चम्यां पौर्णमास्याम् इति खण्डे सूत्रितम्- इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वन्दमानः (आश्व. श्रौ. २.१७) इति॥

हे वरुण मे मदीयम् इमं हवम् आह्वानं श्रुधि शृणु। किं च अद्य अस्मिन् दिने मृळय अस्मान् सुखय। अवस्युः रक्षणेच्छुः अहं त्वां वरुणम् आभिमुख्येन चक्रे शब्दयामि स्तौमीत्यर्थः॥

**सरलार्थः-** हे वरुणदेव! मम इदम् आह्वानं शृणोतु मां सुखीं च करोतु। संरक्षणस्य अभिलाषी भूत्वा अहं त्वाम् आह्वयामि।



**व्याकरणविमर्शः-**

- श्रुधि- श्रु-धातोः लोट्लकारे मध्यमपुरुषैकवचने वैदिकं रूपमिदम्।
- हवम्- ह्वे-धातोः अप्प्रत्यये वकारस्य सम्प्रसारणे सन्धिकार्ये अवादेशे च कृते नपुंसके हवम् इति रूपम्।
- मृळय- मृळ्-धातोः लोट्लकारे मध्यमपुरुषैकवचने मृळय इति रूपम्।
- अवस्युः- अवस्-शब्दस्य क्यच्प्रत्यये उप्रत्यये च कृते अवस्युः इति रूपम्।
- चके- कै-धातोः लिट्लकारे उत्तमपुरुषैकवचने चके इति रूपम्।

**त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि।**
**स यामनि प्रति श्रुधि॥२०॥**

**पदपाठः- त्वम्। विश्वस्य। मेधिर। दिवः। च। ग्मः। च। राजसि। सः। यामनि। प्रति। श्रुधि॥**

**अन्वयः-** मेधिर। त्वं दिवः च ग्मः च विश्वस्य राजसि। सः यामनि प्रतिश्रुधि।

**व्याख्या-** हे मेधिर मेधाविन् वरुण त्वं दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये राजसि दीप्यसे। सः तादृशः त्वं यामनि क्षेमप्रापणे अस्मदीये प्रति श्रुधि प्रतिश्रवणम् आज्ञापनं कुरु। रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः॥

**सरलार्थः-** हे मेधावी वरुणदेव! भवान् द्युलोकस्य पृथिवीलोकात् एवं सम्पूर्णस्य जगतः मध्यभागात् प्रकाशितो भवति। एवमेव वरुणदेवता। भवान् मार्गे अर्थात् जीवनरूपयात्रायाः मार्गे मह्यं प्रत्युत्तरं ददातु, भवान् मम रक्षां करिष्यति इति प्रत्युत्तरं ददातु।

**व्याकरणविमर्शः-**

- मेधिर- मेधाशब्दस्य इरच्प्रत्यये मेधिर इति रूपम्।
- दिवः- दिव्-धातोः क्विप्प्रत्यये निष्पन्नस्य दिव्शब्दस्य षष्ठ्येकवचने दिवः इति रूपम्।
- राजसि- राज्-धातोः लट्लकारे मध्यमपुरुषैकवचने राजसि इति रूपम्।
- यामनि- या-धातोः मनिन्प्रत्यये सप्तम्येकवचने यामनि इति रूपम्.

**उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत।**
**अवाधमानि जीवसे॥२१॥**

**पदपाठः- उत्। उत्ऽतमम्। मुमुग्धि। नः। वि। पाशम्। मध्यमम्। चृत॥ अव। अधमानि। जीवसे॥**



**अन्वयः-** नः उत्तमं पाशम् उत् मुमुग्धि, मध्यमं विचृत, जीवसे अधमानि अव।

**व्याख्या-** नः अस्माकम् उत्तमं शिरोगतं पाशम् उत् मुमुग्धि उत्कृष्य मोचय। मध्ययम् उदरगतं पाशं वि चृत वियुज्य नाशय। जीवसे जीवितुम् अधमानि मदीयान् पादगतान् पाशान् अव चृत अवकृष्य नाशय। उत्तमम्। मुमुग्धि। मुच्लृ मोक्षणे। बहुलं छन्दसि इति विकरणस्य श्लुः। द्विर्भावः। हलादिशेषः। हुझल्भ्यो हेर्धिः (पा. सू. ६.४.१०१) इति हेर्धिरादेशः। चृत। चृती हिंसाग्रन्थनयोः। लोटो हिः। तुदादिभ्यः शः, अतो हेः इति हेर्लुक्। जीवसे। जीव प्राणधारणे।

**सरलार्थः-** हे वरुणदेव! भवान् अस्माकम् ऊर्ध्ववर्तिनं बन्धनम् ऊर्ध्वम् आकर्ष्य विनाशयतु। एतेषां बीजानां बन्धनं पृथक्तया आकर्ष्य नाशयतु किञ्च अस्माकं जीवनस्य कृते अधोवर्तिनं बन्धनम् आकर्ष्य विनाशयतु।

**व्याकरणविमर्शः-**

- उत्तमम्- उत्-धातोः तमप्प्रत्यये द्वितीयैकवचने उत्तमम् इति रूपम्।
- मुमुग्धि- मुच्-धातोः लिट्मूलके लोट्लकारे मध्यमपुरुषैकवचने मुमुग्धि इति रूपम्।
- पाशम्- पश्-धातोः घञ्प्रत्यये निष्पन्नस्य पाशशब्दस्य द्वितीयैकवचने पाशम् इति रूपम्।
- चृत- चृत्-धातोः लोट्लकारे मध्यमपुरुषैकवचने चृत इति रूपम्।
- जीवसे- जीव-धातोः तुमुन्प्रत्ययस्य अर्थे वैदिके असेप्रत्यये जीवसे इति रूपम्।



## पाठगतप्रश्नाः-३

२१. वरुणेन का शक्तिः दत्ता।

२२. मानुषशब्दः कथं निष्पाद्यते।

२३. इच्छतीत्यत्र छत्वम् केन सूत्रेण।

२४. होता इति पदस्य निष्पत्तिः कुतः।

२५. मुमुग्धि इति पदस्य निष्पत्तिः कुतः।

२६. अवस्युः इति पदस्य निष्पत्तिः कुतः।

२७. हेर्धिरादेशः केन सूत्रेण।

२८. चृतीधातोः कः अर्थः।

२९. गव्यूतीः इति पदस्य निष्पत्तिः कुतः।

३०. मेधिर इति पदस्य निष्पत्तिः कुतः।



## १०.२) वरुणसूक्तसारः

ऋग्वेदस्य प्रथममण्डलस्य पञ्चविंशं सूक्तं वरुणसूक्तम्। अत्र साकल्येन एकादश मन्त्राः सन्ति। शुनःशेपः ऋषिः च अस्य सूक्तस्य द्रष्टा। अत्र वरुणः एव देवता। अत्र च छन्दः गायत्री इति। अस्मिन् सूक्ते जलस्य देवतां वरुणं प्रति मानवानां प्रार्थनानां वर्णना अस्ति, न केवलं प्रार्थना अपि तु अत्र विविधप्रकारेण वरुणदेवतायाः सन्तुष्टिः विधीयते। यथा- अपराधः कृतः इति बुद्ध्या क्षमा प्रार्थ्यते, ततः स्वेषां धनलोभादयः अपराधाः वर्ण्यन्ते, ततश्च वरुणदेवतायाः शक्तिवर्णनेन स्तुतिमाध्यमेन च स प्रसन्नीक्रियते। एवमत्र क्रमेण वरुणदेवतायाः सन्तोषमाध्यमेन प्रार्थनाः क्रियन्ते।

तत्र आदिमे मन्त्रे उच्यते यत् हे वरुणदेव! यथा विविधेषु यज्ञादिषु अनुष्ठानेषु मनुष्याणां प्रमादः भवति तद्वत् भवतः पूजार्चनादिषु विधिषु अस्माभिः भ्रान्तिः कृता, अतः वयं क्षन्तव्याः इति। ततः भवतः क्रोधावस्थायामपि अस्मान् प्रति क्रोधः मास्तु इति प्रार्थ्यते। तथाहि हे वरुणदेव! भवतः शत्रून् प्रति व्यहृतानि अस्त्राणि अस्मान् न प्रदर्शयतु तथा च क्रोधावस्थायामपि अपि अस्मान् प्रति कृपां करोतु इति। ततः उच्यते यथा सूतः श्रान्तस्य अश्वस्य परिचर्यां करोति, तद्वद् वयमपि भवतः चित्तस्य प्रसादनाय स्तुत्यादिकं कुर्मः इति। किञ्च अस्माकं बुद्धिः सदैव धनादिवस्तु प्रति धावति अतः वयं क्षन्तव्या इति।

ततश्च अत्र प्रार्थ्यते कदा सर्वद्रष्टा वरुणदेवः कल्याणाय यज्ञस्थलादिषु आगमिष्यति इति। किञ्च व्रतधारणद्वारा हुतानि हविर्द्रव्याणि वरुणदेवः स्वीकरोतु ततश्च अस्मान् यजमानान् रक्षतु इति।

एतदनन्तरम् अत्र वरुणदेवतायाः माहात्म्यं वर्ण्यते। तत्रोच्यते वरुणदेवः आकाशे उड्डीयमानानां पक्षिणां मार्गं तथा समुद्रे नौकानां मार्गं जानाति। प्रजानां धारकः वरुणदेवः द्वादशमासान् जानाति, तेन सह च त्रयोदशं पुरुषोत्तममासम् अपि जानाति। स स्वर्गस्य सर्वान् देवान् अपि जानाति, किञ्च प्रजानां पालनार्थं स्रामाज्यस्थापनाय सदैव आसने विराजते। स अद्भुतकर्मादीन् विषयान् अपि जानाति। भूलोकस्य द्युलोकस्य तथा समस्तविश्वस्य अधिकारिणा वरुणेन एव मनुष्याणां शस्यभाण्डारः कृतः किञ्च तेनैव जनानाम् उदरेषु पाचनसामर्थ्यं स्थापितम्। वरुणदेवस्य एतावत् सामर्थ्यं यत् भयङ्करैः पापिभिः सः अगम्यः किञ्च विद्वेषम् इच्छद्भिः शत्रुभिः अपि सः अप्राप्यः।

वरुणदेवस्य स्तुतेः अनन्तरं प्रार्थानाः क्रियन्ते। यथा- अस्मान् पाशतः मुक्तिं प्रददातु। अस्माकम् आह्वानं स्वीकरोतु, ततश्च यज्ञस्थलादिषु अग्निदेववत् हविः स्वीकरोतु। हे अदितिपुत्र वरुणदेव! अस्माकं प्रार्थनाः शृणोतु, श्रुत्वा च अस्माकं सुखं विदधातु। अस्मान् सदा श्रेष्ठमार्गेषु एव प्रेरयतु, किञ्च अस्माकम् आयुः वर्धयतु इति।



## १०.३) वरुणदेवतास्वरूपम्-

वरुणदेवः ऋग्वैदिकानाम् आर्याणाम् अतीव प्रियः। ऋग्वेदे वरुणस्वरूपं सम्पूर्णरूपेण द्वादशसूक्तैः प्रतिपादितम्। आंशिकरुपेण च चतुर्विंशतिसूक्तैः अस्य स्तुतिः विहिता।

वरुणदेवस्य मानवाकृतिः अतीव सुन्दरः तथा मोहनीयः। अस्य मुखमण्डलः अग्निना तुल्यः,नेत्रे च सूर्यतुल्ये।

**अग्नेरनीकं वरुणस्य। (७.८८.२)**

**चक्षुर्मित्रस्य वरुणस्याग्नेः। (१.१५५.१)**

अयं वरुणदेवः अत्यन्तदूरस्थितमपि वस्तुजातं द्रष्टुं शक्नोति। अयं सहस्रनेत्रसमन्वित इत्यपि उच्यते। अस्य शरीरः सुगठितः मांसलः च आसीत्। सुरक्षायै सौन्दर्याय वा एष स्वशरीरे स्वर्णिमकवचं स्वर्णिमवस्त्रञ्च धारयति। अस्य रथः सूर्यसदृशः द्युतिवान् अवलोकयितृणामपि आश्चर्यं जनयति। सुन्दराश्वयुक्ते स्वरथे उपविश्य एष स्वबाहुं कम्पयन् दृष्टिं च सर्वत्र प्रसारयन् भूवः सूक्ष्मं वृत्तं किञ्च प्रजानाम् अन्तस्स्थितं भावमपि वेत्ति। अयं कदापि स्वतन्त्रेण कदापि मित्रदेवेन सह वा विश्वस्य राजा इत्युच्यते।

**त्वं विश्वेषां वरुणासि राजा।।(२.२७.१०)।**

सहस्रस्तम्भयुक्ते सहस्रद्वारयुक्ते स्वर्णिमप्रसादे अयं निवसति। अत्रैव स्थित्वा स समग्रस्य भुवनस्य निरीक्षणं सम्पादयति। अस्य प्रासादं परितः गूढचराः सर्वदैव विचरन्तः सन्ति। वरुणः सम्राट् स्वराट् इत्यादिना उपाधिना अपि विभूष्यते। क्षत्राणामधिपतित्वेन अयं क्षत्रिय इत्यपि उच्यते। अस्य अनिर्वचनीयशक्तेः नाम भवति माया,यया अयम् अस्य जगतः सञ्चालनं विदधाति। वर्षणेन अयम् अन्नं सम्पादयति तथा प्रकाशनिमित्तं सूर्यं मध्येगगनं प्रेषयति। अयमेव सूर्यस्य चलनार्थं अन्तरिक्षलोके सुविस्तीर्णं मार्गं सृष्टवान्।

**सूर्याय पन्थामन्वेतवा उ।।(ऋग्वेद१.२४.८)**

अस्य आज्ञा अतीव कठिना भवति तथापि कोऽपि अस्य आज्ञां न उल्लङ्घति। अयं वरुणः कठिनान् नियमान् पालयति अतः अयं धृतव्रत इत्यपि उच्यते। एवम् अस्य विश्वस्य अणुः अणुतरोऽपि पदार्थः तथा महान् महत्तरोऽपि पदार्थः सर्वमपि वरुणदेवस्य इच्छया एव स्वसत्तां स्वस्थितिञ्च धारयति इति शिवम्।





## पाठसारः

वरुणसूक्तम् ऋग्वेदस्य प्रथममण्डलस्य चतुर्विंशतितमसूक्तम्। अस्य सूक्तस्य शुनःशेपः ऋषिः, वरुणः च देवः। अस्मिन् सूक्ते त्रिष्टुप् गायत्री च छन्दसी। गायत्रीछन्दः तृतीय-चतुर्थ-पञ्चममन्त्रेषु अस्ति। अत्र विशेषतया वरुणदेवस्य स्वरूपस्य तथा तत्कार्यस्य वर्णनं कृतमस्ति। प्रमादं यथा न कुर्वन्ति जनाः, तस्य कृते वरुणदेवस्य समीपं प्रार्थना क्रियते। तेषां प्रमादानां परिमार्जनं कृत्वा वरुणदेवः नियमैः पूर्णं कुर्यात् इति आशा। सुखप्राप्त्यर्थम् अपि वरुणदेवस्य समीपं प्रार्थना क्रियते। यथा रथस्वामी अथवा रथं यः चालयति, स दूरगमानात् लप्स्यते इति एतादृशानि तृणानि दृष्ट्वा अश्वं सन्तोषयति, तथा एव वयम् अपि वरुणदेवस्य मनसः सुखप्राप्त्यर्थं नानाभिः स्तुतिभिः प्रसन्नं कुर्मः। कदाचित् सुखप्राप्त्यर्थं कदाचित् च शोभां प्रदानाय अपि वरुणदेवस्य स्तुतिः क्रियते। वरुणदेवः आकाशमार्गेण उड्डीयमानानां पक्षिणां मार्गं जानाति तथा समुद्रमार्गेण गम्यमानानां नौकानां मार्गं जानाति, तस्मात् स वरुणदेवः अस्मान् बन्धनात् मुक्तान् कुर्यात्। वरुणदेवस्य स्थानम् अस्ति जलगृहम्। तत्र स उपविश्य संसारस्य अस्य सर्वाणि कार्याणि पश्यति विचारयति च। आयोः वर्धनाय अपि कदाचित् वरुणदेवस्य स्तुतिः अत्र क्रियते। कदाचित् च वरुणदेवस्य चाकचिक्यविशिष्टशरीरस्य वर्णनं क्रियते। सूक्तस्य अस्य प्रायः अन्तिमभागे वरुणदेवस्य महिमा वर्णितः। तस्य अन्नप्रदानरूपमहिमा, सत्मार्गे प्रचालनाय महिमा, शरीरस्य पुष्ट्यर्थं च महिमा अत्र अस्मिन् सूक्ते वर्णितः अस्ति। अन्तिमभागे वरुणदेवस्य रथस्य वर्णना कृता अस्ति। यजमानः तस्य दर्शनं कृतवान्। सम्पूर्णविश्वेन द्रष्टुं योग्यस्य तस्य वरुणदेवस्य निश्चयेन दर्शनं योग्यम् अस्ति स्तुत्या। ततः परं सुखप्राप्त्यर्थं स्वस्य रक्षार्थं च स्तुतिः विहिता। सर्वतः अस्माकं विनाशात् रक्षणाय स्वस्य जीवनाय च एतत् वरुणसूक्तम्। इदमेव माहात्म्यम् अस्ति वरुणसूक्तस्य।



## पाठान्तप्रश्नाः

१. वरुणसूक्तस्य सारं लिखत।

२. यच्चिद्धि... इति मन्त्रं व्याख्यात।

३. मा नो... इति मन्त्रं व्याख्यात।

४. कदा क्षत्रश्रियम्... इति मन्त्रं व्याख्यात।

५. तदित्समान... इति मन्त्रं व्याख्यात।

६. दर्शं नु... इति मन्त्रं व्याख्यात।

७. इमं मे... इति मन्त्रं व्याख्यात।

८. त्वं विश्वस्य... इति मन्त्रं व्याख्यात।

९. उदुत्तमं मुमुग्धि... इति मन्त्रं व्याख्यात।





## पाठगतप्रश्नानाम् उत्तराणि

### उत्तरकूटः - १

१. शुनःशेपः ऋषिः वरुणः देवता गयत्री छन्दः।

२. मीञ्-धातोः लट्लकारे उत्तमपुरुषबहुवचने वैदिकं इदं रूपम्।

३. हत्नु इत्यस्य चतुर्थ्येकवचने हत्नवे इति रूपम्।

४. वेन्-धातोः शतृप्रत्यये प्रथमाद्विवचने वेनन्तौ इत्यस्य वैदिकं रूपमिदम्।

५. शासकीयशक्त्या सुशोभितं, विशालदृष्टिवन्तं त्रिकालदर्शिनं, सर्वेषां नेतरं वरुणदेवम् ते समीपम् आनेष्यन्ति।

६. हन्-धातोः हिंसा किञ्च गमनम् अर्थः।

७. वस्-धातोः अतिप्रत्यये निष्पन्नस्य वसति इत्यस्य द्वितीयाबहुवचने वसतीः इति रूपम्।

८. समुद्रे भव इत्यर्थे घप्रत्यये इयादेशे समुद्रियः इति रूपम्

९. ज्ञानम्।

१०. शासिवसिघसीनां च।

### उत्तरकूटः - २

११. व्रतधारी वरुणः प्रजायुक्तान् द्वादशविधान् मासान् जानाति।

१२. उपपूर्वकात् जन्-धातोः लट्लकारे प्रथमपुरुषैकवचने उपजायते इति रूपम्।

१३. महतः वायोः अर्थात् अन्तरिक्षस्य मार्गान् जानाति।

१४. द्रुह्-धातोः क्वनिप्प्रत्यये निष्पन्नस्य द्रुह्वन्शब्दस्य प्रथमाबहुवचने द्रुह्वाणः इति रूपम्।

१५. सदिरप्रतेः इति सूत्रेण षत्वम्।

१६. नि पूर्वकात् णिजिर्-धातोः कप्रत्यये निर्णिजशब्दस्य द्वितीयैकवचने निर्णिजम् इति रूपम्।

१७. कुत्सा किञ्च गतिः।

१८. कृ-धातोः लुङ्लके लोट्लकारे प्रथमपुरुषैकवचने करत् इति रूपम्।

१९. कृ-धातोः त्वन्प्रत्यये कर्त्वा इति रूपम्।

२०. ज्ञानम्।

### उत्तरकूटः - ३

२१. अन्नस्य सर्वैः एव प्रकारैः पाचनाय शक्तिः दत्ता।

२२. मनोरपत्यम् इत्यर्थे मनोर्जातावञ्यतौ पुक् इति सूत्रेण मनुशब्दात् अञ्प्रत्यये षुगागमे च मानुषशब्दः निष्पद्यते।

२३. इषुगमियमां छः।

२४. हू-धातोः तृच्प्रत्यये निष्पन्नस्य होतृशब्दस्य प्रथमैकवचने होता इति रूपम्।



२५. मुच्-धातोः लिट्मूलके लोट्लकारे मध्यमपुरुषैकवचने मुमुग्धि इति रूपम्।

२६. अवस्-शब्दस्य क्यच्प्रत्यये उप्रत्यये च कृते अवस्युः इति रूपम्।

२७. हुझल्भ्यो हेर्धिः इति सूत्रेण।

२८. हिंसा ग्रन्थनम् च।

२९. गोपूर्वपदात् यू-धातोः क्तिन्प्रत्यये गोर्यूतौ छन्दसि इति सूत्रेण ओकारस्य अवादेशे निष्पन्नस्य गव्युतिशब्दस्य प्रथमाबहुवचने गव्यूतीः इति रूपम्।

३०. मेधाशब्दस्य इरच्प्रत्यये मेधिर इति रूपम्।

॥इति दशमः पाठः ॥



# ११

# ॥यमसूक्तम्॥

## प्रस्तावना

शरीरे यथा शिरः तथा संस्कृतसाहित्ये वेदाः प्राधान्यं भजन्ते। भारते धर्मव्यवस्था वेदायत्ता एव। वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयः तु वेदमूलकतया वर्तते। अत एव श्रुतिस्मृत्योः विरोधे श्रुतिरेव गरीयसी। न केवलं धर्ममूलकतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतया अपि। प्राचीनानि धर्मसमाज-व्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। विद्यन्ते धर्मादयः पुरुषार्थाः यैः ते वेदाः इति। सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकम् उपायं यो वेदयति स वेद इति। तथाहि कारिका-

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

वेदाः चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति। तत्र ऋग्वेदीयदेवतासु यमः एकः प्रसिद्धः देवः। ऋग्वेदे त्रिषु सूक्तेषु तस्य कथा प्राप्यते। ऋग्वेदे साधारणतया मृत्योः देवतारूपेणैव प्रसिद्धः। मृत्योः परं सर्वेः प्राणिनः यमस्य समीपमेव गच्छन्ति।

सः अस्माकं पूर्वजः, मृत्योः परं यः प्रथमं प्रेतलोकस्य मार्गम् जानाति स्म- यमो नो गातुं प्रथमो विवेद। एवमेव यमः। तस्य विषयमाधारीकृत्य एव इदं सूक्तम्। अस्य दशममण्डलीयस्य चतुर्दशसूक्तस्य (ऋ.वे.१०.१४) यमः वैवस्वतः ऋषिः, यमः, आङ्गिरः, पित्रखथवभृगुसोर्माः, लिङ्गोक्तदेवताः पितरः वा, श्वानौ, त्रष्टुप्, अनुष्टुप्, बृहती च छन्दांसि।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- यमसूक्तं ज्ञातुं शक्नुयात्।
- यमं ज्ञातुं शक्नुयात्।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- लौकिकशब्दान् ज्ञातुं शक्नुयात्।



- लौकिकवैदिकशब्दयोः भेदं ज्ञातुं शक्नुयात्।
- स्वयमेव मन्त्रस्य व्याख्यानं कर्तुं शक्नुयात्।
- स्वयमेव अन्वयादिकं कर्तुं प्रभवेत्।
- मन्त्रे स्थितं व्याकरणादिकं ज्ञातुं प्रभवेत्।

## ११.१) इदानीम् मूलपाठम् पठाम

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य॥१॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः॥२॥

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिऋक्वभिर्वावृधानः।
याँश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति॥३॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः।
आ त्वा मंत्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व॥४॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य॥५॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥६॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम्॥७॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन्।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः॥८॥



अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन्।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै॥९॥

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति॥१०॥

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि॥११॥

उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम्॥१२॥

यमाय सोमं सुनुत यमाय जुहुता हविः।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः॥१३॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे॥१४॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः॥१५॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत्।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता॥१६॥

### ११.१.१) इदानीं मूलपाठम् अवगच्छाम

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्। वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य॥१॥



**पदपाठः- परेयिऽवांसम्। प्रऽवतः। महीः। अनु। बहुऽभ्यः। पन्थाम्। अनुऽपस्पशानम्। वैवस्वतम्। सम्ऽगमनम्। जनानाम्। यमम्। राजानम्। हविषा। दुवस्य॥१॥**

**अन्वयः-** पयेयिवांसम् महीः बहुभ्यः अनुप्रवतः राजानम् यमम् हविषा दुवस्य अनुपस्पशानाम् पन्थानम् वैवस्वतम् जनानाम् सङ्गमनम्।

**व्याख्या-** परेयिवांसम् इति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षम्। अङ्गिरसो नः पितरो नवग्वा इति षष्ठ्या अङ्गिरः पित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवताः। प्रेहीत्याद्यास्तिस्रो लिङ्गोक्तदेवताकाः पितृदेवताका वा। अति द्रव सारमेयौ इत्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः। शिष्टा यमदेवत्याः। यमाय सोमम् इति त्रयोदशाद्या अनुष्टुभः। यमाय मधुमत्तमम् इत्येषा बृहती। आदितो द्वादश त्रिष्टुभः। तथा चानुक्रान्तम्- यरेयिवांसं षोळश यमो यामं पष्ठी लिङ्गोक्तदेवता पराश्च तिस्रः पित्र्या वा तृचः श्वभ्यां परा अनुष्टुभो बृहत्युपान्त्या इति। गतः सूक्तविनियोगः। महापुतृयज्ञे यमयाग आद्या याज्या। सूत्रितञ्च इमं यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरनु(आ. श्रौ. २।१९।२२) इति। हे मदीयान्तनात्मन् यजमान वा, त्वं राजानम् पितृणां स्वामिनं यमं हविषा पुरोडशादिना दुवस्य परिचर। कीदृशम् प्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान् महीः तत्तद्भोगोचितभूप्रदेशविशेषान् अनु परेयिवांसम् क्रमेण मरणादूर्ध्वं प्रापितवन्तम्। तता बहुभ्यः स्वर्गार्थिभ्यः अबाधमानम्। पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः। वैवस्वतम् विवस्वतः सूर्यस् पुत्रं जनानाम् पापिनां सङ्गमनम् गन्तव्यस्थानरूपम्।

**सरलार्थः-** (हे यजमान त्वं) परलोकवासिभिः महद्भिः बहुजनैः च

पथगामिनं राजानं यमं हविषा अर्चय। स विवस्वतः पुत्रः किञ्च मृतजनानां मेलनस्थानम्।

**व्याकरणम्-**

- परेयिवांसम्- परापूर्वक-इण्-धातोः क्वसुप्रत्यये द्वितीयायाः एकवचने रूपमिदम्।
- प्रवतः- प्रोपसर्गात् 'उपसर्गाच्छन्दसि धात्वर्थे' इति स्वार्थे वतिप्रत्यये रूपमिदम्।
- महीः- महशब्दात् ङीप्प्रत्यये द्वितीयायाः बहुवचने रूपमिदम्।
- पन्थाम्- पथिन्-शब्दस्य द्वितीयायाः एकवचने वैदिकरूपमिदम्।
- अनुस्पशानम्- अनुपूर्वकस्पश्-धातोः कानच्प्रत्यये द्वितीयायाः एकवचने रूपमिदम्।
- वैवस्वतम्- विवस्वतः अपत्यं पुमान् इति विग्रहे अण्प्रत्यये द्वितीयायाः एकवचने रूपमिदम्।
- सङ्गमनम्- सम्पूर्वक-गम्-धातोः ल्युट-प्रत्यये द्वितीयायाः एकवचनम्।

**यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ।**
**यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः॥२॥**

**पदपाठः- यमः। नः। गातुम्। प्रथमः। विवेद। न। एषा। गव्यूतिः। अपऽभर्तवै। ओम् (ॐ)**

**इति। यत्र। नः। पूर्वे। पितरः। पराऽईयुः। एना। जज्ञानाः। पथ्याः। अनु। स्वाः॥२॥**

**अन्वयः-** यमः प्रथमः नः गातुम् विवेद। एषा गव्यूतिः उ न अपभर्तवै यत्र नः पूर्वे पितरः परेयुः, एना जज्ञानाः स्वाः पथ्याः अनु।

**व्याख्या-** प्रथमः सर्वेषां मुख्यो यमो नः अस्माकं प्रजानां गातुं शुभाशुभनिमित्तं विवेद जानाति। एषा गव्यूतिः न अपभर्त्वै उ। अतिशयज्ञानयोगात् यमस्य न केनचिदपहर्त्तुमपनेतुं शक्यत इत्यर्थः। यत्र यस्मिन् मार्गे नः अस्माकं पूर्वे पितरः परेयुः एना अनेन मार्गेण गच्छन्तो जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूता गतीः अनु गच्छन्ति।

**सरलार्थः-** यमः एव प्रथमः यः अस्माकं शुभाशुभं मार्गं जानाति। सुगतिविषयकं कुगतिविषयकं च ज्ञानं कोऽपि अपहर्तुं न शक्नोति। अस्माकं पूर्वजाः येन मार्गेण गताः, ज्ञानिनः सर्वे तमेव पन्थानम् अनुसरन्ति।

**व्याकरणम्-**

- गातुम्- गा-धातोः तुमुन्प्रत्यये रूपमिदम्।
- विवेद- विद्-धातोः परस्मैपदिनः लिटि प्रथमपुरुषैकवचने रूपमिदम्।
- जज्ञानाः- जन्-धातोः कानच्प्रत्यये प्रथमायाः बहुवचने रूपमिदम्।

**मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिऋक्वभिर्वावृधानः।**
**याँश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति॥३॥**

**पदपाठः- मातली। कव्यैः। यमः। अङ्गिरःऽभिः। बृहस्पतिः। ऋक्वऽभिः। ववृधानः। यान्।**

**च। देवाः। ववृधुः। ये। च। देवान्। स्वाहा। अन्ये। स्वधया। अन्ये। मदन्ति॥३॥**

**अन्वयः-** मातली कव्यैः यमः आङ्गिरोभिः ऋक्कभिः बृहस्पतिः ववृधानः। देवाः यान् ववृधुः, ये च देवान् अन्ये स्वाहा अन्ये स्वधया मदन्ति।

**व्याख्या-**अग्निमारुते मातली कव्यै रित्येषा धाय्या। सूत्रितञ्च -इमं यम प्रस्तरमा हि सीद मतली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परासः (आ०श्रौ० ५.२०.६) इति।

मतली मातलिरिन्द्रस्य सारथिः, तद्वानिन्द्रो मतली। स कव्यैः कव्यभाग्भिः पितृभिः सह ववृधानः वर्धमानो भवति। यमः च अङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति। (बृहस्पतिः ऋक्वभिः ऋक्प्रतिपाद्यैः पितृविशेषैः सह वर्धमानो भवति।) तत्र देवा इन्द्रादयो यान् च कव्यभागादीन् पितॄन् ववृधः वर्धयन्ति ये च कव्यभागादयः पितरो देवान् इन्द्रादीन् वर्धयन्ति। तेषां मध्ये अन्ये इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण हृष्यन्ति। अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति।



**सरलार्थः-** मातलिः कव्यैः सह, यमः अङ्गिरोभिः सह, बृहस्पतिः ऋग्वद्भिः सह वृद्धिं प्राप्नुवन्ति। यान् देवाः संवर्धयन्ति किञ्च देवान् ये संवर्धयन्ति, (एषु) केचित् स्वाहाद्वारा अन्ये च स्वधाद्वारा (हव्यदानेन) आनन्दिताः भवन्ति।

**व्याकरणम्-**

- कव्यैः-अत्र सहार्थे तृतीया।
- वावृधुः-वृध्-धातोः लिटि प्रथमायाः बहुवचने रूपमिदम्।
- स्वाहा-स्वाहाशब्दस्य तृतीयायाः एकवचने वैदिकरूपमिदम्।
- स्वधया- स्वधाशब्दस्य तृतीयायाः एकवचने रूपमिदम्।
- मदन्ति- मद्-धातोः लटि प्रथमपुरुषस्य बहुवचनस्य रूपमिदम्।

**इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः।**
**आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व॥४॥**

**पदपाठः- पदपाठः- इमम्। यम। प्रऽस्तरम्। आ। हि। सीद। अङ्गिरःऽभिः। पितृऽभिः। सम्ऽविदानः। आ। त्वा। मन्त्राः। कविऽशस्ताः। वहन्तु। एना। राजन्। हविषा। मादयस्व॥४॥**

**अन्वयः-** यम आङ्गिरोभिः पितृभिः संविदानः इमं प्रस्तरम् आसीद। हि कविशस्ताः मन्त्राः त्वा आवहन्तु राजन् एना हविषा मादयस्व।

**व्याख्या-** महापितृयज्ञ यमस्य इमं यमेत्यादिके द्वे अनुवाक्ये। इमं यम प्रस्तरमा हि सीदेति द्वे (आ०श्रौ० २.१९.२२) इति हि सूत्रितम्। सैवाग्निमारुतेपि धाय्या। सूत्रं पूर्वमेवोदाहृतम्।

हे यम, अङ्गिरोभिः एतन्नामकैः पितृभिः संविदानः ऐकमध्यं गतस्त्वम् इमं प्रस्तरं विस्तीर्णं यज्ञविशेषम् आ सीद आगत्योपविश। हि यस्मादेवं तस्मात् कविशस्ताः विद्वद्भिः ऋत्विग्भिः प्रयुक्ता मन्त्राः त्वा त्वाम् आवहन्तु। हे राजन्, एना एतेन हविषा तुष्टो मादयस्व यजमानं हर्षय।

**सरलार्थः-** हे यम अङ्गरानामकपितृगणैः सह एकत्रीभूय कुशनिर्मितयज्ञवेदिमध्ये तिष्ठतु। यतो हि मेधाविनां शास्त्रपाठकानां मन्त्राः त्वाम् आह्वयन्ति, अतः हे राजन् हविषा आनन्दितः भवतु।

**व्याकरणम्-**

- प्रस्तरम्- प्रपूर्वकस्तृ-धातोः अप्प्रत्यये रूपमिदम्।
- सीद- सद्-धातोः लोटि मध्यमपुरुषस्य एकवचने रूपमिदम्।
- पितृभिः- अत्र सहार्थे तृतीया।
- संविदानः- सम्पूर्वकविद्-धातोः शानच्प्रत्यये प्रथमायाः एकवचने रूपमिदम्।

- मादयस्व- मद्-धातोः स्वार्थे णिचि लोटि मध्यमपुरुषस्य एकवचने रूपमिदम्।

**अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।**
**विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य॥५॥**

**पदपाठः- अङ्गिरःऽभिः। आ। गहि। यज्ञियेभिः। यम। वैरूपैः। इह। मादयस्व। विवस्वन्तम्। हुवे। यः। पिता। ते। अस्मिन्। यज्ञे। बर्हिषि। आ। निऽसद्य॥५॥**

**अन्वयः-** यम! वैरूपैः यज्ञियेभिः अङ्गिरोभिः गोत्रज यज्ञवित् इह आगाहि, मादयस्व। यः ते पिता विवस्वन्तं हुवे अस्मिन् यज्ञे वर्हिषि आ निषद्य।

**व्याख्या-** हे यम, वैरूपैः विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा यज्ञियेभिः यज्ञयोग्यैः अङ्गिरोभिः सह आ गहि आगच्छ। आगत्य च इह अस्मिन् यज्ञे मादयस्व यजमानं हर्षयतु।

**सरलार्थः-** हे यम विरूपर्षेः पुत्रः यज्ञविद् अङ्गरागणैः सह इदं यज्ञस्थानम् आगत्य आनन्दं करोतु। यः विवस्वान् तव पिता तम् आह्वयामि, स अत्र आगत्य अस्मिन् यज्ञे कुशानाम् उपरि उपवेशनं करोतु।

**व्याकरणम्-**

- वैरूपैः- सहार्थे तृतीया।
- विवस्वन्तम्- विवस्वत्शब्दस्य द्वितीयायाः एकवचने रूपमिदम्।
- हुवे- ह्वे-धातोः आत्मनेपदिनः लटि उत्तमपुरुषैकवचने रूपमिदम्।
- निषद्य- निपूर्वकसद्-धातोः ल्यपि रूपमिदम्।

**अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।**
**तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥६॥**

**पदपाठः- अङ्गिरसः। नः। पितरः। नवऽग्वाः। अथर्वाणः। भृगवः। सोम्यासः। तेषाम्। वयम्। सुऽमतौ। यज्ञियानाम्। अपि। भद्रे। सौमनसे। स्याम॥६॥**

**अन्वयः-** अङ्गिरसः अथर्वाणः भृगवः नवग्वाः नः पितरः सोम्यास्यः। तेषाम् यज्ञियानाम् सुमतौ अपि सौमनसे भद्रे वयं स्याम।

**व्याख्या-** अङ्गिरसः अङ्गिरोनामका अथर्वाणः अथर्वनामका भृगवः भृगुनामकाश्च नः अस्माकं पितरो नवग्वाः अभिनवगमनयुक्ता यद्वा नूतनवत् प्रीतिजनका इत्यर्थः। ते च सोम्यासः। सोममर्हन्तीति



सोम्याः। यज्ञियानां यज्ञार्हाणां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम। अपि च सौमनसे भद्रे सौमनसस्य कारणे कल्याणे फले स्याम सर्वदा तिष्ठेम।

**सरलार्थः-** अङ्गरसः, अथर्वाणः, भृगवः, नवग्वाः अस्माकं पितरः सोमरसस्य अधिकारिणः। वयं यथा यज्ञार्हाणां शोभनबुद्धौ प्रसन्नचित्ते कल्याणे च उषितुं शक्नुमः।

**व्याकरणम्-**

- नवग्वाः- नवभिः गूः गमनं येषां ते नवग्वाः।
- भृगवः- भृगुशब्दस्य प्रथमायाः बहुवचने रूपमिदम्।
- सुमतौ- सु शोभना मतिः, तस्याम्।
- सौमनसे- सुमनसः भाव इति तस्येदम् इति अण्प्रत्यये सप्तम्याः एकवचने रूपमिदम्।

**प्रेहि प्रेहिं पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः।**
**उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम्॥७॥**

**पदपाठः- प्र। इहि। प्र। इहि। पथिऽभिः। पूर्व्येभिः। यत्र। नः। पूर्वे। पितरः। पराऽईयुः। उभा। राजाना। स्वधया। मदन्ता। यमम्। पश्यासि। वरुणम्। च। देवम्॥७॥**

**अन्वयः-** यत्र नः पूर्वे पितरः परेयुः पूर्व्येभिः पिथिभिः प्रेहि प्रेहि। स्वधया मदन्तौ उभा राजाना यमम् च देवम् वरुणम् पश्यसि।त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत्। त्रिष्टुब्गायत्री छंदांसि सर्वा ता यम आहिता॥१६॥

**व्याख्या-** सत्रमध्ये दीक्षितस्य मरणे प्रेहीत्याद्याः पञ्चर्चैस्तृतीयावर्जता होत्रा शंसनीयाः। सूत्रतञ्च प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयामुद्धरेत् (आ०श्रौ० ६.१०.१९)इति।

यत्र यस्मिन् स्थाने नः अस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन् काले भवैः। अनादिकालप्रवृत्तैरित्यर्थः। पथिभिः मार्गैर्हे मत्पितस्तत् स्थानं प्रेहि प्रगच्छ, शीघ्रं गच्छ। गत्वा च स्वधया अमृतेनान्नेन मदन्तो तृप्यन्तौ राजानौ उभा उभौ यमं देवं द्योतमानं वरुणं च पश्यामि पश्य।

**सरलार्थः-** (हे मृत) यत्र अस्माकं पूर्वे पितरः प्रस्थिताः, (त्वमपि) पूर्वस्य मार्गम् आदाय एव शीघ्रं गच्छ, शीघ्रं गच्छ।(तत्र गत्वा त्वं) स्वधाद्वारा आनन्दितयमं देववरुणं च उभयराज्ञः प्रत्यक्षं करिष्यसि।

**व्याकरणम्-**

- प्रेहि प्रेहि पथिभिः पूर्व्येभिः- मन्त्रस्य प्रथमपादे पकारस्य अनुप्रासः लक्षणीयः।
- पूर्व्येभिः- पूर्वैः कृतम् इति पूर्वशब्दात् यप्रत्यये अकारलोपे भिस ऐसादेशाभावे एत्वे रूपमिदम्।
- उभा राजाना मदन्ता- उभौ राजानौ मदन्तौ, सुपां सुलुक् इत्यादिना आकारादेशः।

- पश्यासि- दृश्-धातोः आशी-अर्थे लेटि मध्यमपुरुषैकवचने रूपमिदम्।

**सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन्।**
**हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः॥८॥**

**पदपाठः- सम्। गच्छस्व। पितृऽभिः। सम्। यमेन। इष्टापूर्तेन। परमे। विऽओमन्। हित्वाय। अवद्यम्। पुनः। अस्तम्। आ। इहि। सम्। गच्छस्व। तन्वा। सुवर्चाः॥८॥**

**अन्वयः-** परमे व्योमन् पितृभिः संगच्छस्व, इष्टपुर्तेन सम् अवद्यम् हित्वाय अस्तम् पुनः एहि। सुवर्चाः तन्वा संगच्छस्व।

**व्याख्या-** हे मदीय पितः, ततस्त्वं परमे उत्कृष्टे व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह संगच्छस्व। इष्टापूर्तेन श्रौतस्मार्तदानफलेन सङ्गच्छस्व। तत इष्टापूर्तेन संगम्य अवदां पापं हित्वाय परित्यज्य अस्तं विमानाख्यं गृहं पुवरेहि आगच्छ। ततः सूवर्चाः। तृतीयार्थे प्रथमा। सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण सङ्गच्छस्व।

**सरलार्थः-** (हे पितः, त्वं) श्रेष्ठस्वर्गे श्रौतकर्मफलेन किञ्च स्मार्तकर्मफलेन पितृभिः मिलितः भव। पापं परित्यज, पुनः स्वस्य गृहं प्रति गच्छ। शोभनदीप्तशरीरेण मिलितः भव।

**व्याकरणम्-**

- संगच्छस्व- सम्पूर्वकगम्-धातोः आत्मनेपदिनः रूपमिदम्।
- इष्टापूर्तेन- अत्र इष्टशब्दस्य अर्थः श्रौतयागयज्ञादिः, पूर्तशब्दस्य अर्थः स्मार्त्तजनहितकरं पुण्यकर्म च। इष्टानि पूर्तानि च इष्टापूर्तम्, अन्येषामपि दृश्यते इति दीर्घः, तेन।
- हित्वाय- हा-धातोः क्त्वाच्प्रत्यये क्त्वो यक् इति क्त्वा इत्यतस्य यकि आगमे कित्त्वादन्तावयवे रूपमिदम्।
- अस्तम्-अस्-धातोः नपुंसके भावे क्तप्रत्यये रूपमिदम्।
- सुवर्चाः- सु शोभनं वर्चः तेजः यस्य सः सुवर्चाः। सुवर्चस्-शब्दस्य प्रथमायाः एकवचने रूपमिदम्।



## पाठगतप्रश्नाः-१

१. यमसूक्तस्य कः ऋषिः। किम् छन्दः। का च देवता।
२. प्रवतः इति रूपस्य निष्पत्तिः कुतः।
३. वैवस्वतम् इत्यत्र कस्मिन् विग्रहे कः प्रत्ययः भवति।
४. परेयिवांसम् इत्यस्य का व्युत्पत्तिः।



५. कस्य आयुधं चक्रं वा न विनश्यति।

६. चतुर्थे मन्त्रे अपि शब्दः कस्मिन् अर्थे प्रयुक्तः।

७. रायः इति पदस्य कः अर्थः।

८. जज्ञानाः इति पदस्य व्युत्पत्तिः कुतः।

९. पूर्व्येभिः इति पदस्य व्युत्पत्तिः कुतः।

१०. वैरूपैः इत्यत्र कस्मिन्नर्थे तृतीया।

---

**अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन्।**
**अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै॥९॥**

**पदपाठः- अप। इत। वि। इत। वि। च। सर्पत। अतः। अस्मै। एतम्। पितरः। लोकम्। अक्रन्। अहःऽभिः। अत्ऽभिः। अक्तुऽभिः। विऽअक्तम्। यमः। ददाति। अवऽसानम्। अस्मै॥९॥**

**अन्वयः-** अपेत वीत च अतः विसर्पत। पितरः अस्मै एतं लोकम् अक्रुन्। यमः अहोभिः अद्भिः अभुक्तिः अवासनम् व्यक्तम् अस्मै ददाति।

**व्याख्या-** पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षति अपेत वीत इति। सूत्रितञ्च कर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेत वीत वि च सर्पतात इति (आ० गृ ४.२.८) इति।

श्मशाने पूर्वं स्थिता हे पिशाचादयः अतः अस्मात् प्रमृज्यमानदहनस्थानात् अपेत अपगच्छत। वीत विशेषेण गच्छत। वि सर्पत च। इदं ज्ञानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः। पितरः अस्मै, मृतयजमानस्यार्थाय एतं लोकम् इदं दहनस्थानम् अक्रन् यमस्याज्ञया अकुर्वन्। यमोपि अहोभिः दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तभिः रात्रिभिः व्यक्तं सङ्गतम्। शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः। अवसानं दहनस्थानम् अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान्।

**सरलार्थः-** (अस्मात् स्थानात् अशुभशक्तिसमूहः) दूरम् अपसरतु, अपसरतु, सम्पूर्णरूपेण प्रस्थानं करोतु। पितरः अस्य(मृतयजमानस्य) कृते एतत् स्थानं स्थापितवन्तः। यमः दिवसेन, रात्र्या, जलेन एतां विश्रामभूमिं शोभयित्वा (मृतस्य) कृते प्रदत्तवान्।

**व्याकरणम्-**

- अस्मै- तादर्थ्ये निमित्तार्थे वा चतुर्थी।
- अक्रन्- कृ-धातोः लुङि प्रथमपुरुषस्य बहुवचने रूपमिदम्।
- अहोभिः- अहन्शब्दस्य तृतीयायाः बहुवचने रूपमिदम्।

- अद्भिः- अप्शब्दस्य तृतीयायाः बहुवचने रूपमिदम्।
- अङ्कुभिः- अङ्कुशब्दस्य तृतीयायाः बहुवचने रूपमिदम्।

**अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा।**
**अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति॥१०॥**

**पदपाठः- अति। द्रव। सारमेयौ। श्वानौ। चतुःऽअक्षौ। शबलौ। साधुना। पथा। अथ। पितॄन्। सुऽविदत्रान्। उप। इहि। यमेन। ये। सधऽमादम्। मदन्ति॥१०॥**

**अन्वयः-** सारमेयौ श्वाग्नौ साधुना पथा अतिद्रव्य, चातुरक्षौ शवलौ। ये यमेन सधमादम् मदन्ति अथ सुविदत्रान् पितृन् उपेहि।

**व्याख्या-** अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती। तावुद्धत्य प्रेतस्य हस्तयोर्निदधाति अति द्रव सारमेयौ इति द्वाभ्याम्। सूत्रितञ्च- वृक्कावुद्धस्य पाण्योरादध्याद् अति द्रव सारमेयौ श्वानाविति (आ०गृ० ४.३.१६) इति।

हे अग्ने, साधुना पथा समीचीनेन मार्गेण श्वानौ उभौ अति द्रव अतिक्रम्य गच्छ। यमसम्बन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः। कादृशौ श्वानौ सारमेयौ। सरमा नाम काचित् प्रसिद्धा देवशुनी, तस्याः पुत्रौ। चतुरक्षौ उपरिभागे पुनरप्यक्षिद्वयं ययोस्तादृशौ। अथ शोभनमार्गेण गमनानन्तरं ये पितरो यमेन सधमादं सहर्षं मदन्ति तृप्नुवन्ति तान् सुविदत्रान् सुष्ठुभज्ञान् पितॄन् उपेति उपगच्छ।

**सरलार्थः-** (हे अग्ने) नयनचतुष्टयविशिष्टौ विचित्रवर्णयुक्तौ सरमापुत्रौ कुक्कुरौ समीचीनमार्गे अतिक्रम्य गच्छ। ये यमेन आनन्दिताः सन्तः तृप्ताः अभूवन् तेषां बहुज्ञपितॄणां समीपं गच्छ।

**व्याकरणम्-**

- द्रव- द्रु-धातोः मध्यमपुरुषस्य एकवचने रूपमिदम्।
- सारमेयौ- सरमायाः पुत्रौ इत्यर्थे सरमाशब्दस्य स्त्रीभ्यो ढक् इति ढकि आदिवृद्धौ, ढस्य एयादेशे द्वितीयायाः द्विवचने रूपमिदम्।
- चतुरक्षौ-चत्वारि अक्षीणि ययोः तौ इति बहुव्रीहिसमासः।
- सधमादम्- सहपूर्वकमद्-धातोः णमुल्प्रत्यये रूपमिदम्।

**यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ।**
**ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि॥११॥**



**पदपाठः- यौ। ते। श्वानौ। यम। रक्षितारौ। चतुःऽअक्षौ। पथिऽरक्षी इति पथिरक्षी। नृऽचक्षसौ।**

**ताभ्याम्। एनम्। परि। देहि। राजन्। स्वस्ति। च। अस्मै। अनमीवम्। च। धेहि॥११॥**

**अन्वयः-** राजन् यम ते यौ श्वानौ ताभ्याम् एनम् परदेहि। रक्षितारौ चतुराक्षौ पथिरक्षी नृचक्षसौ। अस्मै च अनमीवम् धेहि।

**व्याख्या-** हे राजन्, हे यम, ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां श्वभ्यां हे राजन् यम, एनम् प्रेतं परिदेहि रक्षार्थं प्रयच्छ। कीदृशौ श्वानौ रक्षितारौ यमगृहस्य रक्षकौ। चतुरक्षौ अक्षिचतुष्टययुक्तौ। पथिरक्षो मार्गस्य रक्षकौ। नृचक्षसौ मनुष्यैः ख्याप्यमानौ। श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयन्ति। ताभ्यां श्वभ्यां दत्त्वा  अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं च रोगाभावमपि धेहि सम्पादय।

**सरलार्थः-** हे राजन् यम यौ कुक्कुरौ तव रक्षकौ, नयनचतुष्टयविशिष्टौ, मार्गरक्षकौ, मानवानां द्रष्टारौ, तयोः कुक्कुरयोः समीपम् एनं प्रयच्छ। अस्य मङ्गलं भवतु, एनं रोगहीनं कुरु।

**व्याकरणम्-**

- पथिरक्षी- पन्थानं रक्षति इति पथिन्, ततः रक्ष-धातोः इन्प्रत्यये प्रथमायाः द्विवचने रूपमिदम्।
- नृचक्षसौ- नृन् चक्षाते इति नृपूर्वकचक्ष-धातोः असुन्प्रत्यये रूपमिदम्।
- स्वस्ति- अत्र अव्ययरूपेण प्रयुक्तः।
- राजन्- राजन्शब्दस्य सम्बोधने प्रथमायाः एकवचने रूपमिदम्।
- धेहि- धाशब्दस्य लोटि मध्यमपुरुषस्य एकवचने रूपमिदम्।

**उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु।**
**तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम्॥१२॥**

**पदपाठः- उरुऽनसौ। असुऽतृपौ। उदुम्बलौ। यमस्य। दूतौ। चरतः। जनान्। अनु। तौ।**

**अस्मभ्यम्। दृशये। सूर्याय। पुनः। दाताम्। असुम्। अद्य। इह। भद्रम्॥१२॥**

**अन्वयः-** यमस्य दूतौ जनान् अनुतरतः उरुनसौ असुतृप्तौ उदुम्वलौ। तौ सूर्याय दृशये अद्य इह अस्मभ्यम् पुनः भद्रम् असुम् दाताम्।

**व्याख्या-** यमस्य सम्बिन्धिनौ दूतौ श्वानौ जनान् अनु प्राणिनो लक्षीकृत्य सर्वत्र चरतः। कीदृशौ उरुणसौ दीर्घनासिकायुक्तौ। असुतृपौ परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ उदुम्बलौ उरुबलौ विस्तीर्णबलौ तौ उभौ दूतौ सूर्याय दृश्ये सूर्यस्य दर्शनार्थम् अद्य अस्मिन् दिने इह कर्मणि भद्रम् असुं समीचीनं प्राणं पुनः अस्मभ्यं दाताम् अदत्ताम्।

**सरलार्थः-** यमस्य द्वौ दूतौ यौ दीर्घनासिकाविशिष्टौ, अन्यस्य प्राणसंहारे तृप्तौ बलवन्तौ किञ्च तौ मृतमानवस्य पश्चादेव धावति। ते अस्मभ्यं कल्याणकारकप्राणं प्रयच्छन्तु, येन वयं पुनः सूर्यं द्रष्टुं शक्नुमः।

**व्याकरणम्-**

- उरुणसौ- उरु नासिके ययोः तौ उरुणसौ।
- असुतृपौ- असुभिः तृप्यन्तौ इति असुपूर्वकतृप्-धातोः कप्रत्यये रूपमिदम्।
- उदुम्बलौ- उरु बलं ययोः तौ इति बहुव्रीहिसमासः।
- दाताम्- दा-धातोः लुङि लोटि प्रथमपुरुषस्य द्विवचने रूपमिदम्।

**यमाय सोमं सुनुत यमाय जुहुता हविः।**
**यमं ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः॥१३॥**

**पदपाठः- यमाय। सोमम्। सुनुत। यमाय। जुहुत। हविः। यमम्। ह। यज्ञः। गच्छति। अग्निऽदूतः। अरम्ऽकृतः॥१३॥**

**अन्वयः-** यमाय सोमं सुनुत, यमाय हविः जुहुतः अग्निदूतः यज्ञः अरङ्कृतः यमम् ह गच्छति।

**व्याख्या-** हे ऋत्विजः, यमाय यमदेवतार्थं सोमं सुनुत लतात्मकं सोममभिषुणुत। तथा (यमाय) यमार्थं हविः जुहुतः। अग्निर्दतो यस्मिन्यज्ञे सोऽयम् अग्निदूतः। अग्नेर्दूतत्वमन्यत्राम्नातम्। अग्निर्देवानां दूॅत आसीत् (तै.सं २/५/८/५) इति। अरङ्कृतः बहुभिर्द्रव्यैरलङ्कारररूपैर्युक्तः। तादृशो यज्ञो यमं ह यमम्व गच्छति।

**सरलार्थः-** (हे ऋत्वजः) यमम् उद्दिश्य सोमरसं कुरुत, यमम् उद्दिश्य हविः प्रयच्छत। अग्निः दूतः यस्य स यज्ञः सज्जितः भूत्वा यमस्य समीपमेव गच्छति।

**व्याकरणम्-**

- यमाय- तादर्थ्ये निमित्तार्थे वा चतुर्थी।
- सुनुत- सुशब्दस्य परस्मैपदिनः लोटि मध्यमपुरुषस्य बहुवचने रूपमिदम्।
- जुहुता- हु-धातोः  लोटि मध्यमपुरुषस्य बहुवचने रूपमिदम्।
- अग्निदूतः- अग्निः दूतः यस्मिन् सः इति बहुव्रीहिसमासः।
- अरंकृतः- अलंकृतः, रलयोरभेदः, अभिषवादिसंस्कारोऽलंकारः।

**यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत।**
**स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे॥१४॥**



**पदपाठः- यमाय। घृतऽवत्। हविः। जुहोत। प्र। च। तिष्ठत। सः। नः। देवेषु। आ। यमत्। दीर्घम्। आयुः। प्र। जीवसे॥१४॥**

**अन्वयः-** यमाय घृतवत् हविः जुहोतः प्र च तिष्ठत। देवेषु सः प्रजीवसे नः दीर्घम् आयुः आयमत्।

**व्याख्या-** हे ऋत्विजः, सूर्यं यमाय घृतवत् आज्येन संयुक्तं हविः पुरोडाशादिकं जुहोत जुहुत। प्र च तिष्ठत। यमं यूयमुपतिष्ठध्वञ्च। देवेषु मध्ये स यमो देवः प्रजीवसे प्रकृष्टजीवनार्थं नः अस्माकं दीर्घमायुः आयमत् प्रयच्छतु।

**सरलार्थः-** (हे ऋत्विजः) यमम् उद्दिश्य घृतयुक्तं हविः प्रयच्छत किञ्च तस्मै उपस्थिताः भवत। देवेषु स अस्माकं प्रकृष्टस्य दीर्घजीवनस्य च लाभाय परिचालय।

**व्याकरणम्-**

- घृतवत्- घृतमस्ति अस्य इति घृतशब्दात् मतुप्प्रत्यये रूपमिदम्।
- जुहोत- हु-धातोः लोटि मध्यमपुरुषस्य बहुवचने रूपमिदम्।
- आ यमत्- आ यम्-धातोः लुङि प्रथमपुरुषस्य एकवचने रूपमिदम्।
- आयुः- अत्र आयुः समधातुजं कर्म।
- जीवसे- जीव्-धातोः तुमर्थे असे जीवसे इति, जीवितुम् इत्यर्थे।

**यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन।**
**इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः॥१५॥**

**पदपाठः- यमाय। मधुमत्ऽतमम्। राज्ञे। हव्यम्। जुहोतन। इदम्। नमः। ऋषिऽभ्यः। पूर्वऽजेभ्यः। पूर्वेभ्यः। पथिकृत्ऽभ्यः॥१५॥**

**अन्वयः-** राज्ञे यमाय मधुमत्तमम् हव्यम् जुहोतन। पूर्वजेभ्यः ऋषिभ्यः पूर्वेभ्यः पथिकृद्भ्यः इदं नमः।

**व्याख्या-** हे ऋत्विजः, यमाय राज्ञे मधुमत्तमम् अतिशयेन मधुरं हव्यम् पुरोडाशादिकं जुहोत जुहुत। पूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्योऽत एव पूर्वेभ्यः अस्मत्तः पूर्वभाविभ्यः शोभनमार्गकारिभ्यः ऋषिभ्यः इदं प्रत्यक्षं यथा भवति तथा नमः अस्तु।

**सरलार्थः-**राजानं यमम् उद्दिश्य अतीव मधुनः हविषः द्रव्यस्य आहूतिं यच्छ। पूर्वजान् ऋषीन् पूर्वपथिकृतः उद्दिश्य एतत् नमनम्।

**व्याकरणम्-**



- यमाय- तादर्थ्ये निमित्तार्थे वा चतुर्थी।
- मधुमत्तमम्- मधु अस्ति अस्मिन्निति मधुमत्, अतिशयेन मधुमत् इति तमप्प्रत्यये द्वितीयैकवचने रूपमिदम्।
- जुहोतन- हु-धातोः लोटि मध्यमपुरुषस्य बहुवचने रूपमिदम्।
- पूर्वजेभ्यः- पूर्वे जातः इति पूर्वजः, तेभ्यः।

**त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत्।**
**त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता॥१६॥**

**पदपाठः- त्रिऽकद्रुकेभिः। पतति। षट्। उर्वीः। एकम्। इत्। बृहत्। त्रिऽस्तुप्। गायत्री। छन्दांसि। सर्वा। ता। यमे। आऽहिता॥१६॥**

**अन्वयः-** त्रिकद्रुकेषु पतति। षट् उर्वी, एकम् इत् वृहत्, ता सर्वा त्रिष्टुप् गायत्री छन्दांसि यमे आहितो।

**व्याख्या-** त्रिकुद्रुकेभिः। द्वितीयार्थे तृतीयैषा। त्रिकद्रुकान्। ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका उच्यन्ते। तान् प्रत्यङ्गभावाय संरक्षणार्थञ्च पतति यमस्तान् प्राप्नोति। (षट्) षट्संख्याका उर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति। ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः- षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क् च सूनृता च (आपस्तम्बश्रौ) इति। एकमित् बृहत् महज्जगद्यमश्च प्रतिपालनाय प्राप्नोति। किञ्च यानि त्रिष्टुबायत्र्यादीनि छन्दांसि सन्ति सर्वा सर्वाणि (ता) तानि छन्दांसि यमे आहिता आहितानि। ऋत्विग्भिः स्तुतित्वेनावस्थापितानि॥

**सरलार्थः-** ज्योतिष्टोमादिसोमयागे यमः पततः भवति। षट् भूमयः, बृहद्यागः गायत्र्यादिछन्दांसि च यमे अर्प्यन्ते।

**व्याकरणम्-**

- उर्वीः- उर्वीशब्दस्य द्वितीयायाः बहुवचने रूपमिदम्।



## पाठगतप्रश्नाः-२

११. अस्य सूक्तस्य अष्टमे मन्त्रे अस्मै इत्यत्र कस्मिन् अर्थे चतुर्थी।
१२. अक्तुभिः इति कुत्रत्यं रूपम्।
१३. द्रव इति कुत्रत्यं रूपम्।
१४. यमाय इति कस्मिन् अर्थे चतुर्थी भवति।
१५. जीवसे इत्यस्य कोऽर्थः।



१६. पूर्वजेभ्यः इत्यस्य विग्रहं लिखत।

## ११.२) यमस्वरूपम्

ऋग्वेदस्य देवतागोष्ठीसु यमस्य महत् स्थानं वर्तते। ऋग्वेदस्य त्रिषु सूक्तेषु तद्विषयिणी कथा उपलभ्यते (१०/१३५.१५४)। तद्विहायापि यमस्य तद्भगिन्याश्च कथोपकथनयुतम् अपरम् एकं सूक्तम् अस्ति। तस्य सूक्तस्य नाम 'यमयमीसंवादसूक्तम्' (१०.१०)। वरुण-बृहस्पति-अग्निप्रभृतिभिः देवैः सहापि तस्य स्तुतिः बहुत्र मन्त्रेषु समुपलभ्यते। निरुक्तकारः यास्कः तदीये निरुक्तशास्त्रे यमशब्दस्य व्युत्पत्तिं करोति - 'यमो गच्छतीति सतः'(१०.१९) इति। अत्र यमशब्दः उपरमार्थकाद् यम्धातोः कर्तरि निष्पन्नः। तस्य अर्थः यः प्राणिनः उपरमयति अर्थात् यः प्राणिनां प्राणविच्युतिं करोति इति। निरुक्ते यमशब्देन पुनः अग्निदेवः उच्यते। तथा च निरुक्तं- 'अग्निरपि यम उच्यते'(१०.१२) इति। तत्र यम्धातोः प्रदानरूपः अर्थः अस्ति। यच्छति प्रयच्छति कामान् स्तोतृभ्यः इति यमः। परलोकतत्त्वविषये मृत्योः अमोघताविषये मृत्युपरवर्तिजीवनविषये च ज्ञानं यमसूक्तात् समुपलभ्यते। यमशब्दस्य यमजरूपः अर्थः अपि अस्ति। तत्र यमयमीपदद्वयेन विवस्वत्सरण्वोः संगमेन जातं यमजापत्यद्वयं गृह्यते।

ऋग्वेदे यमः मृत्युरिति नाम्ना मृत्योः अधिष्ठातृदेवरूपेण स्तूयते। मृतस्य आत्मनः सः शरीरप्रदायकः। मृत्योः अनन्तरं सर्वैः जनैः तत्समीपं गन्तव्यम् एव भवति। तथाहि आम्नातं- 'सङ्गमनं जनानाम्' (१०.१४.९) इति। सः अस्माकं पूर्वपुरुषः, मृत्योः परं यः अमृतलोकस्य पन्थानं प्रथमं ज्ञातवान्- 'यमो नो गातुं प्रथमो विवेद' (१०.१४.२)इति। तत्र गत्वा च सः प्रेतलोकस्य अधिपतिः सञ्जातः। स एव मृत्योः परं जनानां कृते आश्रयं निर्दिशति। तथाहि आम्नातं- 'यमो ददात्यवसानम् अस्मै' (१०.१४.९) इति। मृत्योः परं जनानां कृते तैः यत्स्थानम् आश्रयरूपेण निर्दिश्यते तत्र पिशाचादयः अशुभशक्तयः अनिष्टविधानाय असमर्थाः भवन्ति। तस्य स्वकीयं वासस्थानं स्वर्लोकः।

वैदिकमन्त्रेषु सः वैवस्वत इत्युच्यते। निरुक्ते बृहद्देवतायां च सः विवस्वत्सरण्वोः पुत्रः इति ईदृशम् उपाख्यानं लभ्यते। सरमावंशीयौ श्वानौ तस्य दूतौ। श्वानौ च नेत्रचतुष्टयोपेतौ। तयोः नासिके विस्तृते, वर्णः च विचित्रः। मृतः जनः येन पथा गच्छति तस्मिन् पथि तौ रक्षिणौ भवतः। तथाहि आम्नातं- 'पथिरक्षी' (१०.१४.११) इति। श्वानौ एतौ यथा मृतस्य जनस्य क्षतिं विधातुं समर्थौ न भवेतां तदर्थं वैदिकैः ऋषिभिः प्रार्थना क्रियते। तथाहि आम्नातं- 'ताभ्याम् एनं परि देहि राजन् स्वस्ति चास्मै अननीतं धेहि' (१०.१४.१२) इति। अन्ये च कौशिककपोतादयः अपि तस्य दूताः। (१०.१६५.४) इति।

ऋग्वेदमन्त्रेषु सः सर्वत्र राजन् इति सम्बोध्यते। सः जनानां प्रभुः। अतः मन्त्रेषु सः 'विश्पतिः' इति उच्यते। मृतजनः स्वर्गलोकं प्राप्य वरुणेन सह यमराजम् अपि आनन्दोपभोगरतं पश्यति। तथाहि आम्नातं- 'उभा राजाना स्वधया मदन्ता यमं पश्यसि वरुणं च देवम्' (१०.१४.९) इति। सोमपायी इति नाम्ना अपि केषुचित् मन्त्रेषु सः स्तुतः। अस्माकं पूर्वपुरुषैः सह एकत्र उपविश्य सः सोमपानं करोति। तथाहि आम्नातं- 'यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः' (१०.१३५.१) इति।



सर्वेषां सुकर्मणां दुष्कर्मणां च सः साक्षीभूतः। देवत्वं प्राप्नुवद्भिः पितृदेवैः सह तस्य घनिष्ठः योगः। अग्निदेवेन सहापि तस्य मित्रता। अग्निः भवति यमस्य पुरोहितः। यमः इन्दो-ईरानीदेवः इत्यपि श्रूयते लोके, यतो हि ईरानीधर्मग्रन्थभूतायाम् आवेस्तायां तस्य यमस्य नाम पृथक्तया लभ्यते।

ऋषिभिः प्राकृतिकशक्तेः यमस्य सृष्टिः इति न कल्पिता अपि तु, मृतानाम् अधिष्ठातृदेवरूपेण यमस्य कल्पना कृता। यमसूक्ते यमः एव प्रथमं मरणशीलः इति उक्तम्, स एव मृत्योः द्वारं प्रथमम् अतिक्रान्तवान्। मृतानां कृते च पथाम् अनुसन्धानं स एव कृतवान्। तथाहि आम्नातं- 'परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपश्पशानम्' (१०.१४.१) इति।

यमयमी इति एतयोः यमजभ्रात्रोः मेलनेन एव मनुष्याणाम् उत्पत्तिः इति या कथा श्रूयते सा अमूला एव। यमसूक्ते अपि तस्य समर्थनं नास्ति। भारतीयाः कदापि तथाविधं न चिन्तयन्ति। अपि तु संयमधनः यमः स्वभगिनीम् अस्मात् निन्द्यकर्मपाशात् मोचयितुम् आशीर्वादं ददाति। येन सा कामवेगात् शान्ता मुक्ता च बभूव। अन्ते च लज्जिता यमी स्वभ्रातुः यमस्य पादयोः पतति क्षमां च याचते कथा। येन रक्षितः संयमधनो यमः रक्षिता च भारतीया संस्कृतिः इति शम्।



## पाठसारः

अस्मिन् पाठे विद्यमानस्य यमसूक्तस्य षोडशानाः मन्त्राणां मूलविषयः साररूपेण कथ्यते। राज्ञः यमस्य हविषा अर्चणाय यजमानं कथयति। स विवस्वतः पुत्रः किञ्च मृतजनानां मेलनस्थानम्। यमः एव अस्माकं गमनीयस्य मार्गस्य ज्ञाता। यान् देवाः संवर्धयन्ति किञ्च देवान् ये संवर्धयन्ति, (एषु) केचित् स्वाहाद्वारा अन्ये च स्वधाद्वारा (हव्यदानेन) आनन्दिताः भवन्ति। ततः यमम् उद्दिश्य कुशे उपवेशनाय उच्यते। ततः यमं, यज्ञार्हं, विविधरूपयुक्तान् अङ्गरानामकान् पितृगणान् यज्ञस्थाने आगमनाय उच्यते। अङ्गिरानामकानाम्, अथर्वानामकानां, भृगुनामकानाम्, अस्माकं पितृगणानाम् आगमनाय उच्यते। तेषां शुभचिन्तने वयं यथा स्थातुं शक्नुमः एवं प्रार्थ्यते। ततः मृतयजमानं प्रति उच्यते अनादिकालप्रवृत्तेन येन मार्गेण वयं पूर्वजाः यत् स्थानं गताः, त्वमपि तेन मार्गेण गच्छ। ततः पितरं तेषां पूर्वजैः सह मेलनाय प्रार्थितम्। ततः अशुभशक्तिसमूहानाम् अपसरणाय उच्यते। तत नयनचतुष्टयविशिष्टस्य कुक्कुरस्य वर्णनं विद्यमानम्।



## पाठान्तप्रश्नाः

१. यमसूक्तस्य सारं लिखत।
२. यमस्य वर्णनं समन्त्रं कुरुत।
३. अङ्गिरोभिरा... इति मन्त्रं व्याख्यात।
४. परेयिवांसम्... इति मन्त्रं व्याख्यात।



५. यौ ते श्वानौ... इति मन्त्रं व्याख्यात।

६. त्रिकद्रुकेभिः... इति मन्त्रं व्याख्यात।

७. यमाय सोमम्... इति मन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. यमः वैवस्वतः ऋषिः। देवता – यमः, आङ्गिरः पित्रथर्वभृगुसोमाः , लिङ्गोक्तदेवताः पितरः वा श्वानौ। छन्दः – त्रिष्टुप्, अनुष्टुप्, बृहती च छन्दांसि।

२. प्रोपसर्गात् 'उपसर्गाच्छन्दसि धात्वर्थे' इति स्वार्थे वतिप्रत्यये रूपमिदम्।

३. विवस्वतः अपत्यं पुमान् इति विग्रहे अण्प्रत्यये द्वितीयायाः एकवचने रूपमिदम्

४. परापूर्वक-इण्-धातोः क्वसुप्रत्यये द्वितीयायाः एकवचने रूपमिदम्।

५. पूष्णः पोषकस्य देवस्य चक्रम् आयुधं न विनश्यति।

६. ईषदर्थे।

७. धनम्।

८. जन्-धातोः कानच्प्रत्यये प्रथमायाः बहुवचने रूपमिदम्।

९. पूर्वैः कृतम् इति पूर्वशब्दात् यप्रत्यये अकारलोपे भिस ऐसादेशाभावे एत्वे रूपमिदम्।

१०. सहार्थे तृतीया।

**उत्तरकूटः-२**

११. तादर्थ्ये निमित्तार्थे वा।

१२. अक्तुशब्दस्य तृतीयायाः बहुवचने रूपमिदम्।

१३. द्रु-धातोः मध्यमपुरुषस्य एकवचने रूपमिदम्।

१४. तादर्थ्ये निमित्तार्थे वा।

१५. जीवितुम् इत्यर्थे।

१६. पूर्वजेभ्यः- पूर्वे जातः इति पूर्वजः, तेभ्यः।

॥ इति एकादशः पाठः ॥



## १२

# ॥शुनःशेपोपाख्यानम्-१॥

## प्रस्तावना

भारतीयसंस्कृतेः मूलं वेदाः भवन्ति। चत्वारः वेदाः विद्यन्ते। ते च ऋग्वेदः, यजुर्वेदः, सामवेदः, अर्थववेदश्चेति। तत्र अपि चतर्षु वेदेषु ऋग्वेदः अत्यन्तं लोकप्रसिद्धः वर्तते। पुनश्च सम्पूर्णः ऋग्वेदः गद्यमयः विद्यते। पुनश्च ऋग्वेदादिषु विद्यमानानि उपाख्यानानि ऋग्वेदस्य माहात्म्यम् अधिकतया वर्धयन्ति।

शुनःशोपोपाख्यानम् ऋग्वेदस्य अत्यन्तं प्रसिद्धम् आख्यानं विलसति। शुनःशोपोपाख्यानम् ऋग्वेदस्य अनेकेषु सूक्तेषु विद्यते (१/२४-२५)। तेन इयं घटना सत्याश्रिता आसीत् इति प्रतीयते। ऐतरेयब्राह्मणे (७/३) इदमाख्यानमतिविस्तरेण सह वर्णितम् अस्ति। अस्य उपाख्यानस्य आदौ हरिश्चन्द्रस्य अन्ते विश्वामित्रस्य च सम्बन्धं परिकल्प्य परिवर्धितं कृतमस्ति।वरुणस्य कृपातः ऐक्ष्वाकु-नृप-हरिश्चन्द्रस्य गृहे पुत्रोत्पन्नमभवत्। समर्पणसमये अरण्ये तस्य पलायनम्, हरिश्चन्द्रमुदरजन्यरोगोत्पत्तौ, मार्गे अजीगर्तस्य मध्यमपुत्रशुनःशेपस्य क्रयणम्, देवतायाः कृपातस्तस्य वध्यपशत्वात् मुक्तिः विश्वामित्रद्वारेण तं कृतक-पुत्रकरणादीनां घटनायाराख्यानम् अतिप्रसिद्धमस्ति।

अति बृहत् इदम् उपाख्यानम्। अतः यद्यपि एक एव विषयः अनुवर्तते तथापि उपाख्यानस्य त्रेधा भागान् प्रकल्प्य पाठत्रयं रचितम् अस्ति। त्रिषु पाठेषु समग्रम् उपाख्यानमस्ति इति अवधेयम्।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- शुनःशेपोपाख्यानं ज्ञातुं शक्नुयात्।
- शुनःशेपोपाख्यानस्य तात्पर्यं ज्ञातुं शक्नुयात्।
- वैदिकप्रयोगान् ज्ञातुं शक्नुयात्।
- वैदिकलौकिकयोः प्रयोगयोः भेदं ज्ञातुं शक्नुयात्।
- स्वयमेव मन्त्रस्य व्याख्यानं कर्तुं समर्थो भवेत्।
- स्वयमेव श्लोकस्य अन्वयं कर्तुं योग्यो भवेत्।
- सूक्ते स्थितं व्याकरणं ज्ञातुं शक्नुयात्।
- मन्त्रस्य सामान्यार्थम् ज्ञातुं प्रभवेत्।



## प्रथमखण्डः

### १२.१) इदानीम् मूलपाठम् पठाम

हरिश्चन्द्रः ह वैधन ऐक्ष्वाको राजाऽपुत्र आस तस्य ह शतं जाया बभूवुः तासु पुत्रं न लेभे तस्य ह पर्वतनारदौ गृहे ऊषतुः स ह नारदं पप्रच्छ इति।

यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न। किं स्वित् पुत्रेण विन्दते तन्म आचक्ष नारदेति।। इति।

स एकया पृष्टो दशभिः प्रत्युवाच इति।

ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेजीवतो मुखम्।। इति।

यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि। यावन्तो अप्सु प्राणिनां भूयान् पुत्रे पितुस्ततः।। इति।

शश्वत् पुत्रेण पितरोऽत्यायन् वहुलं तमः। आत्मा हि जज्ञे आत्मनः स इरावत्यतितारिणी।। इति।

किं नु मलं किमजिनं किमु श्मश्रुणि किं तपः। पुत्रं ब्रह्माण इच्छध्वं स वै लोकेऽवदावदः।। इति।

अन्नं ह प्राण शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः। सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः व्योमन्।। इति।

पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्।

तस्यां पुनर्नवे भूत्वा दशमे मासि जायते।। इति।



तज्ज्या जाया भवति यदस्यां जायते पुनः। आभूतिरेषा भूतिर्बीजमेतन्नधीयते॥ इति।

देवाश्चैतामृषयश्च तेजः समभरन्महत्। देवा मनुष्यानब्रूवन्नेषा वो जननी पुनः॥ इति।

नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः। तस्मात् पुत्रो मातरं स्वसारं चाधरोहति॥ इति।

एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः। तं पश्यन्ति पशवो, वयांसि च तस्मात्ते मात्राऽपि मिथुनी भवन्ति। इति हास्मा आख्याय॥

## द्वितीयखण्डः

अथैनमुवाच वरुणं राचानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति।

तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य पुत्रो जज्ञे रोहितो नाम इति।

तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति तथेति इति।

स ह निर्दश आस तं होवाच निर्दशो न्वभूद्यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य जायन्तामथ त्वा यजा इति तथेति इति।

तस्य ह दन्ता जज्ञिरे तं होवाचाज्ञत वा अस्य दन्ता यजस्व माऽनेनेति स होवाच या वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति तथेति।



**तस्य ह दन्ता पेदिरे तं होवाचापत्सत वा अस्य दन्ता यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ताः पुनर्जायन्ते**

**अथ न मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति।**

**तस्य ह दन्ताः पुनर्जज्ञिरे तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व माऽनेनेति स होवाच यदा वै क्षत्रियः सांनाहुको भवत्यथ मेध्यो भवति संनाहं नु प्राप्नोत्वथ त्वा यजा इति तथेति।**

**स ह संनाहं प्रापत्तं होवाच संनाहं नु प्राप्नोद्यजस्व माऽनेनेति स तथेत्युक्त्वा पुत्रमामन्त्रयामास ततायं वै मह्यं त्वामददाद्धन्त त्वयाऽहमिमं यजा इति।**

**स ह नेत्युक्त्वा धनुरायारण्यमुपातस्थौ स संवत्सरमरण्ये चचार।**

## प्रथमखण्डः

### १२.१.१) इदानीं मूलपाठम् अवगच्छाम -

**हरिश्चन्द्रः ह वैधस ऐक्ष्वाको राजाऽपुत्र आस तस्य ह शतं जाया वभूवुः तासु पुत्रं न लेभे तस्य ह पर्वतनारदौ गृह ऊषतुः स ह नारदं पप्रच्छ इति।**

**व्याख्या-** हरिश्चन्द्रो नाम राजर्षिः प्रस्कण्वहरिश्चन्द्रावृषी इति पाणिनिना सूत्रितत्वात्। स च वेधसो नृपतेः पुत्र इक्ष्वाकुवंशोद्भवो राजा पुत्रहीन आस। स च शतसंख्यानां जायानां मध्ये कस्यांचिदपि जायायां पुत्रं न लेभे। तस्य राज्ञो गृहे पर्वतनारदनामानौ यावृषी तौ निवासं चक्रतुः। तयोर्मध्ये नारदमृषिमेतयो गाथया राजा पप्रच्छ।

**सरलार्थः-** ईक्ष्वाकुवंशीयः वेधसः पुत्रः राजा हरिश्चन्द्रः अपुत्रः असीत्। तस्य शतं पत्न्यः आसन्। परन्तु ताभिः पुत्रलाभः न जातः। तस्य गृहे पर्वतनारदौ नाम द्वौ ऋषी आस्ताम्। स (हरिश्चन्द्रः) तयोः ऋषयोः नारदं पृष्टवान्।

**व्याकरणम्-**



- आस- अस्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- गाथया- गाथा सर्वैः गातुं योग्या गीतिः। तया इति।

**यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न। किं स्वित् पुत्रेण विन्दते तन्म आचक्ष नारदेति॥ इति।**

**व्याख्या-** ये देवमनुष्यादयो विजानन्ति विवेकज्ञानयुक्ताः। ये च पश्वादयो न विजानन्ति विवेकज्ञानरहिताः। ते सर्वेऽपि नु क्षिप्रं यमिमं पुत्रमिच्छन्ति तेन पुत्रेण किं स्वित् विन्दते किं नाम फलं पित्रा लभते हे नारद मे मह्यं तत्फलमाचक्षेति राज्ञः प्रश्नः।

**सरलार्थः-** ये ज्ञानिनः ये च अज्ञाः ते सर्वैरेव पुत्रः इष्टः, तेन पुत्रेण ते किं लभन्ते इति मां कथयतु।

**व्याकरणम्-**

- विजानन्ति -वि इत्युपसर्गपूर्वकात् ज्ञा-धातोः लट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- विदन्ते- विद्-धातोः लट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

**स एकया पृष्टो दशभिः प्रत्युवाच इति।**

**व्याख्या-** स नारद एकया गाथया पृष्टः सन् दशभिर्गाथाभिः प्रत्युत्तरमुक्तवान्।

**सरलार्थः-** स (नारदः) एकया गाथया पृष्टः दशभिः गाथाभिः उत्तरं दत्तवान्।

**व्याकरणम्-**

- पृष्टः - प्रच्छ-धातोः तप्रत्ययान्तं रूपम्।
- उवाच- वच्-धातोः लिट-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेजीवतो मुखम्॥ इति।**

**व्याख्या-** उत्पन्नस्य सुखस्य जीवतः पुत्रस्य मुखं पिता यदि पश्येतदानीमस्मिन् पुत्रे स्वकीयमृणं लौकिकं वैदिकं च संनयति। सम्यगवस्थापयति। लौकिकस्य अवस्थापनात् पुत्रपौत्रादिभिः ऋणं प्रत्यर्पणीयमिति स्मृतकारा आहुः। वैदिकं त्रिभिः ऋणवा जायत इत्यादि श्रुत्युक्तं पूर्वमेवोदाहृतम्। तस्य च पुत्रावस्थापनं संपत्तिनामकेन कर्मणा सम्पद्यते। तच्च कर्म वाजसनेयिभिः आम्नातम्। -'अथातः संपत्तिर्यदा प्रैष्यन् मन्यते अथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याहाहं यज्ञोहं लोक इति। ब्रह्म मया कर्तव्यं वेदाध्ययनं मया अनुष्ठेया यज्ञाश्च मया संपाद्य उत्तमा लोकाश्चेत्येतत् सर्वं पुत्रेण त्वयैव संपादनीयमिति पितृवाक्यस्यार्थः। सर्वमहं संपादयिष्यामीति पुत्रवाक्यस्यार्थः॥



अत्राप्यारण्यककाण्डे संक्षिप्य संदर्शयिष्यते- सोस्यायमात्मा पुणेभ्यः कर्मभ्यः प्रतिधीयते इति। एवमृणं पुत्रे समर्पयति। तथैवामृतत्वं मरणरहितं मुक्तिपदं च गच्छति। पुत्रार्पितलौकिकवैदिकभारस्याविघ्नेन तत्त्वज्ञानसंपादनात्।

**सरलार्थः-** पिता यदि उत्पन्नस्य किञ्च जीवितस्य पुत्रस्य मुखदर्शनं कुर्यात् तर्हि पुत्राय समस्तं वैदिकं लौकिकं च ऋणं प्रदाय अमृतत्वं लभते।

**व्याकरणम्-**

- गच्छति- गम्धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- पश्येत्- दृश्-धातोः विधिलिङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

### यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि। यावन्तो अप्सु प्राणिनां भूयान् पुत्रे पितुस्ततः॥ इति।

**व्याख्या-** पृथिव्यां भोगाः सस्यनिवासादयः। जातवेदस्याग्नौ भोगा दहनपचनादयः। अप्सु भोगाः स्नानपानादयः। प्राणिनामेते सर्वे भोगा यावन्तः सन्ति ततस्तावद्भ्यः सर्वेभ्यो भोगेभ्यो भूयानभ्यधिकः पितुः पुत्रे भोगो विद्यते। अत्यन्तसुखहेतुत्वात्। तथा चाहुः- पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः इति।

**सरलार्थः-** पृथिव्यां प्राणिगणेषु यः भोगः उपलभ्यमानः, अग्नौ जले च यः भोगः उपलभ्यमानः, पितुः कृते सर्वाधिकः भोगः पुत्रे एव विराजमानः अस्ति।

**व्याकरणम्-**

- भोगाः - भोग इति पुंलिङ्गस्य अकारान्तप्रातिपदिकस्य प्रथमायाः बहुवचने रूपम्।भोगाः इत्युक्ते भोग्यविषयसमूहः।
- अप्सु- अप् इति स्त्रीलिङ्गस्य नित्यं बहुवचनान्तस्य प्रातिपदिकस्य सप्तम्याः बहुवचने रूपम्।

### शश्वत् पुत्रेण पितरोऽत्यायन् वहुलं तमः। आत्मा हि जज्ञे आत्मनः स इरावत्यतितारिणी॥ इति।

**व्याख्या-** पितरो जनका उत्पन्नेन पुत्रेण शश्वत् सर्वदा लोकद्वयेपि बहुलमभ्यधिकं तम् ऐहिकमामुष्मिकं च दुःखमत्यायन्नतिक्रामन्ति। तथा वौधायन आह- पुदिति नरकस्याख्या दुःखं च नरकं विदुः। पुत्तस्तारणात्ततः पुत्रमिहेच्छन्ति परत्र च। इति। किं च हि यस्मात् कारणात् पितुः पुत्र उत्पन्न इत्युक्ते सति पिता स्वस्मात् स्वयमेव यज्ञ उत्पन्न इत्युक्तं भवति। ततः पिता यथा स्वयं स्वकीयं दुःखं विनाशयेत् तथा पुत्रोप्येतद्दुःखं विनाशयतीति द्रष्टव्यम्। तस्मात् स पुत्र इरावत्यन्नयुक्तातितारिणी नदीसमुद्रादेरतितरणहेतुर्नौरति शेषः। यथा नोर्दुर्घटं नद्यादिकं तारयत्येवं पुत्रोप्यैहिकमामुष्मिकं च दुःखं तारयतीत्यर्थः।

**सरलार्थः-** पिता सर्वदा (इहलोके परलोके च) पुत्रस्य साहाय्यार्थं बहुदुःखम् अतिक्रामति। यतः आत्मरूपस्य पितुः समीपे आत्मा एव पुत्ररूपेण जायते। अतः एव पुत्रः पितुः समीपे दुःखार्णवस्य अतिक्रमणं कर्तुं योग्यः अन्नयुक्तः उत्कृष्टः नौकातुल्यः।

**व्याकरणम्-**

- जज्ञे- जनी(प्रादुर्भावे ) इत्यस्मात् लिट्-लकारस्य धातोः प्रथमपुरुषस्य एकवचने रूपम्।
- आत्मा- आत्मन् इति नकारान्तप्रातिपदिकस्य प्रथमायाः एकवचने रूपम्।

**किं नु मलं किमजिनं किमु श्मश्रुणि किं तपः। पुत्रं ब्रह्माण इच्छध्वं स वै लोकेऽवदावदः॥ इति।**

**व्याख्या-** अत्र मलाजिनश्मश्रुतपः शब्दैराश्रमचतुष्टयं विवक्षितम्। मलरूपाभ्यां शुक्लशोणिताभ्यां संयोगान्मलशब्देन गार्हस्थ्यं विवक्षितम्। कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम्। क्षौरकर्मराहित्याच्छाश्रशब्देन वानप्रस्थं विवक्षितम्। मलं गार्हपत्यं किं नु किं नाम सुखं करिष्यति न किञ्चिदत्यर्थः। एवमुत्तरत्रापि योज्यम्। हे ब्रह्माणो विप्रा विप्रक्षत्रियाद्याः सर्वे यूयं सुखहेतुत्वात् पुत्रमिच्छध्वम्। स वै एव पुत्रोवदावदो लोकः। वदितुमयोग्यानि निन्दावाक्यान्यवदास्तैर्वाक्यैर्नोद्यन्ते न कथ्यन्ते इत्यवदावदः। अवदावदो दोषराहित्यान्निन्दानर्ह इत्यर्थः। तादृशो लोको भोगहेतुः पुत्रः। तस्मादाश्रमेभ्योप्याधिक्येन पुत्रेच्छा कर्तव्या यद्यपि हरिश्चन्द्रः एवात्र प्रष्टा तथापि तेन सह ऋषीणां बहूणां सभायामवस्थानाद् ब्रह्माण इति सम्बोधनम्।

**सरलार्थः-** गार्हस्थ्येन ब्रह्मचर्येण वानप्रस्थेन पारिव्राज्येन किं भवेत्। हे विप्रगणाः, यूयं पुत्रं कामयत, पुत्रः एव आनन्दनीयः।

**व्याकरणम्-**

- इच्छध्वम्- इष्-धातोः मध्यमपुरुषस्य बहुवचने वैदिकं रूपम्।
- अवदावदः - वदितुम् अयोग्यानि निन्दावाक्यानि अवदाः। तैः वाक्यैः न उद्यते न कथ्यते इति अवदावदः।

**अन्नं ह प्राण शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः। सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः व्योमन्॥ इति।**

**व्याख्या-** अन्नादयो लोके सुखहेतुत्वेन प्रसिद्धाः। यथा हि शरीरे प्राणावस्थितिहेतुत्वादन्नमेव प्राणः। वासः शीतोपद्रवाद्रक्षकत्वेन शरणं गृहसमानम्। हिरण्यं कर्णाभरणादिकं दृष्टिप्रियत्वाद्रूपसंपादकम्। पशवो गवाश्वादयो विवाहविशेषेण निर्वाहकाः। जाया भोगे सहकारित्वात् सखा ह सखिस्वरूपैव। एवमेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिकमल्पमेव सुखं प्रयच्छन्ति। दुहिता ह पुत्रीति कृपणं केवलदुःखकारित्वाद्दैन्यहेतुः। तथा च स्मर्यते-



संभवे स्वजनदुःखकारिका संप्रदानसमयेऽऽर्थहारिका।

यौवनेऽपि बहुदोषकारिका दारिका हृदयदारिका पितुः। इति।

पुत्रो ह पुत्रस्तु ज्योतिःस्वरूपं तमोनिवारकत्वेन स हि पितरं परमे व्योमन्नुत्कृष्ट आकाशे परब्रह्मस्वरूपेऽवस्थापयति। आकाशस्तल्लिङ्गादित्यनेन पूर्वमेवामृतत्वं च गच्छतीत्यत्र प्रतिपादितम्।

**सरलार्थः-** अन्नमेव प्राणः (प्राणधारणस्य सहायकः), वस्त्रमेव शरणं (आश्रयः), हिरण्यमेव रूपं (रूपोत्पादकः), विवाहः एव पशुलाभस्य उपायः। जाया पत्नी वा सखिस्वरूपा, दुहिता दुःखस्य हेतुः, परन्तु पुत्र एव उत्कृष्टः ऊर्ध्वलोके ज्योतिःस्वरूपः।

**व्याकरणम्-**

- सखा- सखिन् इति प्रातिपदिकस्य प्रथमायाः एकवचने रूपम्।
- दुहिता- दुहितृ इति प्रातिपदिकस्य प्रथमायाः एकवचने रूपम्।

**पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्।**
**तस्यां पुनर्नवे भूत्वा दशमे मासि जायते॥ इति।**

**व्याख्या-** पत्युराकारद्वयमस्ति। वर्तमानपुरुषाकार एको रेतोरूपेण गर्भाकारो द्वितीयः। जायाया अपि आकारद्वयमस्ति। पतिरूपमाकारं प्रति जाया भवति। गर्भरूपमाकारं प्रति माता भवति। अतः स तादृशः पतिः स्वयं रेतोरूपेण गर्भो भूत्वा पूर्वमवस्थितां जायां भविष्यदाकारेण मातरं सतीं प्रविशति। तस्यां मातरि पुनर्नवो भूत्वा पूर्वमन्यस्यां मातर्युत्पन्नो जरठः। इदानीं पुनर्नूतनवालो भूत्वा तस्यामिदानीन्तन्यामस्यां मातरि गर्भपाके सति दशमे मास्युत्पद्यन्ते तस्मात् पुत्रः स्वस्मादन्यो न भवति।

**सरलार्थः-** पतिः (रेतोरूपेण) जायां प्रविशति, गर्भरूपेण स एव (भविष्यत्काले विद्यमानां) मातरं प्रविशति। स एव पुनः दशमासाभ्यन्तरे उत्पन्नः भवति।

**व्याकरणम्-**

- प्रविशति- प्र इत्युपसर्गपूर्वकात् विश्(प्रवेशने) इत्यर्थकात् धातोः प्रथमपुरुषस्य एकवचने रूपम्।
- भूत्वा- भू- (सत्तायाम्) इत्यर्थकात् धातोः क्त्वाप्रत्ययान्तं रूपम्।
- जायते- जनी(प्रादुर्भावे) इत्यस्मात् धातोः प्रथमपुरुषस्य एकवचने रूपम्।

**तज्ज्या जाया भवति यदस्यां जायते पुनः। आभूतिरेषा**
**भूतिर्वीजमेतन्नधीयते॥ इति।**

**व्याख्या-** यद्यस्मात्कारणादस्यां गर्भधारिण्यामयं पिता पुत्ररूपेण पुनर्जायते तत्तस्मात्कारणाल्लोकप्रसिद्धा या जायाऽस्ति सा जायतेऽस्यामिति व्युत्पत्त्या जायाशब्दवाच्या भवति। किं चैषा भूत्याभूतशब्दाभ्यामभिधीयते। भवत्यस्यां पुत्ररूपेण पतिरित्येषा भूतशब्दवाच्या रेतोरूपेणऽऽगत्यास्यां



पुत्ररूपेण भवतीत्याभूतिशब्दवाच्या। एतदेतस्यां स्त्रियां बीजं रेतोरूपं निधीयते प्रक्षिप्यत् तस्मादुक्ताः शब्दा उपपद्यन्ते।

**सरलार्थः-** पतिः पत्नीमध्ये (पुत्ररूपेण) पुनः जायते, तस्मात् पत्नी जाया (जाया इति आख्यां लभते) भवति। सा एव भूतिः आभूतिः इति शब्दद्वयवाच्या भवति, एतस्यामेव बीजं स्थापितं भवति।

**व्याकरणम्-**

- जायते- जनी(प्रादुर्भावे) इत्यस्मात् धातोः प्रथमपुरुषस्य एकवचने रूपम्।
- भवति- भू(सत्तायाम्) इत्यर्थकात् धातोः प्रथमपुरुषस्य एकवचने रूपम्।

## देवाश्चैतामृषयश्च तेजः समभरन्महत्। देवा मनुष्यानब्रूवन्नेषा वो जननी पुनः॥ इति।

**व्याख्या-** एतामेतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं महत्तेजो रेतोरूपं सारं समभरन् पुत्रोत्पादनाय संपादितवन्तः। स्वयमेव संपाद्य ततो मनुष्यानित्यब्रूवन्। हे मनुष्या जायारूपेण वर्तते सेयं युष्माकं पुत्ररूपे जन्मनि जननी भवति।

**सरलार्थः-** देवाः मनुष्याः च एतस्मिन् (पत्नीगर्भे) महातेजसः स्थापनं चक्रुः, देवाः मनुष्यान् प्रति उक्तवन्तः- हे मनुष्याः एषा पुनः युष्माकं जननी भविष्यति।

**व्याकरणम्-**

- अब्रूवन्- ब्रूञ्-धातोः लङ्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

## नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः। तस्मात् पुत्रो मातरं स्वसारं चाधरोहति॥ इति।

**व्याख्या-** लोको लोकजन्यं सुखपुत्रस्य नास्ति। नहि पुत्रदर्शनेन यत्सुखं तदन्यदर्शनेन क्वचिदपि दृश्यते इति यदस्ति तत्सर्वे गोमहिष्यादयो जानन्ति यस्मात्तस्मादेव कारणात् पशुजातौ जातः पुत्रो वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति।

**सरलार्थः-** अपुत्रस्य कश्चिदपि लोकः न भवति- एतस्मिन् विषये सर्वे पशवः जानन्ति। एतस्मात् कारणात् (पशुषु) पुत्रः स्वस्य जनन्या भगिन्या वा (पुत्रोत्पादनाय) मिलति।

**व्याकरणम्-**

- अस्ति- अस्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अधिरोहति- अधि इत्युपसर्गपूर्वकात् रुह्-धातोः प्रथमपुरुषस्य एकवचने रूपम्।



**एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः। तं पश्यन्ति पशवो, वयांसि च तस्मात्ते मात्राऽपि मिथुनी भवन्ति॥ इति हास्मा आख्याय॥**

**व्याख्या-** पुत्रिण पुत्रवन्तो देवमनुष्यादयो विशोकाः शोकरहिताः सन्तो यं पन्थानं सुखानुभवरूपं मार्गमाक्रमन्ते प्राप्नुवन्त्येष पन्थाः पुत्रासुखानुभवरूपो मार्ग उरुगाय उरुभिर्महद्भिः शास्त्रज्ञैः राजामात्यादिभिश्च गीयते। तथा सुशेव सुष्ठु सेवितुं योग्यः सुखाधिक्यस्य विद्यमानत्वात्। तं पुत्रसुखानुभवरूपं पशवो गवादयो वयांसि पक्षिणः संपश्यन्ति जानन्ति। तस्मात्ते पशुपक्ष्यादयः पुत्रसुखार्थं मात्रा सह मिथुनीभवन्ति किं किमुतान्यया स्त्रिया सहेत्यर्थः।

इति (अनेन प्रकारेण) ह अस्मै (राज्ञे हरिश्चन्द्राय) आख्याय (अभिधाय) (स नारदः विरराम इति शेषः)।

**सरलार्थः-** पुत्रवन्तः जनाः विगतशोकाः भवन्तः यं मार्गं स्वीकुर्वन्ति स मार्ग एव बहुजनैः प्रशंसनीयः किञ्च सुष्ठुतया सेवनस्य योग्यः। पशवः पक्षिणः च एतस्मिन् विषये जानन्ति, अतः एव ते स्वस्य मात्रा मिलति। (नारदर्षिः) तं (हरिश्चन्द्रं) एतत् सर्वम् उक्तवान्।

**व्याकरणम्-**

- पश्यन्ति- दृश्-धातोः लट्-लकारस्य प्रथमपुरुषस्य बहवचने रूपम्।
- भवन्ति- भू-धातोः लट्-लकारस्य प्रथमपुरुषस्य बहवचने रूपम्।
- आक्रमते- आङ् इत्युपसर्गपूर्वकात् क्रमु-धातोः प्रथमपुरुषस्य एकवचने रूपम्।



## पाठगतप्रश्नाः-१

१. हरिश्चन्द्रः कस्य पुत्रः।

२. हरिश्चन्द्रस्य पुत्रः आसीत् न वा।

३. हरिश्चन्द्रस्य कति पत्न्यः सन्ति।

४. हरिश्चन्द्रस्य कौ ऋषी स्तः।

५. तयोः ऋषयोः कं हरिश्चन्द्रः पृष्टवान्।

६. नारदः कतिभिः गाथाभिः प्रत्युत्तरितवान्।

७. पितुः निकटे कस्मिन् सर्वाधिकभोगः तिष्ठति।

८. किं प्राणतुल्यम्।

९. किं शरणम्।

१०. भूतिः आभूतिः इति शब्दद्वयस्य का वाच्या भवति।



## द्वितीयखण्डः

### १२.१.२) इदानीं मूलपाठम् अवगच्छाम -

**अथैनमुवाच वरुणं राचानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति।**

**व्याख्या-** पुत्रनिमित्तलाभप्रतिपादिका नारदोक्ता दश गाथा उगाहृत्य पुत्रजन्मोपायोपदेशपरं नारदवाक्यमवतारयति-

अथ पुत्रेच्छानिमित्तकथनानन्तरमेनं पुत्रार्थिनं हरिशचन्द्रं नारद उवाच। हे हरिशचन्द्र वरुणं राजानमुपधार प्रार्थयस्व। येन प्रकारेण निश्चयः सोऽभिधीयते। हे वरुण त्वत्प्रसादान्मे पुत्रो जायतां ततस्तेन पुत्रेण त्वां यजै त्वामुद्दिश्य यज्ञं करवाणीति।

**सरलार्थः-** अनन्तरं (नारदः) हरिश्चन्द्रम् उक्तवान्- भवान् राज्ञः वरुणस्य निकटे प्रार्थयतु यत् मम पुत्रः जायताम्। तेन(पुत्रेण) अहं त्वाम् उद्दिश्य यागं करिष्यामि।

**व्याकरणम्-**

- उवाच – वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जायताम्- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लोट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य पुत्रो जज्ञे रोहितो नाम इति।**

**व्याख्या-** नारदोपदेशमङ्गीकृत्य हरिशचन्द्रो। वरुणमुपसारे प्रार्थयामास। स वरुणोऽपि तथाऽस्त्विति तदीयपुत्रोत्पत्त्यै वरं दत्तवान्। तेन च वरोणत्पन्नस्य रोहित इत्येतन्नामाभूत्।

**सरलार्थः-** तथैव करिष्यामि। (एवम् उक्त्वा) हरिश्चन्द्रः राज्ञः वरुणस्य समीपम् अप्रार्थयत् मम पुत्रः जायताम्, तं प्रदाय तव यागं करिष्यामि। (वरुणः उवाच) तथैव भवतु। अनन्तरं तस्य रोहितनामकः एकः पुत्रः अजायत।

**व्याकरणम्-**

- जायताम्- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लोट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जज्ञे- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।



**तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति तथेति इति।**

**व्याख्या-** अथ बहुभिः पर्यायैवरुणस्योक्तिर्हरिशतन्द्रस्य प्रत्युक्तिश्चेत्युभयं प्रतिपाद्यते। तत्र प्रथमं पर्यायं दर्शयति-

तं हरिशचन्द्र वरुणं उवाच। हे हरिशचन्द्र ते पुत्रोऽजनि वा उत्पन्न एवानेन पुत्रेण मामुद्दिश्य यागं कुर्विति। एवं वरुणेनोक्ते हरिशचन्द्रः पुनः प्रत्युवाच। यागार्थः पशुर्यदा निर्दशो भवति तदा स पशुर्मेध्यो यागयाग्यो भवति। निर्गतान्यशौचदिनानि दशसंख्याकानि यस्मात् पशोः सोऽयं निर्दशः। तस्मादयं नु क्षिप्रं निर्दशोऽस्तु। अथानन्तरं त्वा प्रत्यहं यजा इत्यतद्वाक्यं वरुणस्तथाऽस्त्वित्यङ्गीचकार।

**सरलार्थः-** (अनन्तरं) वरुणः तम् (हरिश्चन्द्रं) अवदत्- तव पुत्रः अजायत, तेन माम् उद्दिश्य यागं कुरु। हरिश्चन्द्रः उक्तवान्- (जन्मनः परं) दशदिनेषु अतिक्रान्तेषु एव पशुमेध्यागः भवति। अतः शीघ्रं दश दिनानि गच्छन्तु ततः त्वाम् उद्दिश्य यागं करिष्यामि। (वरुणः उक्तवान्) तथैवास्तु।

**व्याकरणम्-**

- उवाच- वच- धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- भवति- भू(सत्तायाम्) इत्यर्थकात् धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**स ह निर्दश आस तं होवाच निर्दशो न्वभूद्यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य जायन्तामथ त्वा यजा इति तथेति इति।**

**व्याख्या-** दशदिनाशौचापगमे शुद्धत्वाद्यथा यागयोग्यत्वं तथा दन्तोत्पन्नत्वादयवसंपूर्त्या यागयोग्यत्वमित्यभिप्रायः। स्पष्टमन्यत्।

**सरलार्थः-** तस्य(रोहितस्य) दशदिनानि गतानि, (तदा वरुणः) हरिश्चन्द्रम् उक्तवान्- दश दिनानि गतानि, अधुना त्वम् अनेन यागं कुरु। हरिश्चन्द्रः उवाच- यदा पशुदन्तः भवति, तदा स मेध्यः भवति। अस्य दन्तः भवतु। ततः वयं यागं करिष्यामः। (वरुणः उक्तवान्) तथैवास्तु।

**व्याकरणम्-**

- जायन्ते- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- भवति- भू(सत्तायाम्) इत्यर्थकात् धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जायन्ताम्- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लोट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- उवाच- वच- धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।



**तस्य ह दन्ता जज्ञिरे तं होवाचाज्ञत वा अस्य दन्ता यजस्व माऽनेनेति स होवाच या वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति तथेति।**

**व्याख्या-**अज्ञत वै जाता एव। पद्यन्ते पतन्ति। प्रथमोत्पान्नानां दन्तानमस्थायित्वेन मुख्यपश्ववयवत्वाभावात्तात्पाते सति पशोर्मेध्यत्वम्।

**सरलार्थः-** ततः तस्य दन्ताः अजायन्त। (वरुणः) हरिश्चन्द्रम् अवदत् अस्य दन्ताः सञ्जाताः, अधुना मम अनेन यागं कुरु। हरिश्चन्द्रः उक्तवान्- यदा पशुदन्ताः पतन्ति तदा स मेध्यः भवति, अस्य दन्ताः पतन्तु तदा त्वाम् उद्दिश्य यागं करिष्यामः। (वरुणः उक्तवान्) तथैवास्तु।

**व्याकरणम्-**

- उवाच- वच- धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जज्ञिरे- जनी इति धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- पद्यन्ते - पद-गतौ इति धातोः लट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- पद्यन्ताम्- पद-गतौ इति धातोः लोट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

**तस्य ह दन्ता पेदिरे तं होवाचापत्सत वा अस्य दन्ता यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ताः पुनर्जायन्ते अथ न मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति।**

**व्याख्या-**अपत्सत वै पतिताः। पुनरुत्पन्नानां दन्तानां स्थिरत्वेन संपूर्णावयवत्वात् पशोर्मेध्यत्वम्।

**सरलार्थः-** तस्य (रोहितस्य) दन्ताः पतितवन्तः। (वरुणः) हरिश्चन्द्रम् उवाच- अस्य दन्ताः पतिताः, अधुना एभिः मम यागं कुरु। हरिश्चन्द्रः उक्तवान्- यदा पशुदन्ताः पुनः जायन्ते तदा स मेध्यः भवति। अतः अस्य दन्ताः पुनः जायन्तां ततः तव यागं करिष्यामः। (वरुणः उक्तवान्) तथैवास्तु।

**व्याकरणम्-**

- जायन्ताम् -जनी प्रादुर्भावे इति धातोः लोट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- भवति- भू(सत्तायाम्) इत्यर्थकात् धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जायन्ताम्- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लोट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

**तस्य ह दन्ताः पुनर्जज्ञिरे तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व माऽनेनेति स होवाच यदा वै क्षत्रियः सांनाहुको भवत्यथ मेध्यो भवति संनाहं नु प्राप्नोत्वथ त्वा यजा इति तथेति।**



**व्याख्या**-अज्ञात वै जाता एव। पश्वन्तरस्य पुनर्दन्तोत्पत्तिक्रमेण मेध्यत्वेऽप्यस्य पशोः क्षत्रियत्वात् स्वजात्युचितधनुर्वाणकवचादिसिंहनाहशीलित्वे सति जात्युचितव्यापारसंपूर्तौ मेधात्वम्। तस्मान्नु क्षिप्रमेवासौ संनाहं प्राप्तोत्वन्तरमेव यजा इत्युत्तरं वरुणोऽङ्गीचकार।

**सरलार्थः**- तस्य (रोहितस्य) दन्ताः पुनः उत्पन्नाः, तम् (हरिश्चन्द्रं) उक्तवान्- अस्य दन्ताः पुनः उत्पन्नाः। अधुना एभिः मम यागं कुरु। हरिश्चन्द्रः उक्तवान्- क्षत्रियः यदा सन्नाहुकः भवति तदा स मेध्यः भवति। मम पुत्रः सन्नाहुकः भवतु तदा तव यागं करिष्यामः। (वरुणः उक्तवान्) तथैवास्तु।

**व्याकरणम्**-

- उवाच- वच- धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जज्ञिरे- जनी इति धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- प्राप्नोति- प्र इत्युपसर्गकात् आप्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

### स ह संनाहं प्रापत्तं होवाच संनाहं नु प्राप्नोद्यजस्व माऽनेनेति स तथेत्युक्त्वा पुत्रमामन्त्रयामास ततायं वै मह्यं त्वामददाद्धन्त त्वयाऽहमिमं यजा इति।

**व्याख्या**- संनाहप्राप्तोरुर्द्धं स हरिशचन्द्रो वरुणोक्तिमङ्गीकृत्य पुत्रमामन्त्र्यैवमुवाच। उपलालनार्थं पुत्रे पिततृवाचितशब्दप्रयोगः। हे तात हे पुत्राय एव वरुणो मह्यं त्वां पुत्रवरेण दत्तवान्। हन्त दुष्टोऽहमिमं वरुणं यत्त्वया पुत्रेण यजै यागरूपां करवाणीति हरिशचन्द्रस्योक्तिः।

**सरलार्थः**- ततः स बालकः सन्नाहुकः अभवत्। (वरुणः) हरिश्चन्द्रम् उवाच- अयं सन्नाहुकः जातः। अतः अनेन मम यागं कुरु। (राजा) हरिश्चन्द्रः तथैव भवतु इत्युक्त्वा पुत्रम् आहूय अवदत् - वत्स अयं वरुणदेवः त्वां मह्यं प्रदत्तवान्। अहो (अधुना) त्वया वरुणम् उद्दिश्य यागः कर्तव्यः।

**व्याकरणम्**-

- उवाच- वच- धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- प्राप्नोति- प्र इत्युपसर्गकात् आप्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- यजस्व – यज इत्यर्थकात् लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।

### स ह नेत्युक्त्वा धनुरायारण्यमुपातस्थौ स संवत्सरमरण्ये चचार।

**व्याख्या**-स ह स खलु रोहिताख्यः पुत्रः पितृवाक्यं निषिध्य स्वरक्षणार्थं धनुः स्वीकृत्याहरणं प्रत्युपगतोऽभूत्। कस्मिंश्चिदरण्यो नैरन्तर्येन स रोहितः संवत्सरं चचारेति।

**सरलार्थः**- तत् नैव भवतु इत्युक्त्वा स रोहितः धनुः आदाय अरण्यं गतवान्। किञ्च एकवत्सरं यावत् स अरण्ये विचरन् आसीत्।

**व्याकरणम्-**

- चचार – चर-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उक्त्वा - वद्- धातोः क्त्वाप्रत्ययान्तं रूपम्।



## पाठगतप्रश्नाः-२

११. अस्मिन् पाठे कस्य कथा वर्णिता।

१२. हरिश्चन्द्रः राज्ञः वरुणस्य समीपम् किम् अप्रार्थयत्।

१३. हरिश्चन्द्रः कम् उद्दिश्य यागं कृतवान्।

१४. पशुमेध्ययागः कदा अनुष्ठीयते।

१५. कीदृशो पशुः पशुमेध्ययागयोग्यो भवति।

१६. हरिश्चन्द्रः कम् उक्तवान् यत् अस्य दन्ताः सञ्जाताः।

१७. कः धनुः आदाय अरण्यं गतवान्।

१८. सन्नाहुकः इत्यस्य कः अर्थः।

१९. हरिश्चन्द्रः स्वस्य गृहस्थं नारदर्षिं किम् पृष्टवान्।

२०. सः कथं प्रत्युत्तरितवान्।



## पाठसारः

अस्मिन् पाठे एकम् उपाख्यानम् अस्ति। एवमेव शुनःशेपोपाख्याने हरिश्चन्द्रस्य कथा वर्णिता। तत्र हरिश्चन्द्रस्य यद्यपि शतं पत्न्यः आसन् तथापि तस्य कश्चदपि पुत्रः नासीत्। तस्मात् स स्वस्य गृहस्थं नारदर्षिं पृष्टवान्। स दशभिः गाथाभिः प्रत्युत्तरितवान्। स विविधप्रकारेण पुत्रस्य माहात्म्यम् अवदत्। यथा पुत्रः सर्वाधिकभाग्यविषयः पितुः निकटे इत्यादिप्रकारेण। तत् सर्वमेव मन्त्रेषु स्पष्टमेव।



## पाठान्तप्रश्नाः

१. शुनःशेपोपाख्यानम् इत्यस्य सारं लिखत।

२. हरिश्चन्द्रो ह वैधस... इति शुनःशेपोपाख्यानांशं सायणभाष्यानुसारि व्याख्यानं कुरु।

३. अन्नं ह प्राणः... इति शुनःशेपोपाख्यानांशं सायणभाष्यानुसारि व्याख्यानं कुरु।

४. पतिर्जायां प्रविशति... इति शुनःशेपोपाख्यानांशं सायणभाष्यानुसारि व्याख्यानं कुरु।



५. नापुत्रस्य... इति शुनःशेपोपाख्यानांशं सायणभाष्यानुसारि व्याख्यानं कुरु।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. वेधसः।

२. आम्।

३. शतम्।

४. पर्वतनारदौ।

५. नारदम्।

६. दशभिः।

७. पुत्रे।

८. अन्नम्।

९. वस्त्रम्।

१०. पत्नी।

**उत्तरकूटः-२**

११. हरिश्चन्द्रस्य।

१२. मम पुत्रः जायताम्।

१३. वरुणम्।

१४. जन्मनः परं दशदिनेषु अतिक्रान्तेषु।

१५. यागार्थः पशुर्यदा निर्देशो भवति तदा स पशुर्मेध्यो यागयाग्यो भवति।

१६. वरुणम्।

१७. रोहितः।

१८. कवचपरिधानस्य योग्यः पुरुषः।

१९. शतं पत्न्यः सत्यपि तस्य कश्चदपि पुत्रः किमर्थं नासीत् इति।

२०. दशभिः।

॥ इति द्वादशः पाठः ॥

# १३

# ॥शुनःशेपोपाख्यानम्-२॥

## प्रस्तावना

वेदे यथा सूक्तानि वर्णितानि तथैव आख्यानमपि वर्णितम्। एवमेव एकम् उपाख्यानम् अस्ति। तत् शुनःशेपोपाख्यानम् इति आख्यातम्। ऋग्वेदीयैतरेयब्राह्मणस्य ३३तमे अध्याये इदम् उपाख्यानं वर्णितम्। अति बृहत् इदम् उपाख्यानम्। अतः यद्यपि एक एव विषयः अनुवर्तते तथापि उपाख्यानस्य त्रेधा भागान् प्रकल्प्य पाठत्रयं रचितम् अस्ति। त्रिषु पाठेषु समग्रम् उपाख्यानमस्ति इति अवधेयम्। पूर्वपाठे शुनःशेपोपाख्यानम् अधीतम्। तत्र शुनःशेपोपाख्यानस्य पञ्चखण्डेषु प्रथमखण्डः द्वितीयखण्डश्च वर्णितौ। अस्मिन् पाठे भवन्तः शुनःशेपोपाख्यानस्य तृतीयखण्डं चतुर्थखण्डं च पठिष्यन्ति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- शुनःशेपोपाख्यानं ज्ञातुं शक्नोति।
- शुनःशेपोपाख्यानपठनेन नीतिशिक्षां प्राप्तुं शक्नुयात्।
- तृतीयखण्डस्य विषयं ज्ञातुं शक्नोति।
- चतुर्थखण्डस्य विषयं ज्ञातुं शक्नोति।
- स्वयमेव मन्त्रस्य व्याख्यानं सम्पादयितुं शक्यो भवेत्।
- स्वयमेव मन्त्रस्य अन्वयादिकं ज्ञातुं प्रभवेत्।
- मन्त्रे स्थितं व्याकरणं ज्ञातुं प्रभवेत्।

---

## तृतीयखण्डः

---

### १३.१) इदानीम् मूलपाठम् पठाम

**अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे तदु ह रोहितः शुश्राव सोऽरण्याद्ग्रामममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-**



नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम। पापो नृषद्वरो जन इन्द्र इच्चरतः सखा चरैवेति॥

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः। शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताश्चरैवेति।

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-
आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।

शेते निपद्यमानस्य चराति चरतो भगश्चरैवेति॥ इति।

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-
कलिः शयानो भवति संजिहानस्तु द्वापरः।

उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरंश्चरैवेति॥ इति।

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चमं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-

चरन् वै मधु विन्दति चरन् स्वादुमुदुम्वरम्।

सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरंश्चरैवेति। इति।

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-



तस्य ह त्रयः पुत्राः आसुः शुनःशेपः शुनोलाङ्गुल इति तं होवाच ऋषेऽहं ते शतं ददाम्यहमेषामेषामेकेनात्मानं निष्क्रीणा इति स ज्येष्ठं पुत्रं निगृह्णान् उवाच न न्विममिति ने एवेममिति कनिष्ठं माता तौ ह मध्यमे संपादयां चक्रतुः शुनःशेपे तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद् ग्राममेयाय इति।

स पितरमेत्योवाच तत हन्ताहमनेनात्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच तमेतमभिषेचनीये पुरुषं पशुमालेभे॥ इति।

## चतुर्थखण्डः

तस्य ह विश्वामित्रो होताऽहसीज्जदग्निरध्वर्युर्वसिष्ठो
ब्रह्माऽयास्य उद्गाता तस्मा उपकृताय नियोक्तारं
न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं
शतं दत्ताहमेनं नियोक्ष्यामीति तस्मा अपरं
शतं ददुस्तं स निनियोज इति।

तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय
विशसितारं न विविदुः स होवाचाजीगर्तः सौयव-
सिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा
अपरं शतं ददुः सोऽसिं निःशान एयाय इति।



अथ ह शुनःशेप ईक्षांचक्रेऽमानुषामिव वै मा
विशसिष्यन्ति हन्ताहं देवता उपधावामीति
स प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं
कतमस्यामृतानामित्येतयर्चा इति।

तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति
सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा इति।

तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधा-
वेति स सवितारमुपससाराभि त्वा देव सवितरित्ये-
तेन तृचेन इति।

तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमे-
वोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता इति।

तं वरुण उवाचग्निर्वै देवानां मुखं सुहृ-
दयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति
सोऽग्निं तुष्टावात उत्तराभिर्द्वाविमशत्या इति।

तमग्निरुवाच विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्याम
इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो
अर्भकेभ्यो इत्येतयर्चा इति।

तं विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो
वलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं



**नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव**
**यच्चिद्धि सत्य सोमपा इति**
**चैत्येन सूक्तेनोत्तरस्य च पञ्च दशभिः इति।**

**तस्मा इन्द्र स्तूयमानः प्रीतो मनसा हिरण्यरथं**
**ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति इति।**

**तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति**
**सोऽश्विनौ तुष्टावात उत्तरेण तृचेन इति।**

**तमश्विना उचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन। इति**

**तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं**
**भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस॥ इति।**

---

### १३.१.१) इदानीं मूलपाठम् अवगच्छाम - (तृतीयखण्डः)

**अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे तदु ह रोहितः शुश्राव**
**सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-**

**व्याख्या-** अथ रोहितस्यारण्ये संवत्सरवासानन्तरमेवैक्ष्वाकमिक्ष्वाकु-वंशोत्पन्नं हरिश्चन्द्रं वरुणो देवो रोगरूपेण जग्राह। वरुणेन गृहीतस्य हरिश्चन्द्रस्योदरं जज्ञे जलेन पूरितमुच्छूनं महोदरनामकं रोगस्वरूपमुत्पन्नम्। तदु ह तदपि सर्वमरण्ये स्थितो रोहितः पुत्रो मनुष्यमुखाच्छुश्राव। श्रुत्वा च स रोहितः पितरं द्रष्टुमरण्याद्ग्रामं प्रत्याजगाम। आगच्छन्तं रोहितं मार्गमध्य इन्द्रः केनचिद्ब्राह्मणपुरुषरूपेण प्राप्येदमुक्तवान्।



**सरलार्थः-** अनन्तरं वरुणः इक्ष्वाकुवंशीयं राजानम् अधिकृतवान्, तस्य उदयरोगः सञ्जातः। रोहितः तां कथां श्रुतवान्, सः अरण्यात् ग्रामम् आगतवान्। (तदा) इन्द्रः पुरुषरूपेण तस्य समीपम् आगत्य उक्तवान्-

**व्याकरणम्-**

- उवाच- - ब्रू- धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- जज्ञे - जनी(प्रादुर्भावे) इति धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्

### नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम। पापो नृषद्वरो जन इन्द्र इच्चरतः सखा चरैवेति॥ इति।

**व्याख्या-** आ समन्ताच्छ्रान्त आश्रान्तः सर्वत्र पर्यटनेन श्रान्तिं प्राप्तस्तद्विपरीतोऽनाश्रान्त एकत्रैव निवासशीलस्तादृशाय तथाविधस्य पुरुषस्य श्रीर्वहुविधा सम्पन्नास्ति। यद्वा नानेति पदच्छेदः। श्रान्ताय सर्वत्र पर्यटनेन श्रान्तस्य नाना श्रीर्वहुविधा सम्पदस्तीत्यनेन प्रकारेण रोहित वयं नीतिकुशलानां पुरुषाणां मुखाच्छुश्रुम। वरो जनो विद्यादिभिः श्रेष्ठोऽपि पुरुषो नृषत् पापो नृषु मनुष्येषु सीदतीति नृषत्। श्रेष्ठोऽपि वन्धुगृहेषु सर्वदाऽवस्थितस्तैरवज्ञातः पापस्तुच्छो भवेत्। अतस्तव पितृगहे वासो न युक्तः। न चारण्ये चरतो मम सहायो नास्तीति शङ्कनीयम्। इन्द्र एव परमेश्वर एव चरतस्तव सखा भविष्यति। तस्माच्चरैव सर्वथाऽरण्ये चरस्वेत्येवमुवाच। एवं वहुष्वपि पर्यायेषु द्रष्टव्यम्॥

तत्रेन्द्ररोहितयोः संवादे प्रथमं पर्यायं दर्शयित्वा द्वितीयं पर्यायं दर्शयति-

**सरलार्थः-** हे रोहित, वयं शृणुमः यत् यः (भ्रमणात्)श्रान्तः न भवति तस्य बहुविधसम्पदः लाभः न भवति। किञ्च श्रेष्ठजनः अपि मानवसमाजे (एकस्थाने) स्थित्वा सर्वैः अवज्ञातः भूत्वा क्लेशं प्राप्नोति।

**व्याकरणम्-**

- चर- चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- शुश्रुम- श्रु (श्रवणे) इत्यर्थकात् धातोः लिट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।

### चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीयं संवत्सरमरण्ये चचार सोऽरऱण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-

**व्याख्या-** ब्राह्मणरूपस्य इन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात् पितरं द्रष्टुं ग्रामं तमागच्छन्तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच।



**सरलार्थः-** ब्राह्मणः मां विचरणाय उक्तवान् इति चिन्तयित्वा स (रोहितः) द्वितीयवत्सरम् अरण्ये व्यचरत्। ततः अरण्यात् ग्रामम् आगते सति पुरुषरूपी इन्द्रः तस्य समीपम् आगत्य उक्तवान्-

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- चचार – चर-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अवोचत्- वच(परिभाषणे) इत्यर्थकात् धातोः लुङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः। शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताश्चरैवेति।**

**व्याख्या-** चरतः पर्यटनं कुर्वतः पुरुषस्य जङ्घे पुष्पिण्यौ भवतः। यथा पुष्पयुक्तो वृक्षः शाखा लता वाऽथवा सुगन्धोपेता सेव्या भवत्येवं चरतो जङ्घे श्रमजयेन सेव्ये भवतः। तथैवात्मा मध्यदेहो भूष्णुवर्धिष्णुः फलग्रहिरारोग्यरूपफलयुक्तो भवति। यथा वर्धमानो वृक्षः कालेन फलानि गृह्णात्येवं चरतः पुरुषस्य वीजादिदीपनादिपाटवेन मध्यदेहः आरोग्यरूपं फलं गृह्णाति। तथैवास्य चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्टे तीर्थक्षेत्रादिमार्गे श्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन हता विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति। यथा शयानाः पुरुषाः स्वकार्यं कृषिवाणिज्यादिकं कर्त्तुमशक्ता एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुमसमर्था इत्यर्थः। तस्मात् सर्वथाऽरण्ये चर न पितुर्गृहेऽवतिष्ठस्व॥

तृतीयं पर्यायं दर्शयति-

**सरलार्थः-** यः जनः पर्यटनं करोति तस्य जङ्घे सुनिर्मिते भवतः। एवं स शोभनसम्पन्नः भवति। तस्य शरीरं वर्धमानं भवति। एवं स आरोग्यादिकं लभते। उत्कृष्टे मार्गे पर्यटनजनितश्रमेण समस्ते पापे विनष्टे सति स शायितः भवति। अतः त्वं विचर।

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- हताः - हन्-धातोः क्तप्रत्ययान्तं रूपम्।

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-**



**व्याख्या-** पूर्ववत्।(ब्राह्मणरूपस्य इन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात् पितरं द्रष्टुं ग्रामं तमागच्छन्तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच।)

**सरलार्थः-** ब्राह्मणः मां विचरणाय उक्तवान् इति चिन्तयित्वा स (रोहितः) तृतीयवत्सरम् अरण्ये व्यचरत्। ततः अरण्यात् ग्रामम् आगते सति पुरुषरूपी इन्द्रः तस्य समीपम् आगत्य उक्तवान्-

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- चचार – चर-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अवोचत्- वच(परिभाषणे) इत्यर्थकात् धातोः लुङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।**

**शेते निपद्यमानस्य चराति चरतो भगश्चरैवेति॥ इति।**

**व्याख्या-** भगः सौभाग्यमासीनस्योपविष्टस्याऽऽस्ते तथैव तिष्ठति न तु वर्धते। अभिवृद्धिहेतोरुद्योगस्याभावात्। तिष्ठत उपवेशनं परित्यज्योत्थापनं कुर्वतः पुरुषस्य भग उर्द्धोऽभिवृद्धेरुन्मुखस्तिष्ठति। कृषिवाणिज्याद्युद्योगस्य संभावितत्वात्। निपद्यमानस्य भूम्यौ शयानस्य भगः शेते निद्रां करोति। विद्यमानधनरक्षादिचिन्ताया अप्यभावात् सर्वथैव विनश्यति। चरतस्तेषु तेषु देशेष्वर्जनार्थं पर्यटनं कुर्वतः पुरुषस्य भगः सौभाग्यं चरति दिने दिने वर्धते। तस्मात्वं चरैवेति न त्वेकत्र तिष्ठ॥

**सरलार्थः-** यः जनः आसनस्थः भवति तस्य भाग्यमपि आसनस्थं भवति, यः उत्थितः भवति तस्य भाग्यमपि उत्थितं भवति। यः शयितः भवति तस्य भाग्यमपि शयितं भवति। यः पर्यटनं करोति तस्य भाग्यं सर्वदा विचरति। अतस्त्वं सदा विचर।

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- तिष्ठतः - स्था- धातोः लट्-लकारस्य प्रथमपुरुषस्य द्विवचनान्तं रूपम्।
- शेते- शीङ्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचनान्तं रूपम्।

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार**

**सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-**



**व्याख्या-** पूर्ववत्।(ब्राह्मणरूपस्य इन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात् पितरं द्रष्टुं ग्रामं तमागच्छन्तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच।)

**सरलार्थः-** ब्राह्मणः मां विचरणाय उक्तवान् इति चिन्तयित्वा स (रोहितः) चतुर्थवत्सरम् अरण्ये व्यचरत्। ततः अरण्यात् ग्रामम् आगते सति पुरुषरूपी इन्द्रः तस्य समीपम् आगत्य उक्तवान्-

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- चचार – चर-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अवोचत्- वच(परिभाषणे) इत्यर्थकात् धातोः लुङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**कलिः शयानो भवति संजिहानस्तु द्वापरः।**

**उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरंश्चरैवेति॥ इति।**

**व्याख्या-** चतस्रः पुरुषस्यावस्थाः। निद्रा तत्परित्याग उथ्थानं संचरणं चेति। ताश्चोत्तरश्रेष्ठत्वात् कलिद्वापरत्रेताकृतयुगैः समानाः। ततश्चरणस्य सर्वोत्तमत्वाच्चरैवेति।

पञ्चमं पर्यायं दर्शयति-

**सरलार्थः-** कलिः शेते, द्वापरः त्यजति, त्रेता उत्तिष्ठति, कृते विचरणेन सम्पदः लाभः भवति। अतस्त्वं विचर।

(कलिः, द्वापरः, त्रेता, कृतञ्च एते चत्वारि पौराणिकयुगविभागस्य नामानि। एतेषाम् उत्तरोत्तरं श्रेष्ठप्रतिपादनार्थं पुरुषस्य चतस्राः अवस्थाः प्रतिपादिताः- निद्रा, जागरणं, उत्थानं, वचरणं च। एतानि क्रमेण पुरुषस्य ऊर्ध्वगतिः सूच्यते।)

**व्याकरणम्-**

- संपद्यते- सम् इत्युपसर्गपूर्वकात् पद् (गतौ) इत्यर्थकात् धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्च मं संवत्सरमरण्ये चचार**

**सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-**



**व्याख्या-** पूर्ववत्।(ब्राह्मणरूपस्य इन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात् पितरं द्रष्टुं ग्रामं तमागच्छन्तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच।)

**सरलार्थः-** ब्राह्मणः मां विचरणाय उक्तवान् इति चिन्तयित्वा स (रोहितः) पञ्चमवत्सरम् अरण्ये व्यचरत्। ततः अरण्यात् ग्रामम् आगते सति पुरुषरूपी इन्द्रः तस्य समीपम् आगत्य उक्तवान्-

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- चचार – चर-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अवोचत्- वच (परिभाषणे) इत्यर्थकात् धातोः लुङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**चरन् वै मधु विन्दति चरन् स्वादुमुदुम्वरम्।**
**सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरंश्चरैवेति। इति।**

**व्याख्या-** चरन्नेव पुरुषः कश्चिद् वृक्षाग्रे मधु माक्षिकं लभते। क्वचित् स्वादु मधुरमुदुम्वरादिफलविशेषं लभते। एतदुभयमुपलक्षणम्। तत्र तत्र विद्यमानं भोगविशेषं लभते। तत्र सूर्यो दृष्टान्तः। यः सर्वत्र चरन्नपि न तन्द्रयते कदाचिदप्यलसो न भवति तस्य सूर्यस्य श्रेमाणं श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य। तस्माच्चरैव॥

इत्थमिन्द्राकृतेन रोहितोपदेशेन चरतो रोहितस्य स्वजीवने पितुरारोग्ये च कारणभूतं श्रेयोलाभं दर्शयति-

**सरलार्थः-** यः जनः विचरति स मधु (श्रेयोवस्तु) लभते, स मधुनः स्वादुम् उदुम्वरनामकं फलं लभते। यः सूर्यः सततं विचरन् अपि आलस्यग्रस्तः न भवति, तस्य सूर्यस्य महात्म्यम् अवलोकय। अतस्त्वं विचर।

**व्याकरणम्-**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- चरन्- चर (गतौ) इति धातोः शतृप्रत्ययान्तं रूपम्।
- विन्दति - विद् इति धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- पश्य – दृश् (दर्शने) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार सोऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय इति।**



**व्याख्या-** षष्ठे संवत्सरे पूर्ववदरण्यसञ्चारी स ह रोहितः कञ्चिदृषिं तस्मिन्नरण्ये उपेयाय प्राप्तवान्। कीदृशमृषिमजीगर्तनामकं सूर्यवसस्य पुत्रमशनया परीतमन्नालाभेन क्षुत्पीडितम्॥

अथाजीगर्तरोहितयोः संवादं दर्शयति-

**सरलार्थः-** ब्राह्मणः मां विचरणाय उक्तवान् इति चिन्तयित्वा स (रोहितः) षष्ठवत्सरम् अरण्ये व्यचरत्। अनन्तरं सूर्यवसपुत्रम् अजीगर्तम् ऋषिं क्षुधापीडितरूपेण प्राप्तवान्।

**व्याकरणम् -**

- चर - चर (गतौ) इत्यर्थकात् धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।
- चचार – चर-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अवोचत्- वच (परिभाषणे) इत्यर्थकात् धातोः लुङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**तस्य ह त्रयः पुत्राः आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गुल इति तं होवाच ऋषेऽहं ते शतं ददाम्यहमेषामेषामेकेनात्मानं निष्क्रीणा इति**

**स ज्येष्ठं पुत्रं निगृह्णान् उवाच न न्विममिति ने एवेममिति कनिष्ठं माता तौ ह मध्यमे संपादयां चक्रतुः शुनःशेपे तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद् ग्राममेयाय इति।**

**व्याख्या-** तस्याजीगर्तस्य शुनःपुच्छादिनामकास्त्रयः पुत्रा आसुः। पुत्रवन्तमृषिं रोहित उवाच। हे ऋषे, ते तुभ्यमहं गवां शतं ददामि। दत्त्वा चाहमेषां पुत्राणां मध्ये एकेन केनचित्पुत्रेणात्मानं मद्देहं वरुणान्निष्क्रीणे मूल्यं दत्त्वात्मानं मोचयामीति। एवमुक्तो सोऽजीगर्तो ज्येष्ठं पुत्रं शुनःपुच्छनामकं हस्तेन निगृह्णानः स्वसमीपे समाकर्षन् रोहितं प्रत्येवमुवाच। तुभ्यमेकः पुत्रो दीयत इमं तु शुनःपुच्छं तु न ददामि। मम प्रियत्वात् इति। ततो माता कनिष्ठं हस्तेन गृहीत्वैवमुवाच। इमं शुनोलाङ्गूलं मम प्रियं नो एव सर्वथा न ददामि इति। ततस्तावुभौ मातपितरौ मध्यमे पुत्रे शुनःशेपे दानं सम्पादयांचक्रतुरङ्गीकृतवन्तौ। ततस्तस्याजीगर्तस्य स रोहितो गवां शतं दत्त्वा तं शुनःशेपमादायावस्थितः। ततः स रोहितस्तेन शुनःशेपेन सहारण्यात् स्वकीयं ग्रामं प्रात्याजगाम॥

तदागमनादूर्द्धकालीनं वृत्तान्तं दर्शयति-

**सरलार्थः-** तस्य (ऋषेः अजीगर्तस्य) शुनःपुच्छः, शुनःशेपः, शुनोलाङ्गुलः इति त्रयः पुत्राः आसन्। स अजीर्गतम् उवाच- हे ऋषे अहं त्वाम् एकशतं गाः ददामि, अस्य कृते एषु एकं निष्क्रियरूपण प्रदाय अहं मुक्तः भविष्यामि। (तदा) अजीगर्तः ज्येष्ठपुत्रस्य समीपम् आदाय उक्तवान् एनं मास्तु।



कनिष्ठस्य समीपम् आदाय माता उक्तवती एनं मास्तु। तौ शुनःशेपं दातुं स्वीकृतवन्तौ। तदा तस्मै एकशतं गाः प्रदाय शुनःशेपम् आदाय अरण्यात् ग्रामम् आगतवान्।

**व्याकरणम्-**

- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- दत्त्वा - दा- धातोः क्त्वाप्रत्ययान्तं रूपम्।
- चक्रतुः - कृ-धातोः लिट्-लकारस्य प्रथमपुरुषस्य द्विवचने रूपम्।

**स पितरमेत्योवाच तत हन्ताहमनेनात्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच तमेतमभिषेचनीये पुरुषं पशुमालेभे॥ इति।**

**व्याख्या-** स रोहितः पितरमागत्यैवमुवाच। हे तत पितर्हन्तावयोर्हर्षः सम्पन्नः। अहमनेन शुनःशेपरूपेण मूल्येनात्मानं मद्देहं वरुणान्निष्क्रीणै मूल्यं दत्त्वाऽत्मानं मोचयामीत्यर्थः। तथोक्ते स हरिश्चन्द्रो वरुणमुपेत्यानेन शुनःशेपेन ब्राह्मणेन त्वा त्वां यक्ष्यामीत्युक्तवान्। स वरुणोऽपि तथेत्यङ्गीकृत्यैवमुवाच। क्षत्रियात्तव पुत्राद्रोहितादप्ययं ब्राह्मणो भूयानभ्यधिक एव मम प्रिय इति। उक्त्वा तस्मै हरिश्चन्द्राय कर्त्तव्यत्वेन राजसूयमुपदिदेश च। स हरिश्चन्द्रो राजसूयं प्रक्रम्य तस्य मध्ये योऽयमभिषेचनीयाख्य एकाहः सोमयागस्तस्मिंस्तमेतं शुनःशेपनं पुरुषं पशुमालेभे सवनीयपशुत्वेनालब्धुं निश्चितवान्॥

**सरलार्थः-** रोहितः पितुः निकटं गत्वा उक्तवान् हे पितः अहम् एनं पुरुषं प्रदाय स्वस्य मुक्तिम् इच्छामि। तदा हरिश्चन्द्रः राज्ञः वरुणस्य समीपं गत्वा उक्तवान् अहम् अनेन पुरुषेण तव यागं करिष्यामि। वरुणः उवाच तथैवास्तु। क्षत्रियात् ब्राह्मणः अवश्यम् एव श्रेष्ठः। एवम् उक्त्वा स हरिश्चन्द्रं राजसूयनामकयज्ञक्रतोः अनुष्ठानाय उपदिष्टवान्। हरिश्चन्द्रः अपि अभिषेचनीययज्ञे शुनःशेपं मनुष्यपशुरूपेण आदिष्टवान्।

**व्याकरणम्-**

- हन्ता - हन्-धातोः लुट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- प्रोवाच – प्र इत्युपसर्गपूर्वकात् वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- आलेभे- आङ् इत्युपसर्गपूर्वकात् लभ-धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।



## पाठगतप्रश्नाः-१



१. कस्य उदररोगः सञ्जातः।
२. इन्द्रः पुरुषरूपेण कस्य समीपमागतवान्।
३. वरुणः कमुक्तवान् यत् मम उदररोगः सञ्जातः।
४. कः अरण्यात् ग्रामं प्रत्यागतवान्।
५. कस्य भाग्यम् आसनस्थं भवति।
६. कस्य भाग्यम् उत्थितं भवति।
७. कस्य भाग्यं शयितं भवति।
८. कस्य भाग्यं सर्वदा विचरति।
९. रोहितः कति वत्सराण्यरण्ये व्यचरत्।
१०. यः जनः विचरति सः किं वस्तु लभते।

---

### १३.१.२) इदानीं मूलपाठम् अवगच्छाम - (चतुर्थः खण्डः)

**तस्य ह विश्वामित्रो होताहहसीज्जदग्निरध्वर्युर्वसिष्ठो ब्रह्माहयास्य उद्गाता तस्मा उपकृताय नियोक्तारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति तस्मा अपरं शतं ददुस्तं स निनियोज इति।**

**व्याख्या-** विश्वामित्रादयो महर्षयस्तस्य हरिश्चन्द्रस्य यागे राजसूये होत्रादय श्चत्वारो महर्त्विज आसन्।तत्र जमदग्निरधवर्युरभिशेचनीये सोमयागे तं शुनःशेपं सवनीयपशुत्वेनोपाकृतवान्। बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकार उपाकरणम्। तत ऊर्ध्वं युपबन्धनं नियोजनम्। तस्य क्रूरकर्मत्वादधवर्युर्न नियोजने प्रवृत्तः। तत उपाकृतायास्मा उपाकरणेन संस्कृतस्य शौनःशेपस्य नियोक्तारं यूपे वन्धनकर्तारं क्रूरं कंचिदपि पुरुषं न विविदुर्न लेभिरे। तदानिं सुर्यवसस्य पुत्रः शुनःशेपस्य पिता सोऽजीगर्त (उवाच) मह्यं पूर्वस्माच्छतादपरं गोशतं हे यजमानार्त्मिजो दत्त ततोऽहमेनं शुनःशेपं यूपे नियोक्ष्यामि रशनया कट्यां शिरसि पादयोर्बद्धा रशनाग्रस्य यूपे बन्धनं नियोजनं तदहं करिष्यामीति। तस्मा अजीगर्तायापरं गोशतं ददुः। तं च शुनःशेपं सोजीगर्तो निनियोज। धातोद्विर्भावं परित्यज्योपसर्गस्य द्विर्भावश्छान्दसः।

**सरलार्थः-** तस्य हरिश्चन्द्रस्य विश्वामित्रः होता, जमदग्निः अध्वर्युः, वशिष्ठः ब्रह्मा अयास्यः च उदगातारः अभूवन्। उपाकरणात् परं पशोः नियोक्ता अप्राप्तः आसीत्। तदा सूर्यवसपुत्रः अजीगर्तः



उक्तवान्, मह्यम् एकशतं गाः यच्छ, अहं तं यूपे बध्नामि। हरिश्चन्द्रः तस्मै एकशतं गाः दत्तवान्। स तं तत्र नियोजितवान्।

**व्याकरणम्-**

- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- दत्ता- दा-धातोः क्तप्रत्ययान्तं रूपम्।
- विविदुः - विद्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- ददुः - दा-धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

**तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय**
**विशसितारं न विविदुः स होवाचाजीगर्तः सौयव-**
**सिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा**
**अपरं शतं ददुः सोऽसिं निःशान एयाय इति।**

**व्याख्या-** उपाकरणनियोजने पूर्वमुक्ते आप्रीसंज्ञिताभिरेकादशभिः प्रयाजयाज्याभिरयद्यजनं तदाप्रीणनम्। दर्भरूपेणोल्मुकेन त्रिःप्रदक्षिणीकरणं तत्पर्यग्निकरणम्. तथाविधसंस्कारचतुष्टयक्ताय तस्मै तस्य शुनःशेपस्य विशसितारं हिंसितारं पुरुषं क्रुरात्मानं कंचिदपि पुरुषं न लेभिरे। ततोजीगर्तः पूर्ववदपरं गोशतं गृहीत्वा मारयितुमसिं खर्गं निःशानो निशितं तीक्ष्णं कुर्वन्नेवेयाय जगाम। पितुरजीगर्तस्य (शुनःशेपस्य) वृत्तान्तं दर्शयति--

**सरलार्थः-** तस्य शुनःशेपस्य उपाकरणकर्मणः नियोजनकर्मणः च समाप्त्यनन्तरम् आप्रीमन्त्रपाठस्य पर्यग्निकरणानुष्ठानस्य च समाप्त्यनन्तरं तस्य हननाय कोपि न प्राप्तः। तदा सूर्यवसपुत्रः अजीगर्तः उवाच मह्यम् एकशतं गाः यच्छ, अहम् अस्य वधं करिष्यामि। हरिश्चन्द्रः पुनः एकशतं गाः दत्तवान्। सोपि असिं तीक्ष्णीकृत्य गतवान्।

**व्याकरणम्-**

- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- दत्ता- दा-धातोः क्तप्रत्ययान्तं रूपम्।
- विविदुः - विद्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- ददुः - दा-धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- एयाय- इन्-धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- विशसिष्यामि - वि इत्युपसर्गपूर्वकात् णिजन्तात् शस्-धातोः लृट्-लकारस्य उत्तमपुरुषस्य एकवचने रूपम्।



**अथ ह शुनःशेप ईक्षांचक्रेऽमानुषामिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चा इति।**

**व्याख्या-** अथ पितुः पुत्रमारण्योद्योगानान्तरं शुनःशेपः पुत्रो मनस्यवमीक्षां चक्रे विचारितवान्। अन्यत्र पर्यग्निकृतं पुरुषमारण्यांश्चोत्सृजन्ति। अहिंसाया इति श्रुतेः। पर्यग्निकरणादूर्ध्वं मनुष्यं परित्यजन्ति। एते तु माममानुषमिव मनुष्यव्यतिरिक्तमजादिपशुमिव विशसिष्यन्ति मारयिष्यन्ति। हन्त हा कष्टमेतत्संपन्नम्। अहमितः परं रक्षार्थं देवता उपधावामि भजामीती विचार्य देवानां मध्ये प्रथमं मुख्यं प्रजापतिमेव कस्य नूनमित्यृचोपससार सेवितवान्।

तस्य प्रजापतेः सबकारित्वेनाग्नेः सेवां दर्शयति--

**सरलार्थः-** तदा शुनःशेपः अचिन्तयत् यत् एते माम् अमानवः इव वधं करिष्यन्ति। अहो अहं देवतां शरणं नेष्यामि। एवं चिन्तयित्वा स देवेषु मुख्यं प्रजापतिं 'कस्य नूनं कतमस्यामृतानाम्' इति ऋचा उपासितवान्।

**व्याकरणम्-**

- ईक्षांचक्रे - ईक्ष्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- विशसिष्यन्ति - वि इत्युपसर्गपूर्वकात् णिजन्तात् शस्-धातोः लृट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

**तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससासाग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा इति।**

**व्याख्या-** तं सेवकं शुनःशेपं प्रजापतिरेवमुक्तवान्। अग्निः सर्वेषां देवानां नेदिष्टो हविर्वहनेनातिसमीपवर्ती. अतस्तमेवोपास्स्वेत्युक्तः शुनःशेपोग्नेर्वयमित्यृचाग्निमुपासितवान्।

तस्य चाग्नेः सहकारित्वेन सवितुरुपासनं दर्शयति--

**सरलार्थः-** प्रजापतिः तम् उक्तवान्- अग्निरेव देवेषु निकटतमः। अतः तस्य आश्रयं गृह्णातु। स(शुनःशेपः) 'अग्नेर्वयं प्रथमस्यामृतानाम्' इति ऋचा अग्न्युपासनां कृतवान्।

**तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधा-वेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन इति।**



**व्याख्या-** प्रसवानां सर्वेषु कार्येषु प्रेरणारूपानामनुज्ञानात् सवितेशः स्वामी भवति। तस्मात्तमेवोपधावेत्यग्निनोपदिष्टोभि त्वेति तृचेन सवितारमुपासितवान्।

तस्य च सवितुः सहकारित्वेन वरुणस्योपासनं दर्शयति-

**सरलार्थः-** अग्निः (शुनःशेपं) तम् उक्तवान् सविता एव प्रेरणादाने समर्थः, अतः त्वं सवितुः उपासनां कुरु। सोऽपि 'अभि त्वा देव सवितः' इति ऋचा सवितुः उपासनां कृतवान्।

### तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमे-
### वोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता इति।

**व्याख्या-** हे शुनःशेप वरुणार्थं त्वं यूपे वद्धोस्यतो वरुणमुपास्स्वेति सवित्रोक्तः पूर्वस्मात्सवितृविषयात्तृचादुत्तराभिरेकत्रिशत्संख्याकाभिर्ऋग्भिर्वरुणामुपासितवान्। न हि ते क्षत्रम् (१-२४-६) इत्याद्याः सूक्तशेषभूता दशर्चो यच्चिद्धि ते विशः(१-२९-१) इत्यादिकमेकविंशत्यृचं सूक्तमित्येवमेकत्रिंशत्संख्या द्रष्टव्या।

तस्य वरुणस्य सहकारित्वेन पुनरप्यग्नेरुपासनं दर्शयति-

**सरलार्थः-** सविता तम् उवाच, त्वं राज्ञः वरुणस्य कृते यूपे संबद्धः। त्वं तस्यैव उपासनां कुरु। सोऽपि(शुनःशेपः) पूर्वोक्तानां त्र्याणां मन्त्राणां स्थाने एकत्रिंशदृग्भिः वरुणदेवतायाः उपासनां कृतवान्।

### तं वरुण उवाचग्निर्वै देवानां मुखं सुहृ-
### दयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति
### सोऽग्निं तुष्टावात उत्तराभिर्द्वाविमशत्या इति।

**व्याख्या-** अयमग्निः सर्वेषां देवानां मुखं मुखस्थानीयः। अग्निद्वारानैव सर्वैर्देवैर्हविःस्वीकारात्। अत एव प्रीत्या हविर्वहनादतिशयेन सुहृदयः। सुहृदयतमं तमग्निं नु क्षिप्रं स्तुहीति वरुणेनोक्तः। पूर्वोक्ताभ्य ऋग्भ्य उत्तराभिद्वाविंशतसंख्या-काभिर्ऋग्भिरग्निं तुष्टाव। वसिष्वाहीत्यादिकं (६-२६-५) दशर्चं सूक्तम्। अश्वं नत्वा(१-२७-१) इत्यादिकं त्रयोदशर्चं सूक्तम्। तत्रान्त्यां परित्यज्य वसिष्वसूक्तद्वयगता ऋचो द्वाविंशतिसंख्याकाः। अग्नेः सहकारित्वेन विश्वेषां देवानामुपासनं दर्शयति--

**सरलार्थः-** वरुणः तम्(शुनःशेपं) उक्तवान्- अग्निरेव देवेषु मुख्यः, स एव श्रेष्ठः सुहृत्, अतः शीघ्रमेव तम् उद्दिश्य स्तुतिं कुरु। ततः त्वाम् अहं मोक्षयिष्यामि। तदा स द्वाविंशत्यृग्भिः अग्नेः स्तवं कृतवान्।

**व्याकरणम्-**

- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।



- उत्स्रक्ष्यामः - उत् इति पूर्वकात् सृज्(विसर्गे) इत्यस्मात् धातोः लृट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।
- तुष्टाव – ष्टुञ् (स्तुतौ) इत्यर्थकात् धातोः लिट्-लकारस्य उत्तमपुरुषस्यैकवचने रूपम्।

**तमग्निरुवाच विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्याम**
**इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो**
**अर्भकेभ्यो इत्येतयर्चा इति।**

**व्याख्या-** यद्यपि वरुणपाशेन बद्धत्वाद्वरुण एव शुनःशेपमुत्स्रष्टुं समर्थस्तथाप्यग्न्यादीनां सहकारित्ववचनं दाढ्‌र्यर्थं द्रष्टव्यम्। विश्वेदेवा गणरूपा न भवन्ति किन्तु सर्वे देवास्तान्नमो महद्भ्य इत्यतयर्चोपासितवान्।

तेषां च विश्वेषां देवानां सहकारित्वेनन्द्रस्योपासनं दर्शयति-

**सरलार्थः-** (तदा) अग्निः तम् उक्तवान्, त्वं विश्वदेवानां स्तुतिं कुरु, तर्हि अहं त्वां मोक्षयिष्यामि। ततः 'नमो महद्भ्यो नमो अर्भकेभ्यः' इत्यादिभिः ऋग्भिः विश्वदेवानां स्तुतिं कृतवान्।

**व्याकरणम्-**

- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- उत्स्रक्ष्यामः - उत् इति पूर्वकात् सृज्(विसर्गे) इत्यस्मात् धातोः लृट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।
- तुष्टाव – ष्टुञ् (स्तुतौ) इत्यर्थकात् धातोः लिट्-लकारस्य उत्तमपुरुषस्यैकवचने रूपम्।

**तं विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो**
**वलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं**
**नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव**
**यच्चिद्धि सत्य सोमपा इति**
**चैत्येन सूक्तेनोत्तरस्य च पञ्च दशभिः इति।**

**व्याख्या-** ओडोवलादिशव्दाः पूर्वाचार्यैरेवं व्याख्यातः--

ओजो दीप्तिर्वलं दाक्ष्यं प्रसह्यकरणं सहः।

सुजनः सन्पारयिष्णुरुपक्रान्तसमाप्तिकृत्॥इति

इष्टप्रत्ययतमप्प्रत्ययाभ्यां तत्र तत्रातिशय उच्यते। तादृशमिन्द्रं यच्चिद्धि सत्य सोमपा इत्यनेन सप्तर्चेन सूक्तनोत्तरस्मिन्नप्याव इन्द्रमित्यादिके द्वाविंशत्यृचे सूक्ते पञ्च दशभिर्ऋग्भिश्च तुष्टाव।



पूर्वमप्यनुग्रहेन चरैवेत्येवमिन्द्रो रोहितं प्रत्युपदिदेश। तस्योपदेशस्य फलपर्यवसायित्वम् अनुस्मरतः तस्येन्द्रस्य शुनःशेपः ततः प्रीत्यतिशयं दर्शयति--

**सरलार्थः-** अनन्तरं विश्वदेवाः तम् उक्तवन्तः यत् इन्द्रः एव देवेषु सर्वाधिकशक्तिसम्पन्नः, दैहिकबलयुक्तः, सहायकः श्रष्ठकर्मकारकः च। त्वं तस्यैव स्तुतिं कुरु। तर्हि त्वाम् वयं मोक्षयिष्यामः। स शुनःशेपः 'यच्चिद्धि सत्य सोमपाः' इत्यादिसूक्तैः किञ्च ततः परं विद्यमानैः पञ्चादशमन्त्रैः इन्द्रस्य स्तुतिं कृतवान्।

**व्याकरणम्-**

- ऊचुः – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- उत्स्रक्ष्यामः - उत् इति पूर्वकात् सृज्(विसर्गे) इत्यस्मात् धातोः लृट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।
- तुष्टाव – ष्टुञ् (स्तुतौ) इत्यर्थकात् धातोः लिट्-लकारस्य उत्तमपुरुषस्यैकवचने रूपम्।

### तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं
### ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति इति।

**व्याख्या-** शुनःशेपेनेन्द्रः स्तूयमानः प्रीतो भूत्वा तस्मै शुनशेपाय सुवर्णमयं दिव्यं रथमारोहणारथं स्वकीयेन मनसैव ददौ। शुनःशेपोपि तदीयमनुग्रहमवगत्य पूर्वोक्ताभ्यः पञ्च दशभ्य उत्तरया शश्वदिन्द्र इत्येदर्चा तं रथं मनसैव प्रतिजगाम।

**सरलार्थः-** इन्द्रः स्तुतः भूत्वा प्रीतः अभवत् किञ्च मनसा तस्मै हिरण्यमयं रथं दत्तवान्। सोपि 'शश्वदिन्द्र' इति मन्त्रेण इन्द्रं प्रतिजगाम।

**व्याकरणम्-**

- स्तूयमानः - ष्टुञ्-धातोः शानच्-प्रत्ययान्तं रूपम्।
- ददौ- दा-धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रुपम्।

### तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति
### सोऽश्विनौ तुष्टावात उत्तरेण तृचेन इति।

**व्याख्या-** पूर्वोक्तायाः शश्वदिन्द्रो इत्यस्या उत्तरेणाश्विनावश्वावत्या(१-३०-२७) इति तृचेनाश्विनौ स्तुतवान्।

अश्विनोः सहकारित्वेनोषस उपास्तिं दर्शयति--

**सरलार्थः-** इन्द्रः तम् उक्तवान् अश्विद्वयस्य स्तवं कुरु, तर्हि त्वां मोक्षयिष्यामि। सोपि ततः परं त्रिभिः ऋग्भिः अश्विद्वयस्य स्तवं कृतवान्।



**व्याकरणम्-**

- उवाच – वच्- धातोः लिट्-लकारस्य प्रथमपुरुषस्यैकवचने रूपम्।
- उत्स्रक्ष्यामः - उत् इति पूर्वकात् सृज्(विसर्गे) इत्यस्मात् धातोः लृट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।
- तुष्टाव – ष्टुञ् (स्तुतौ) इत्यर्थकात् धातोः लिट्-लकारस्य उत्तमपुरुषस्यैकवचने रूपम्।

**तमश्विना उचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम**
**इति स उषसं तुष्टावात उत्तरेण तृचेन इति।**

**व्याख्या-** कस्त उषः (१-३०-२०) इत्यादिक उत्तरस्तृचः। अथोक्तानां सर्वासां देवतानामनुग्रहेन शुनःशेपस्य वन्द्धमोक्षं हरिश्चन्द्रस्यारोग्यं च दर्शयति--

**सरलार्थः-** अश्विद्वयं तम् उवाच- त्वम् उषादेव्याः स्तवं कुरु। तर्हि अहं त्वां मोक्षयिष्यामि। ततः परं स त्रिभिः ऋग्भिः उषादेव्याः स्तवं कृतवान्।

**व्याकरणम्-**

- उत्स्रक्ष्यामः - उत् इति पूर्वकात् सृज्(विसर्गे) इत्यस्मात् धातोः लृट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।
- तुष्टाव – ष्टुञ् (स्तुतौ) इत्यर्थकात् धातोः लिट्-लकारस्य उत्तमपुरुषस्यैकवचने रूपम्।

**तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय**
**ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशो**
**मुमुचेऽगद ऐक्ष्वाक आस॥ इति।**

**व्याख्या-** तस्य पूर्वेक्तस्य तृचस्य संबन्धिन्यामृच्यृच्येकैकस्यामृच्युक्तायां क्रमेण शुनःशेपस्य पाशो विमुमुचे एव विशेषेण मुक्तोऽभूत्, ऐक्ष्वाकस्य हरिश्चन्द्रस्य यन्महोदरं तदपि क्रमेण कनीयोऽत्यल्पं भवति। उत्तमस्यामृच्युक्तायां पाशो विमुमुचे एव सर्वात्मना मुक्तोऽभूत्। ऐक्ष्वाकोऽप्यगदो निःशेषेण रोगरहित आस।

**सरलार्थः-** ऋक्षु उच्चारितेषु शुनःशेपस्य बन्धनस्य मुक्तिः सञ्जाता। इक्ष्वाकुवंशधरस्य महोदरः अपि क्षुद्रः सञ्जातः। अन्तिमस्य ऋचः उच्चारणे सत्येव समस्तबन्धनस्य मुक्तिः समभूत्। इक्ष्वाकुवंशधरः हरिश्चन्द्रः अपि रोगमुक्तः अभवत्।

**व्याकरणम्-**

- मुमुचे- मुच -धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।





## पाठगतप्रश्नाः-२

११. मह्यम् एकशतं गाः यच्छ इदं वाक्यं क उक्तवान्।

१२. कः तस्मै एकशतं गाः दत्तवान्।

१३. सूयवसपुत्रः अजीगर्तः पुनः किमर्थं गाः याचति स्म।

१४. कः देवेषु निकटतमः।

१५. अग्निरेव देवेषु निकटतमः इयमुक्ति कः कं प्रत्युक्तवान्।

१६. अग्निः शुनःशेपं प्रति किमुक्तवान्।

१७. सविता शुनःशेपं प्रति किमुक्तवान्।

१८. वरुणः शुनःशेपं प्रति किमुक्तवान्।

१९. विश्वदेवाः शुनःशेपेन केन मन्त्रेण स्तुत्याः अभूवन्।

२०. कस्याः स्तुत्यनन्तरं शुनःशेपस्य पाशः उन्मुक्तः जातः।



## पाठसारः

अस्मिन् पाठे शुनःशेपपोख्यानस्य खण्डद्वयं वर्णितम्। तत्र खण्डद्वयमध्ये यत् उक्तं तत् साररूपेण कथ्यते। तत्र तृतीयखण्डे यदा रोहितः अरण्यात् स्वस्य पितुः उदररोगात् ग्रामम् आगच्छन् आसीत् तदा इन्द्रः ब्राह्मणरूपेण तस्य समीपम् आगतवान्। सः ब्राह्मणः तं पर्यटनस्य माहात्म्यं व्याख्यातवान्। तन्माहात्म्यं निशम्य स रोहितः षट् वत्सराणि व्याप्य अरण्ये अटन् आसीत्। षष्ठे वत्सरे तेन सह अजीगर्तस्य साक्षात्कारः अभवत्। तत्र सः अजीगर्तस्य एकं पुत्रं शतगवां स्थाने ऐच्छत्। अजीगर्तः मध्यमपुत्रं शुनःशेपं तस्मै प्रदत्तवान्। रोहितः तमादाय गृहम् आगतः।

एवमेव चतुर्थे खण्डे हरिश्चन्द्रस्य गृहे यज्ञः आयोजितः। तत्र अजीगर्तः एकशतगवां स्थाने स्वपुत्रस्य शुनःशेपस्य वधाय प्रवृत्तः। तद् दृष्ट्वा प्रजापतिम् आहूतवान्। प्रजापतिः अग्नेः स्तुत्यर्थम् उक्तवान्। अग्निः सवितुः स्तुत्यर्थम् उक्तवान्। सविता वरुणस्य स्तुत्यर्थम् उक्तवान्। वरुणः अग्नेः स्तुत्यर्थम् उक्तवान्। अग्निः विश्वदेवानां स्तुत्यर्थम् उक्तवान्। विश्वदेवाः इन्द्रस्य स्तुत्यर्थम् उक्तवन्तः। इन्द्रः अश्विद्वयस्य स्तुत्यर्थम् उक्तवान्। अश्विद्वयम् उषादेव्याः स्तुत्यर्थम् उक्तवत्। एवम् उषादेव्याः स्तुत्यनन्तं स पाशमुक्तः सञ्जातः।





## पाठान्तप्रश्नाः

१. रोहितेन्द्रयोः वार्तालापं वर्णयत।
२. अजीगर्तशुनःशेपयोः मध्ये वार्तालापं वर्णयत।
३. शुनःशेपस्य देवान् प्रति प्रार्थनं वर्णयत।
४. चतुर्थखण्डस्य सारं लिखत।
५. तृतीयखण्डस्य सारं लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. वरुणस्य
२. रोहितस्य
३. राजानम्
४. रोहितः
५. यः जनः आसनस्थः भवति।
६. यः उत्थितः भवति।
७. यः शयितः भवति।
८. यः पर्यटनं करोति।
९. षष्ठवत्सराणि।
१०. श्रेयोवस्तु।

**उत्तरकूटः-२**

११. सूयवसपुत्रः अजीगर्तः।
१२. हरिश्चन्द्रः।
१३. यज्ञानन्तरं  वधं करिष्यामि इति विचिन्त्य।
१४. अग्निरेव।
१५. प्रजापतिः शुनशेपं प्रति।
१६. सविता एव प्रेरणादाने समर्थः।



१७. त्वं राज्ञः वरुणस्य कृते यूपे संबद्धः। त्वं तस्यैव उपासनां कुरु।

१८. अग्निरेव देवेषु मुख्यः, स एव श्रेष्ठः सुहृत्, अतः शीघ्रमेव तम् उद्दिश्य स्तुतिं कुरु।

१९. नमो महद्भ्यो नमोऽकर्मकेभ्यः।

२०. उषादेव्याः।

॥ इति त्रयोदशः पाठः ॥



१४

# ॥शुनःशेपोपाख्यानम्-३॥

## प्रस्तावना

ऋग्वेदस्य शुनःशेपोपाख्यानम् अत्यन्तं प्रसिद्धमिति तु पूर्वतनैः पाठैः अवगतम्। भवद्भिः पूर्वपाठद्वये शुनःशेपोपाख्यानस्य खण्डचतुष्टयं पठितम्। अत एव खण्डचतुष्टयस्य पठनेन तु शुनःशेपोपाख्यानस्य साधारणं ज्ञानं तु जातम् एव। सम्प्रति अवशिष्टः भागः अस्य पाठस्य विषयत्वेन गृह्यते। मन्त्रादिना कथामाध्यमेन एकं वृत्तान्तं प्रतिपादितवान्। ऋग्वेदस्य प्रकृतम् आख्यानम् इदम् अत्यन्तं प्रसिद्धं विद्यते। अस्मिन् पाठे शुनःशेपोपाख्यानस्य पञ्चमखण्डः वर्णितः। अस्मिन् पाठे सायणभाष्यम् अवलम्ब्य व्याख्या अस्ति। यतो हि सायणभाष्यं विना मन्त्रस्य अर्थः दुरवगमः एव। अस्मिन् पाठे विश्वामित्रशुनःशेपयोः मध्ये प्रवृत्तो वार्तालापवृत्तान्तः अस्ति। किञ्च शुनःशेपं विश्वामित्रस्य पुत्रत्वेन स्वीकारः इति वृत्तान्तः अपि विद्यते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान्

- शुनःशेपोपाख्यानस्य पञ्चमखण्डं ज्ञातुं शक्नुयात्।
- शुनःशेपविश्वमित्रयोः वार्तालापादिकं ज्ञातुं शक्नुयात्।
- शुनःशेपस्य विश्वामित्रस्य पुत्रत्वस्वीकारः किमर्थः इत्यपि ज्ञातुं शक्नुयात्।
- स्वयमेव मन्त्रस्य व्याख्यानम् सम्पादयितुं शक्यो भवेत्।
- स्वयमेव अन्वयादिकं कर्तुं पारयेत्।
- मन्त्रे स्थितव्याकरणानि अपि ज्ञातुं प्रभवेत्।
- मन्त्रस्य सामान्यार्थं ज्ञातुं योग्यो प्रभवेत्।



## पञ्चमः खण्डः

### १४.१) अधुना मूलपाठं पठाम (पञ्चमखण्डः)

तमृत्विज ऊचुस्त्वमेव नोऽस्याह्नः संस्थामधिगच्छे-
त्यथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृ-
भिरभिसुषाव यच्चिद्धि त्वं गृहे गृह इत्यथैनं द्रोण-
कलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाऽथ
हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः स स्वाहाकारा-
भिर्जुहवांचकाराथैनमवभृथमभ्यवनिनाय त्वं नो
अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वम-
ग्निमाहवनीयमुपस्थापयांचकार शुनश्चिच्छेपं निदितं
सहस्रादिति इति।

अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स
होवाचाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति
नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरास-
तेति स ह देवरातो वैश्वामित्र आस तस्यैते कापि-
लेयबाभ्रवाःइति।

स होवाचाजीगर्तः सौयवसिस्त्वं वेहि विह्वयावहा
इति स होवाचाजीगर्तः सौयवसिराङ्गिरसो जन्म-
नाऽस्याजीगर्तिः श्रुतः कविः। ऋषे पैतामहात्तन्तो-
र्माऽपगाः पुनरेहिमामिति स होवाच शुनःशेपोऽ-
दर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत। गवां
त्रीणि शतानि त्वमवृणीथा मदङ्गिरः इति।



स होवाचाजीगर्तः सौयवसिस्तुद्वै मा तात तपति पापं कर्म मया कृतम्। तदहं निह्नुवे तुभ्यं प्रतियन्तु शता गवामिति स होवाच शुनःशेपो यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम्। नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतमिति इति।

असंधेयमिति ह विश्वामित्र उपपपाद स होवाच विश्वामित्रो भीम एव सौयवसिः शासेन विशिशासिषुः अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रतामिति, इति।

स होवाच शुनःशेपः स वै यथा नो ज्ञपयाऽऽ राजपुत्रो तथा वद। यथैवाऽऽङ्गिरसः सन्नुपेयां तव पुत्रतामिति स होवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात्। उपेयादैवं मे दायं तेन वै त्वोपमन्त्रय इति इति।

स होवाच शुनःशेपः संज्ञानानेषु वै ब्रूयात् सौहार्द्याय मे श्रियै। यथाऽहं भरतऋषभोपेयां तव पुत्रतामित्यथ ह विश्वामित्रः पुत्रानमन्त्रयामास मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः। ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वमिति॥ इति।

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः इति।

तद्ये ज्यायांसो न ते कुशलं मेनिरेताननु व्याजहारान्तन्वः प्रजा भक्षीष्टेति त एतेऽन्ध्रा पुण्ड्राः



**शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो वैश्वा-
मित्रा दस्यूनां भूयिष्ठाः इति।**

## १४.१.१) इदानीं मूलापाठम् अवगच्छाम

**तमृत्विज ऊचुस्त्वमेव नोऽस्याह्नः संस्थामधिगच्छे-
त्यथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृ-
भिरभिसुषाव यच्चिद्धि त्वं गृहे गृह इत्यथैनं द्रोण-
कलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाऽथ
हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः स स्वाहाकारा-
भिर्जुहवांचकाराथैनमवभृथमभ्यवनिनाय त्वं नो
अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वम-
ग्निमाहवनीयमुपस्थापयांचकार शुनश्चिच्छेपं निदितं
सहस्रादिति इति।**

**व्याख्या-** देवतानुग्रहयुक्तं तं शुनःशेपं विश्वामित्रादयः सर्व ऋत्विज एवमूचुः। हे शुनःशेप त्वमेव नोऽस्मारकमस्याह्नोऽभिषचनीयाख्यसंस्थां समप्तिमधिगच्छ प्राप्नुहि। अनुष्ठापत्येर्थः। तैरेवमुक्ते सत्यनन्तरं शुनःशेप एवमभिषेचनीयाख्यां सोमयागमञ्जःसवं ददर्श। अञ्जसर्जुमार्गेन सवः सोमाभिषवो यस्मिन्यागो सोऽञ्जसवस्तादृशं प्रयोगप्रकारं निश्चितवान्। निश्चित्य च तं सोमं यच्चिद्धीत्यादिभिश्चतसृभिऋग्भिरभिषुतं कृतवान्। अथैनमभिषुतं सोममेतयोच्छिष्टं चम्वोरित्यृचा द्रोणकलशममिक्ष्यावनिनाय द्रोणकलश प्रक्षिप्तवान्। अथानन्तरमस्मिन्हरिशचन्द्रोणाण्वारद्धे शुनःशेलदेहमुपस्पृष्टवति सत्युक्ताभ्य ऋग्भ्यः पूर्वाभिर्यत्र ग्रावेत्यादिभिश्चतसृभिर्ऋग्भिः स्वाहाकारसहिताभिः सोमं जुहुवांचकार। यत्र ग्रावेत्यादिकं सूक्तं नर्वचं तत्र यच्चिद्धीति पञ्चमी तामारभ्य चतसृग्भिर्ऋग्भिरभिषवः। उच्छिष्टमित्यादिका नवमी तया द्रोणकलशे प्रक्षेपः। यत्र ग्रावेत्यादिभिश्चतसृग्भिर्होम इत्येवं कृत्स्नस्य सूक्तस्य विनियोगः। अथः होमानन्तरमेव कर्तव्यमवभृथमभिलक्ष्यावनिनाय सर्वमवभृथसाधनं तद्देश नीत्वा त्वं नो अग्न इत्यादिकाभ्यामृग्भ्यामवभृथयागं कृतवान्। अथ तथा कृत्वा तत ऊर्ध्वमेनमाहवनीयमग्निं शुनश्चिदित्यनेनोपस्थापयांचकार हरिश्चन्द्रमुपस्थाने प्रेरयामास। सोऽयमञ्जःसवः। इष्टिपशुसांकर्यम् अन्तरेणाञ्जसर्जमार्गेणानुष्ठितत्वात्।



विश्वमित्राजीगर्तयोः कंचित्संवादं दर्शयति-

**सरलार्थः-** (ततः परं) ऋत्विजः शुनःशेपम् उक्तवन्तः- अस्माकम् अस्य अनुष्ठानस्य त्वमेव समाप्तिं कुरु। (एतच्छ्रुत्वा) शुनःशेपः सरलोपायेन सोमाभिषवपूर्वकयागानुष्ठानस्य व्यवस्थां चकार। स 'यच्चद्धि त्वं गृहे गृहे' इत्यादिचतुर्भिः ऋग्भिः सोमस्य अभिषवं कृतवान्, ततः 'उच्छिष्टं चम्भोर्भव' इत्याद्यृग्भिः सोमं द्रोणकलशे निक्षिप्तवान्। ततः परम् अन्वारम्भानुष्ठानस्य समाप्त्यनन्तरं स्वाहाकारसमेतं पूर्वे विद्यमानाभिः 'यत्र गावा' इत्यादिचतसृर्भिः ऋग्भिः होमं कृतवान्। अनन्तरं 'त्वा नो अग्ने वरुणस्य विद्वान्' इत्यादिद्वाभ्याम् ऋग्भ्यां अवभृथयागस्य अनुष्ठानं कृतवान् किञ्च ततः परं 'शुनश्चिच्छेपं निदितं सहस्रम्' इत्याद्यृग्भिः हरिश्चन्द्रः अहवनायाग्नेः उपस्थानं चकार।

**व्याकरणम्-**

- ऊचुः - वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।
- आह- ब्रू-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- ददर्श- दृश्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- उपस्थापयाञ्चकार – उप इत्युपसर्गपूर्वकात् णिजन्तात् स्था-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**अथ ह शुन:शेपो विश्वमित्रस्याङ्कमाससाद स**
**होवाचाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति**
**नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरास-**
**तेति स ह देवरातो वैश्वामित्र आस तस्यैवे कापि-**
**लेयबाभ्रवा:इति।**

**व्याख्या-** अथाभिषेचनीयसमाप्तेरनन्तरं हरिश्चन्द्रसहितेष्वृत्विक्षु विस्मितेषु स शुनःशेप इत ऊर्ध्वं कस्य पुत्रोऽस्त्विति विचारे सति तदीयच्छैव नियामिकेति महर्षीणां वचनं श्रुत्वा शुनःशेपः स्वेच्छया विश्वामित्रपुत्रत्वमङ्गीकृत्य सहसा तदीयमङ्कामाससाद। पुत्रो हि सर्वत्र पितुरङ्के निषीदति। तदानीं सूयवसपुत्रोऽजीर्गतो विश्वामित्रो नेति निराकृत्यैमुवाच। प्रजापत्यादयो देवा एवेमं शुनःशेपं मह्यमसारत दत्तवन्तस्तस्मात्तुभ्यं न दास्यमीति। स च शुनःशेपो देवैर्दत्तत्वाद्देवरात इति नामधारी विश्वामित्रपुत्र एवाऽऽस। तस्य च देवातस्यैते कपिलगोत्रोत्पन्ना वभ्रुगोत्रात्पन्नाश्च बन्धवोऽभवन्।

अथ शुनःशेपाजीर्गतयोः संवादं दर्शयति-

**सरलार्थः-** अनन्तरं शुनःशेपः विश्वामित्रस्य अङ्के उपवेशनं कृतवान्। स सूयवसपुत्रः अजीगर्तः उवाच- त्वं मम पुत्रं यच्छ। विश्वामित्रः उक्तवान्- नैव। देवाः एनं मह्यं दत्तवान्। ततः परं सः (शुनशेपः) विश्वामित्रस्य तनयः देवरातः इति अभिधया ख्यातः अभवत्। कपिलगोत्रोत्पन्नाः बभ्रुगोत्रीयाः तस्य बान्धवाः अभूवन्।



**व्याकरणम्-**

- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- देहि- दा-धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।

**स होवाचाजीगर्तः सौयवसिस्त्वं वेहि विह्वयावहा**
**स होवाचाजीगर्तः सौयवसिराङ्गिरसो**
**जन्मनाऽस्याजीगर्तिः श्रुतः कविः। ऋषे पैतामहात्तन्तोर्माऽपगाः**
**पुनरेहिमामिति स होवाच शुनःशेपोऽदर्शुस्त्वा शासहस्तं न**
**यच्छूद्रेष्वलप्सत। गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः इति।**

**व्याख्या-**विशामित्रेण निराकृतः सोऽजीर्गतः शुनःशेपं प्रत्येवमुवाच। हे पुत्र त्वं वा त्वमेव विश्वामित्रादपगतः सन्निह्यस्मद् गच्छ। त्वदीयमाता चाहं चोभावाववां विह्वयावहै विशेषण तवाहवानं करवावहै। इत्युक्त्वा तुष्णीमवस्थितं तं शुनःशेपं प्रति पुनरपि कयाचिद्गाथयैवमुवाच। हे शुनःशेप त्वं जन्मनाऽऽङ्गिरोगोत्रोत्पन्न आजीगार्तिरजीगतस्य पुत्रः करिर्विद्वाञ्श्रुत इत्येवं सर्वत्र प्रसिद्धः। अतो हे महर्षे शुनःशेप पैतामहात्पितामहेन प्रजापतिना संपादितात्तन्तोः संतानादङ्गिरोवंशन्माऽपगा अपगतो मा भव। तस्मात्पुनरपि मामेहि मदगृहे समागच्छेत्युक्तः शुनःशेप स्वयमपि गाथाय प्रत्युत्तरं ददौ। शासो विशसनहेतुः खड्गः। हेऽजीर्गत मज्वाधाय शासहस्तं खड्गहस्तं त्वां सर्वेऽप्यदर्शुदृष्टवन्तः। यत्क्रूरं कर्म शूद्रेष्वत्यन्तनीचेष्पि नालप्सत न लब्धवन्तो लौकिका जनास्तदृशं क्रौर्यं त्वया कृतम्। हेऽङ्गिरसगोत्रोत्पन्नाजीर्गत मन्मां निमित्तीकृत्य त्वं गवां शतानि त्रीण्यवृणीथा वृतवानसि। तदिदमत्यन्तमित्युक्तवान्।

पुनरप्यजीर्गतशुनःशेपयोरुक्तिप्रत्युक्ती दर्शयति-

**सरलार्थः-** सूयवसस्य पुत्रः सः अजीगर्तः शुनःशेपम् उक्तवान्- (हे पुत्र) त्वमेव (मत्समीपम्) आगच्छ, आवाम् उभौ तव पितरौ, त्वाम् आह्वयावः। सूयवसपुत्रः अजीगर्तः (पुनः शुनःशेपम्) उक्तवान्- (हे पुत्र) त्वम् तव जन्मना अङ्गिरसाजीगर्तस्य पुत्रः किञ्च विद्वद्रूपेण प्रसिद्धः। अतः हे ऋषे शुनःशेप, त्वं पैतामहवंशपरम्परातः दूरं मा गच्छ। पुनः त्वं मत्समीपम् आगच्छ। (एतच्छ्रुत्वा) शुनःशेपः उक्तवान्- (वधाय) असिधारिणं त्वां जनाः दृष्टवन्तः, शूद्रेष्वपि एवं क्रूरता न दृश्यते। हे अङ्गिरोवंशोद्भव (अजीगर्त) मम स्थाने त्वं त्रिशतं गाः गृहीतवान्।

**व्याकरणम्-**

- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- श्रुतः -श्रु-धातोः क्तप्रत्ययान्तं रूपम्।



**स होवाचाजीगर्तः सौयवसिस्तुद्वै मा तात तपति**
**पापं कर्म मया कृतम्। तदहं निह्नुवे तुभ्यं**
**प्रतियन्तु शता गवामिति स होवाच शुनःशेपो यः**
**सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम्। नापागाः**
**शौद्रान्न्यायादसंधेयं त्वया कृतमिति इति।**

**व्याख्या-**शुनःशेपेनोपालब्धोऽजीगर्तः। स्वकीयमनुतापं दर्शयितुं कांचिदगाथामेवामुवाच। हे तात पितृवदुपालालनीय शुनःशेप मया यत्पापं कृतं तद्वै मा तपति तदेव मां मनसि संतप्तं करोति। अहं तत्पापं निह्नुवे परिहरामि। गवां शतानि पूर्व मया गृहीतानि त्रीणि यानि तुभ्यं त्वदर्थं प्रतियन्तु प्रत्येकमेव प्राप्नुवन्तः। इतरयोः पुत्रयोर्गावो मा भूवंस्तथैव सर्वाः सन्त्विति। ततः स शुनःशेपो गाथाय प्रत्युत्तरं ददौ। यः पुमान्धर्मशास्त्रभीतिरहितः सकृतपापकं कुर्यात्स पुमांस्ततः पापादन्यदेनत्पापं तदभ्यासवशत्कुर्यादेव। त्वं तु शौद्रान्न्यायान्नीचजातिसंवन्धिनः क्रुरादाचरणान्नापागा अपगतो न भवसि। असंधेयं प्रतिसंधानरहितं पापं त्वया कृत्यमित्येषा शुनःशेपस्य प्रत्युक्तिः।

अथ विश्वामित्रकृत्यं दर्शयति-

**सरलार्थः-** सूयवसपुत्रः अजीगर्तः उक्तवान्- वत्स, अहं यत् पापकर्म कृतवान्। तेन अहं सन्तप्तः। तत् पापकर्म अहं त्यजामि। त्रिशतं गाः तुभ्यं ददामि। शुनःशेपः (तदा) उक्तवान्- यः एकवारं पापकर्मणः अनुष्ठानं कृतवान् स तत् पापं पुनः कर्तुं शक्नोति। त्वं शूद्रतुल्यः यत् पापाचरणं कृतवान् ततः त्वं मुक्तः न भविष्यसि। त्वया यत् कृतं ततः परं सन्धिः भवितुं नार्हति।

**व्याकरणम्-**

- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- कृतम्- कृधातोः क्तप्रत्ययान्तं रूपम्।
- कुर्यात् - कृ-धातोः विधिलिङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**असंधेयमिति ह विश्वामित्र उपपपाद स होवाच**
**विश्वामित्रो भीम एव सौयवसिः शासेन विशिशा-**
**सिषुः अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रतामिति, इति।**

**व्याख्या-**असंधेयमप्रतिसमाधेयं पापमिति शुनःशेपेन यदीरितं तदेतदमतिसमाधेयत्वं विश्वामित्र उपपपाद युक्तिभिरुपपादितवान्। तदुपपादनार्थमेव विश्वमित्र इमां गाथामुवाच। सूयवहस्य पुत्रोऽजीर्गतो भीम एव भयहेतुरेव सञ्शासेन हस्तगतखडगेन स विशिशासिषुरस्थाद्विशसन-कर्तुमिच्छुरवस्थितवान्। अतो हे शुनःशेपपैतस्य पापिष्ठस्य पुत्रो मा भूः किन्तु ममैव पुत्रतामुपेहि।



अथ शुनःशेपविश्वामित्रयोरुक्तिप्रत्युक्ती दर्शयति-

**सरलार्थः-** विश्वामित्रोऽपि उक्तवान्, (तस्मात् कर्मणः परं) सन्धिः भवितुं नार्हति। स(विश्वामित्रः) ततः उक्तवान् असिम् आदाय पुत्रं हन्तुम् इच्छन् सूयवसपुत्रः अतीव भयङ्करः आसीत्। (शुनःशेपः) त्वं तस्य पुत्रः मा भव, त्वं मम पुत्रत्वमेव स्वीकुरु।

**व्याकरणम्-**

- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**स होवाच शुनःशेपः स वै यथा नो ज्ञपयाऽऽ**
**राजपुत्रो तथा वद। यथैवाऽऽङ्गिरसः सन्नुपेयां**
**तव पुत्रतामिति स होवाच विश्वामित्रो ज्येष्ठो मे**
**त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात्। उपेया-**
**दैवं मे दायं तेन वै त्वोपमन्त्रय इति।**

**व्याख्या-**विश्वमित्रेणैवं बोधितः शुनःशेपः पुनरपि गाथाय विश्वमित्रं प्रत्येवमुवाच। अयं विश्वमित्रो जन्मना क्षत्रियः सन् स्वकीयेन तपोमहिम्ना ब्राह्मण्यं प्राप्तवानित्येवं तद्वृत्तान्तं सूचयितु हे राजपुत्रेति संबोधितवान्। स वै तथाविधो राजजातीय एव सन्यथा येन प्रकारेण नोऽस्माभिः सर्वैरासमन्ताज्ज्ञापय ब्राह्मणत्वेन ज्ञायसे तथावास्मद्विषयेऽपि त्वं वद। कथं वदितव्यमिति तदुच्यते। अहामिदानीमङ्गिरोगोत्रः संस्ततपरित्यागेन तव पुत्रत्वं येनैव प्रकारेणोपेयां तथैवानुगृहाणेति शेषः। एतद्वाक्याभिप्रायः पूर्वैः संक्षिप्य दर्शितः।

**व्याकरणम्-**

- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- वद- वद्-धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम्।

**'पुराऽऽत्मानं नृपं विप्र (प्रं) तपसा कृतवानसि।**
**एवमङ्गिरसं मा त्वं वैश्वामित्रमृषे कुरु।।' इति।**

ततो विश्वामित्रो गथाय प्रत्युत्तरमुक्तवान्। हे शुनःशेप त्वं पुत्राणां मध्ये ज्येष्ठः स्या ज्योष्ठो भव। तव पुत्रादिरूपा प्रजाऽपीतरस्थां श्रेष्ठा स्यात्। मे मह्यं विश्वामित्राय दैवं देवैः प्रसन्नैर्दत्तं दायं पुत्ररूपं लाभमुपेयाः प्राप्नुहि। तेन वै तेनैव प्रकारेण त्वोपमन्त्रये त्वां पुत्रत्वेन व्यवहरामि।

पुनरपि शुनःशेपविश्वामित्रयोर्वृत्तान्तं दर्शयति-



**सरलार्थः-** तदा शुनःशेपः उवाच, हे राजपुत्र, भवान् यथा (राजवंशीयः सन्नपि) मम समीपे (ब्राह्मणरूपेण) ख्यातः तथैव अहमपि आङ्गरसः सन्नपि कथं भवतः पुत्रत्वं प्राप्स्यामि इति भवान् एव वदतु। तदा विश्वामित्रः उक्तवान्- (हे शुनःशेप) मम पुत्रेषु त्वमेव ज्येष्ठः भव, तव पुत्राः श्रेष्ठत्वं लभन्ताम्। देवाः मह्यं पुत्रस्य यं भारं समर्पितवान् तत् त्वं नय। एवम् अहं त्वां पुत्ररूपेण आह्वयामि।

**व्याकरणम्-**

- कृतवान्- कृ-धातोः क्तवतु-प्रत्ययान्तं रूपम्।
- कुरु- कृ-धातोः लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रुपम्।

**स होवाच शुनःशेपः संज्ञानानेषु वै ब्रूयात् सौहार्द्याय**
**मे श्रियै। यथाऽहं भरतऋषभोपेयां तव पुत्रतामि-**
**त्यथ ह विश्वामित्रः पुत्रानमन्त्रयामास मधुच्छन्दाः**
**शृणोतन ऋषभो रेणुरष्टकः। ये के च भ्रातरः**
**स्थ नास्मै ज्यैष्ठ्याय कल्पध्वमिति॥ इति।**

**व्याख्या-**विश्वामित्रेण प्रलोभितः शुनःशेपः स्वकार्यदाढर्यार्थं गाथयैवमुवाच। संज्ञाननेषु मद्विषयैकमत्यं प्राप्तेषु त्वदीयपुत्रेषु (स)र्वोऽपि मां ब्रूयात्। ज्येष्ठभातृत्वेन व्यवहरतु। तच्च मे मम सौहार्द्याय भ्रातृभिरितरैः स्नेहातिशाय श्रियै धनलाभाय च संपद्यते। हे भरतऋषभ भरतवंशश्रेष्ठ विश्वामित्राहं तव पुत्रतां यथोपेयां तथैवैतेषां पुत्राणाग्रेऽनुगृहाणेति शेषः। ततो विश्वामित्र इतरान्पुत्रानहूयगाथायैवमाज्ञापितवान्। यो मधुच्छन्दा नाम यश्चर्षभो योऽपि रेणुर्योऽप्यष्टक एते मुख्या हे पुत्रकाः शृणोतन मदीयमाज्ञां शृणुत। केचिद्यूयं सर्वे भ्रातरः स्थ ते सर्वेऽप्यस्मै शुनःशेपादस्मादपि ज्यैष्ठ्यायाय न कल्पधवं ज्येष्ठत्वाभिमानं मा कुरुत। किन्त्वसावेव युष्माकं मध्ये ज्येष्ठो भूत्वाऽवतिष्ठतामिति॥

अथ विश्वामित्रपुत्राणां वृत्तान्तमाह-

**सरलार्थ-** स शुनःशेपः उक्तवान्- हे भरतर्षभ, भवतः पुत्राः एकमतेन वदन्तु यत् अहं भवतः पुत्रत्वं लभे। तर्हि मम सौहार्दलाभः श्रीलाभश्च भवेताम्। अतः परं विश्वामित्रः पुत्रान् आहूय उक्तवान् हे मधुच्छन्दः, ऋषभ, रेणो, अष्टक, यूयं शृणुत, यूयं ये भ्रातरः स्थ तेषु शुनःशेपं ज्येष्ठरूपेण कल्पयत।

**व्याकरणम्-**

- उवाच- वच्-धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- ब्रूयात्- ब्रू- धातोः विधिलङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- कल्पध्वम् - कल्प-धातोः लोट्-लकारस्य मध्यमपुरुषस्य बहुवचने रूपम्।



**तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाश-**
**देव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः इति।**

**व्याख्या-** मधुच्छन्दोनामकः कश्चित्पुत्रो मध्यमस्ततोऽपि ज्योष्ठाः कणिष्ठाश्च प्रत्येकं पञ्चाशत्संख्यका इत्येवमेकशतं तस्य पुत्राः।

तेषां मध्ये ज्येष्ठानां वृत्तान्तमाह-

**सरलार्थः-** तस्य विश्वामित्रस्य एकशतं पुत्राः आसन्, (तेषु) पञ्चाशत् मधुच्छन्दसः ज्येष्ठाः, पञ्चाशत् मधुच्छन्दसः कनिष्ठाः।

**व्याकरणम्-**

- ज्यायांसः - अयम् अनयोः अतिशयेन वृद्धः प्रशस्यः वा। ज्यादेशः। ज्या+ईयसुन्। ईयसुन्प्रत्ययान्तं पुंसि प्रथमाबहुवचने रूपम्।
- कनीयांसः - अयम् अनयोः अतिशयेन युवा अल्पो वा। कनादेशः। कन्+ईयसुन्। ईयसुन्प्रत्ययान्तं पुंसि प्रथमाबहुवचने रूपम्।

**तद्ये ज्यायांसो न ते कुशलं मेनिरे ताननु व्याज-**
**हारान्तन्वः प्रजा भक्षीष्टेति त एतेऽन्ध्रा पुण्ड्राः**
**शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो वैश्वा-**
**मित्रा-दस्यूनां भूयिष्ठाः इति।**

**व्याख्या-** तत्तेष्वकेशतसंख्याकेषु पुत्रेषु मध्ये ये मधुच्छन्दसो ज्येष्ठाः पञ्चाशत्संख्यकां सन्ति ते शुनःशेपस्य विश्वामित्रपुत्रत्वं कुशलं न मेनिर इदं समीचीनमित्येवं नाङ्गीकृतवन्तः। ताञ्जेष्ठान्पञ्चाशत्संख्याकाननुलक्ष्य विश्वमित्रो व्याजहार व्याहरणं शापरूपं वाक्यमुक्तवान्। हे ज्येष्ठपुत्रा युष्माकं मदीयाज्ञातिलङ्घिनां प्रजाः पुत्रादिका अन्तान्भक्षीष्टं चण्डालादिरूपान्नीचजाति-विशेषान् भजतामिति। त एते शप्ताः सन्तोऽन्ध्रत्वादिपञ्च विधनीचजातिविशेषा भवन्ति। इतिशब्दस्य तत्प्रदर्शनार्थत्वादन्येऽपि नीचजातिविशेषाः सर्वे विवक्षिताः। उद्गातोऽन्त उदोन्तोऽन्यन्तनीचजातिस्तत्र भवा ऊदन्त्याः। ते बहवोऽनेकविधा वैश्वमित्रा विश्वमित्रसंततिजा दस्युनां तस्कराणां मध्ये भूयिष्ठा अत्याधिकाः।

ज्येष्ठानां वृत्तान्तमुक्त्वा मधुच्छन्दसस्तत्कनिष्ठानां च वृत्तान्तं गथाया दर्शयति-

**सरलार्थः-** ये च तेषु ज्येष्ठाः ते एतत् समीचीनरूपेण न गृहीतवन्तः। तान् प्रति विश्वामित्रः अभिशापवाक्यम् उच्चारितवन्तः- युष्माकं पुत्राः शूद्रत्वं गच्छन्तु। ते एव अन्ध्रः, पुण्ड्रः, शवरः, पुलिन्दः, मूतिवः इत्यादयः शूद्रत्वं प्राप्तवन्तः। विश्वामित्रस्य वंशोद्भूताः एते सर्वे विविधजातिगतेषु दानवेषु प्रधानाः।



**व्याकरणम्-**

- भूयिष्ठाः - अतिशयेन। बहु+इष्ठन्। भ्वादेशे युक् च। प्रथमाबहुवचने रूपमिदम्।

**स होवाच मधुच्छन्दाः पञ्चाशता सार्धं यन्नः**
**पिता संजानीते तस्मिंस्तिष्ठामहे वयम्। पुरस्त्वा**
**सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसीति इति।**

**व्याख्या-**कनिष्ठपुत्राणां पञ्चशाता सह मधुच्छन्दोनामकः स मध्यमः पुत्रः शुनःशेपं प्रत्येवमुवाच। हे शुनःशेप नोऽस्माकं पिता विश्वामित्रो यत्कार्यं त्वदीयज्येष्ठपुत्रत्वरूपं संजानीते सम्यग्जानात्यङ्गीकरोति तस्मिन् कार्ये वयं तिष्ठामहे तत्कार्यमङ्गीकुर्मः। सर्वे वयं त्वा शुनःशेपनामानं त्वां पुरस्कुर्महे पुरस्कृत्य ज्येष्ठं कृत्वा वर्तामहे। त्वामन्वञ्चः शुनःशेपमनुगच्छतः स्मसि भवाम इत्युक्तवान्।

विश्वामित्रवृत्तान्तं दर्शयति-

**सरलार्थः-** स मधुच्छान्दाः पञ्चाशत्पुत्रैः सह उक्तवान्- अस्माकं पिता यम् आदेशं दत्तवान् तं वयं पालयामः। वयं त्वामेव अग्रजरूपेण तथा ज्येष्ठभ्रातृरूपेण अनुचरामः।

**व्याकरणम्**

- संजानीते- सम् इत्युपसर्गपूर्वकात् ज्ञा- धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- तिष्ठामहे- स्था- धातोः उत्तमपुरुषस्य बहुवचने वैदिकं रूपम्।
- कुर्महे- आत्मनेपदपक्षे कृ- धातोः लट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।

**अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव इति।**

**व्याख्या-** अथ मधुच्छन्दःसहितानां पञ्चाषत्कनिष्ठपुत्राणां शुनःशेपविषयज्येष्ठपुत्रत्वाङ्गीकारानन्तरं स विश्वामित्रः प्रतीतस्तेषु प्रत्ययं मदनुकूला इति विश्वासं प्राप्तः प्रीत्या पुत्रान् गाथाभिस्ताष्टाव।

तत्र प्रथमाम गाथामाह-

**सरलार्थः-** अनन्तरं विश्वामित्रः (पुत्राणां वाक्ये) विश्वासं कृत्वा तेभ्यः सन्तनां प्रदाय एवम् उवाच-

**व्याकरणम्-**

- स्तुष्टाव- ष्टुञ्-धातोः लिट्-लकारस्य उत्तमपुरुषस्य द्विवचने रूपम्।

**ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ।**
**ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा इति।**



**व्याख्या-**हे मधुच्छन्दःप्रमुखाः कनिष्ठापुत्रा ये यूयं मे मानं मदीयं मतमनुगृहान्तऽनुकूल्येन स्वीकुर्वन्तो मां विश्वामित्रं वीरवन्तं स्वधर्मशूरपुत्रयुक्तमकर्त कृतवन्तस्तै वै तादृशा यूयं बहुविधपुत्रयुक्ता बहुविधानुकूलपुत्रयुक्ताश्च भविष्यथ। द्वितीयां गाथामाह-

**सरलार्थः-** मम ये पुत्राः मम वाक्यम् अङ्गीकृत्य मां वीरपुत्रवन्तं कृतवान्। ते एव अनुकूलपुत्रयुक्ताः बहुविधपुत्रयुक्ताश्च भविष्यन्ति।

**व्याकरणम्-**

- वीरवन्तः - वीर इति प्रातिपदिकात् मतुब्प्रत्यये सति प्रथमायाः बहुवचने रूपम्।
- पशुमन्तः - वीर इति प्रातिपदिकात् मतुब्प्रत्यये सति प्रथमायाः बहुवचने रूपम्।
- भविष्यथ – भू (सत्तायाम्) इत्यर्थकात् धातोः लट्-लकारस्य मध्यमपुरुषस्य बहुवचने रूपम्।

**पुर एत्रा वीरवन्तो देवरातेन गाथिनाः।**
**सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम्। इति।**

**व्याख्या-** गाथिनशब्दो विश्वामित्रस्य पितरमाचष्टे। हे गाथिना गाथिपौत्राः पुरः एत्रा युष्माकं पुरतो गन्त्रा मुख्येन देवरातेन सह सूयं सर्वे वीरवन्तः श्रेष्ठपुत्रयुक्ता राध्याः स्थ सर्वैः पुरुषैराराधनीयाः युज्या भवय। हे पुत्रा मधुच्छन्दःप्रभृतय एष देवरातो वो युष्माकं सद्विवाचनं सन्मार्गस्य विशेषतोऽध्यापनं करिष्यतीति शेषः।

तृतीयां गाथामाह-

**सरलार्थः-** हे गाथिवंशीयाः, युष्माकं पूर्वे विद्यमानेन देवरातेन सह यूयं वीरपुत्रविशिष्टाः भवन्तः सर्वैः पूज्याः भवत। हे पुत्राः, अयं देवरातः एव युष्मभ्यं सदुपदेशं प्रदास्यति।

**व्याकरणम्-**

- वीरवन्तः - वीर इति प्रातिपदिकात् मतुब्प्रत्यये सति प्रथमायाः बहुवचने रूपम्।
- स्थ - अस्-धातोः लट्-लकारस्य मध्यमपुरुषस्य बहुवचने रूपम्।

**एष वः कुशिका वीरो देवरातस्तमन्वित। युष्मांश्च**
**दायं म उपेता विद्यां यामु च विद्मसि। इति।**

**व्याख्या-** हे कुशिकाः कुशिकननाम्नो मत्पितामहस्य संवन्धिनो मधुच्छन्दःप्रभृतय एष देवतारो रो युष्माकं ज्येष्ठभ्रातेति शेषः। तं देवरातं यूयमन्वितानुगता भवत। मे मदीयं दायं धनं युष्मांश्चेपेता प्राप्स्यति। चकाराद्देवरातं च। यामु च यामपि कांचिद्वेदशास्त्रादिरूपां विद्यां विद्मसि वयं जानीमः साऽपि युष्मानुपेता प्राप्स्यति।

चतुर्थीं गाथामाह-



**सरलार्थः-** हे कुशकगोत्रोत्पन्नाः पुत्राः, अयं यः वीरः देवरातः, यूयं तस्य अनुगमनं कुरुत। मम यत् धनं शास्त्रादिज्ञानं च स्तः तत् यूयं लभध्वम्।

**व्याकरणम्-**

- विद्मसि- विद्-धातोः लट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्। वैदिके तु मसि इत्यस्य प्रयोगः भवति।

**ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः।**
**देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः।इति।**

**व्याख्या-** हे विश्वमित्रा विश्वमित्रस्य मम पुत्रा ये गाथिना गाथिपौत्रास्ते यूयं सर्वेऽपि सम्यञ्चः समीचीनबुद्धयो ये साकं देवरातेन सार्धं सरातयो रातिर्धनसंपत्तिस्तया युक्ताः सन्तो देवराताय मदीयश्रेष्ठपुत्रस्य देवरातस्य धृत्यै धारणं युष्मत्पोषणं श्रैष्ठ्याय युष्माकं मध्ये श्रेष्ठत्वं च तस्थिरेऽङ्गिकृतवन्तः।

पञ्चमीं गाथामाह-

**सरलार्थः-** हे विश्वामित्रपुत्राः, हे गाथिपौत्राः, यूयं समीचीनबुद्धिसम्पन्नाः, यूयं सर्वे दवरातेन सह धनसम्पद्भोक्तारः भवत, यतो हि यूयं देवरातं श्रेष्ठरूपेण स्वीकृतवन्तः।

**अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः।**
**जह्नुनां चाऽऽधिपत्ये दैवे वेदे च गाथिनाम्। इति।**

**व्याख्या-**इक् स्मरण इति धातुः। अधीयत स्मृतिकारैर्महर्षीभिः स्मर्यते। कथमिति तदुच्यते। अयं देवरातो द्व्यामुष्यायणत्वादुभयोरजीर्गताविश्वमित्रयोः संवन्धिनि ये रिकथे धने तयोर्ऋषिद्रष्ट्रा। तदुभयमर्हतीत्यर्थः। अजीगर्तस्य कूटस्य ऋषिर्जह्नुसंज्ञकस्तस्य वंशे जाताः सर्वे जहरुवस्तेषां चाऽऽधिपत्ये स्वामित्ये देवरातो योग्यः। तथा दैवे देवसंवन्धिनी यागादिकर्माणि वेदे च मन्त्ररूपे समर्थः। गाथिनामस्मत्पितृसंशोत्पन्नानां च सर्वेषामधिपत्ये योग्यः।

**सरलार्थः-** देवरातः ऋषिः उभयोः सम्पदः अधिकारी भूत्वा जह्नुवंशीयानाम् आधिपत्यशक्तौ किञ्च गाथिवंशीयानां दैवकर्मे किञ्च वेदज्ञानस्य योग्यः इत्यनेन ख्यातः भवति।

**व्याकरणम्-**

- अधीयते - अधि इत्युपसर्गकात् अध्ययनार्थकाद् इङ्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**तदेतत्परऋक्शतगाथां शौनःशेपमाख्यानम्।इति।**



**व्याख्या-** कस्य नूनं निधारयेत्यान्ताः सप्ताधिकनवतिसंख्यका ऋचस्त्वं नः स त्वमित्यादिकास्तिस्र ऋच एवमृचां शतम्। परःशब्दोऽधिकवाची। पूर्वोक्तदृक्शतात्-परोऽधिका एकत्रिंशत्संख्यका यं न्विममित्याद्या गाथा यस्मन्नाख्याने तदेतत्परऋक्शतगाथम्। शुनःशेपेन दृष्टाः सप्ताधिकनवतिसंख्यायुक्ता ऋचो याः सन्त्यन्येन दृष्टास्तभ्र ऋचो याः सन्ति ब्राह्मणे प्रोक्ता एकत्रिंशदगाथाविशेषा ये सन्ति तैः सर्वैरुपेतं हरिश्चन्द्रो ह वैधस इत्यादिकं सर्वं शुनःशेपविषयमाख्यानम्।

तस्याऽऽख्यानस्य राजसूयक्रतो विनियोगं दर्शयति-

**सरलार्थः-** एकशतम् ऋचः किञ्च गाथाभिः इदमेव शुनःशेपस्य उपाख्यानम्।

**व्याकरणम्-**

- आख्यानम्- आङ्- इत्युपसर्गपूर्वकात् अदादिगणीयात् ख्याधातोः ल्युटि रूपमिदम्।

### तद्धोता राज्ञेऽभिषक्ताऽचष्टे। इति।

**व्याख्या-**राजसूयक्रतावभिर्षेचनीयाख्ये कर्मणि यदा राजाभिषिक्तो भवति तदानीं तस्मै राज्ञे तदाख्यानं होता कथयेत्।

तत्रेतिकर्तव्यं दर्शयति-

**सरलार्थः-** अभिषिक्तं राजानं होता एतत् उपाख्यानम् उक्तवान्।

**व्याकरणम्-**

- आचष्टे- आङ्- इत्युपसर्गपूर्वकात् चक्षिङ्- धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

### हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावा-
### सीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं तत्समर्धयति। इति।

**व्याख्या-**होता यदोपाख्यानं कथयति तदानीं हिरण्यकशिपौ सुवर्णनिर्मतसूत्रैर्निष्पादिते कशिपौ स होतापविशेषत। तदाख्यानमध्येऽध्वर्युश्च हिरण्यकशिपावासीनो वक्ष्यमाणं प्रतिगरं ब्रूयात्। हिरण्यस्य यशोहेतुत्वाद्यशस्त्वम्। तथा सत्येनं राजानं यशसैव समृद्धं करोति।

अधवर्युणा प्रयोक्तव्यं प्रतिगरविशेषं दर्शयति-

**सरलार्थः-** होता हिरण्यकशिपौ उपविष्टः सन् एतत् आख्यानम् उक्तवान्। अध्वर्युः अपि हिरण्यकशिपौ उपविष्टः सन् प्रतिगरम् उच्चारितवान्। हिरण्यः एव यशसः हेतुः यशसा एव राजा समृद्धः भवति।

**व्याकरणम्-**

- आचष्टे- आङ्- इत्युपसर्गपूर्वकात् चक्षिङ्- धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।



- प्रतिगृणाति- प्रति इत्युपसर्गात् क्र्यादिगणीयात् गृधातोः लटि तिपि रूपम्।
- समर्धयति- सम इत्युपसर्गपूर्वकात् णिजन्तात् ऋधु (वृद्धौ) इति अर्थकात् धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**ओमित्यृचः प्रतिगर एवं तथेनि गाथाया ओमिति**
**वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च**
**पापादेनसः प्रमुञ्चति। इति।**

**व्याख्या-**होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्तेऽधवर्योरोमित्येतादृशः प्रतिगरो भवति। ओमित्येतच्छन्दोरूपं दैवं देवैवङ्गीकारार्थे प्रयुज्यते। तत्तथेत्यन्तं (तथेति) मानुषं मनुष्या अङ्गीकारे तथेतिशब्दं प्रयुञ्जते। तत्तेन प्रतिगरेण दैवेम मानुषेण चाधर्वयुरेनं राजानं पापादैहिकादकपकीर्तिरूपादेनसो मरकहेतोश्च प्रमुञ्चति प्रमुक्तं करोति।

क्रत्वर्थत्वेनोपाख्यानं विधाय क्रतुनिरपेक्षपुरुषार्थत्वेन विधत्ते-

**सरलार्थः-** होत्रा पठ्यमानायाः प्रत्येकम् ऋचः परम् ओम् किञ्च (प्रत्येकं) गाथायाः परं तथा इति प्रतिगरः। ओम् शब्दः दैवः, तथा शब्दः मानवः, दैवः मानवः च प्रतिगरेण राजानं पारत्रिकात् ऐहिकात् समस्तात् पापात् अध्वर्युः मोक्षयति।

**व्याकरणम्-**

- प्रमुञ्चति- प्र इत्युपसर्गपूर्वकात् मुच् इति धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**तस्माद्यो राजा विजिती स्यादप्ययजमान आख्या-**
**पयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं चनैनः**
**परिशिष्यते। इति।**

**व्याख्या-**यस्मादुपाख्यानं पापप्रशमनहेतुस्तस्मादयजमानोऽपि राजा विजिती यदि विजयोपेतः स्यात्तदानीमेतच्छौनःशेपमाख्यानमाख्यापयेत्। तस्य राज्ञो यः कश्चिद्ब्राह्मण उपाख्यानं ब्रूयात्। तथा सति तस्मिन्राजनि अल्पं चन किंचिदप्येनः पापं न ह वै परिशिष्यते सर्वं पापं नश्यतीत्यर्थः।

अख्यानप्रयुक्त दक्षिणां विधत्ते-

**सरलार्थः-** अतः स राजा विजयलाभं कृतवान्, स यजमानः अभूत्वापि यदि शुनःशेपस्य आख्यानं वादयति तर्हि तस्य पापस्य कणा अपि अवशिष्टा न तिष्ठति।

**व्याकरणम्-**

- स्यात् - अस्-धातोः विधिलिङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूप्।



- परिशिष्यते - परि इत्युपसर्गपूर्वकात् शास्(अनुशिष्टौ) इत्यर्थकात् लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**सहस्रमाख्यात्रे दद्याच्छतं प्रतिगरित्र एते चैवाऽऽ-**
**सने श्वेतश्चाश्वतरीरथो होतुः। इति।**

**व्याख्या**-योऽमाख्यात होता तस्मै क्रत्वर्थदक्षिणामन्तरेणोपाख्यान-प्रयुक्तां दक्षिणां गोसहस्ररूपां दद्यात्। प्रतिगरित्रेऽध्वर्य्वे गोशतं दद्यात्। ये हिरण्यकशिपुरूपे द्वे स्त एते अपि ताभ्यामेव दद्यात्। अश्वतरीभ्यां संकीर्णज्ञातियुक्ताभ्यामधिकशक्तिभ्यां युक्तो रथोऽश्वतरीरथः। स च रजतेनालं -कृतत्वाच्छ्वेतः। सोऽपि तादृशो होतुर्देयः।

पूर्वमयज्ञसंयुक्तं कल्पो विजयिनो राज्ञोऽभिहितः। इदानीं पुत्रकामानामपि (सर्वेषामपि) विधत्ते-

**सरलार्थः-** यः आख्यानं कथयति तस्मै सहस्रं गावः प्रदानीयाः, किञ्च यः प्रतिगरं करोति तस्मै एकशतं गावः देयाः। स हिरण्यकशिपुः द्वयमेव। किञ्च तेभ्यः द्वयमेव देयम्। श्वेतः अश्वतरीयुक्तः रथः होत्रे देयौ।

**व्याकरणम्-**

- दद्यात्- दा-धातोः विधिलिङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- होतुः- होतृ इति प्रातिपदिकस्य षष्ठ्यन्तं रूपम्।

**पुत्रकामा हाप्याख्यापयेरल्लँभन्ते ह पुत्राँल्लभन्ते ह**
**पुत्रान्॥१८॥इति।**

**व्याख्या-** ये पुत्रकामाः सन्ति ते ह प्रसिद्धम् एतद् उपाख्यानम् आख्यापयेरन् ब्राह्मणमुखात् शृणुयुरित्यर्थः। ते पुत्राल्लँभन्ते। अभ्यासोऽभ्यायसमाप्त्यर्थः।

**सरलार्थः-** पुत्रम् इच्छन्तः जनाः अपि आख्यानं पठन्ति। अनेन तेषां पुत्रलाभः भवेत्।

**व्याकरणम्-**

- लभन्ते- लभ्-धातोः लट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।



## पाठगतप्रश्नाः

१. ऋत्विजः कम् अनुष्ठानस्य समाप्तिं कर्तुम् उक्तवन्तः।
२. शुनःशेपः कस्य अङ्के उपवेशनं कृतवान्।



३. तस्य बान्धवाः कीदृशाः अभूवन्।
४. कति गाः तस्मै दत्तवन्तः।
५. विश्वामित्रस्य कति पुत्राः आसन्।
६. कस्मात् पञ्चाशत् ज्येष्ठाः कनिष्ठाः।
७. विश्वामित्रः कान् प्रति अभिशापवाक्यम् उक्तवन्तः।
८. विश्वामित्रः कनिष्ठपुत्रान् प्रति किम् उक्तवन्तः।
९. गाथिनः शब्दः कम् आचष्टे।
१०. कः गाथिवंशीयेभ्यः सदुपदेशं प्रदास्यति।



## पाठसारः

अस्मिन् पाठे शुनःशेपोपाख्यानस्य पञ्चमः खण्डः वर्णितः। अस्मिन् खण्डे यदुक्तं तत् साररूपेण कथ्यते। अस्मिन् खण्डे शुनःशेपं विश्वामित्रः पुत्रत्वेन स्वीकारवामन्। वस्तुतः शुनःशेपः अजीगर्तस्य पुत्रः तथापि स्वस्य पितुः क्रूरतां दृष्ट्वा विश्वामित्रस्य पुत्रत्वं स्वीकृतवान्। विश्वामित्रः अपि तं पुत्ररूपेण स्वीकृतवान्। विश्वामित्रस्य शतं पुत्राः आसन्। तेषु पञ्चाशत् पुत्राः शुनःशेपस्य ज्येष्ठत्वं न स्वीकृतवन्तः। तस्मात् विश्वामित्रः तेभ्यः अभिशापं दत्तवान्। पुनः पञ्चशत् एनं पुत्रं ज्येष्ठरूपेण स्वीकृतवन्तः।



## पाठान्तप्रश्नाः

१. शुनःशेपोपाख्यानस्य तृतीयपाठस्य सारं संक्षेपेण लिखत।
२. तमृत्विज उचुस्त्वमेव......सहस्रादिति मन्त्रं पूरयित्वा व्याख्यात।
३. अथ ह शुनःशेपो..... कापि लेयवाभ्रवाः इति मन्त्रं पूरयित्वा व्याख्यात।
४. स होवाचाजीगर्तः....शतानि त्वमवृणीथा मदङ्गिर इति मन्त्रं पूरयित्वा व्याख्यात।
५. स होवाचाजीगर्तः.... त्वया कृतमिति मन्त्रं पूरयित्वा व्याख्यात।
६. असंधेयमिति ह विश्वामित्र......पुत्रतामिति मन्त्रं पूरयित्वा व्याख्यात।
७. स होवाच शुनःशेपः .....त्वोपमन्त्रय इति मन्त्रं पूरयित्वा व्याख्यात।
८. स होवाच शुनःशेपः....ज्यैष्ठ्याय कल्पध्वमिति॥ इति मन्त्रं पूरयित्वा व्याख्यात।
९. तस्य ह विश्वामित्रस्यैकशतं...इत्यादिमन्त्राणां सरलार्थं प्रसङ्गं च वर्णयत।
१०. स होवाच मधुच्छन्दाः.....वयं स्मसीति इति मन्त्राणां सरलार्थं प्रसङ्गं च वर्णयत।
११. ते वै पुत्राः पशुमन्तो ... इत्यादिमन्त्राणां सरलार्थं प्रसङ्गं च वर्णयत।
१२. एष वः कुशिका वीरो...यामु च विद्मसि इति मन्त्रं पूरयित्वा व्याख्यात।



१३. अजीगर्तम् अवलम्ब्य लघुप्रबन्धं रचयत।

१४. शुनःशेपम् अवलम्ब्य लघुप्रबन्धं लिखत।

१५. विश्वामित्रम् आश्रित्य लघुप्रबन्धं लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

१. ऋत्विजः शुनःशेपम् अनुष्ठानस्य समाप्तिं कर्तुम् उक्तवन्तः।

२. विश्वामित्रस्य अङ्के उपवेशनं कृतवान्।

३. कपिलगोत्रोत्पन्नाः वभ्रुगोत्रीयाः तस्य बान्धवाः अभूवन्।

४. त्रिंशतं गाः तस्मै दत्तवन्तः।

५. एकशतं पुत्राः आसन्।

६. मधुच्छन्दसः।

७. ये तेषां पितुः वाक्यम् असमीचीनरूपेण ज्ञातवन्तः।

८. यूयम् बहुविधपुत्रयुक्ताः बहुविधानुकूलपुत्रयुक्ताश्च भविष्यथ।

९. विश्वामित्रस्य पितरम् आचष्टे।

१०. देवरातः।

## १४.२) शुनःशेपोपाख्यानसारः

शुनःशेपोपाख्यानम् अतिदीर्घम् त्रिषु पाठेषु परिव्याप्तम्। प्रसङ्गात् तस्य एकत्र भिन्नगिरा प्रकटम् अधस्तात् प्रदीयते।

वैदिकसाहित्यमण्डनभूतब्राह्मणेषु अन्यतमं बहुविधाख्यानसमृद्धम् ऐतरेयब्राह्मणम्। अस्य ब्राह्मणस्य त्रयस्त्रिंशे अध्याये राजसूययज्ञवर्णनावसरे शुनःशेपस्य यत् आख्यानं समुपलभ्यते तत् आधुनिककालेऽपि प्रासङ्गिकताम् आवहति। अस्य आख्यानस्य अंशत्रयं वर्तते। प्रथमे भागे हरिश्चन्द्रनारदसंवादः, द्वितीये भागे हरिश्चन्द्रवरुणसंवादः, तृतीये अन्तिमभागे हरिश्चन्द्रपुत्ररोहिताजीगर्तसुतशुनःशेपर्षिविश्वामित्रसंवादः वर्तते। सम्पूर्णे आख्याने त्रिंशत् गाथाः सन्ति।

आसीद् इक्ष्वाकुवंशीयो हरिश्चन्द्रो नाम नृपतिः। तस्य शते भार्यासु सतीषु अपि स सन्तानहीनः आसीत्। एकदा तस्य प्रासादं प्रति पर्वतनारदनामकौ द्वौ ऋषी समुपागतौ। राजा स्वकीयां दुर्दशां प्रकटयितुकाम ऋषिं नारदम् अपृच्छत् - विवेकिनः मनुष्यादिप्राणिनः विवेकहीनाः पशुविहगादयः इति सम्पूर्णमपि जीवकुलं सन्तानकामं वर्तते - किमस्य कारणम् इति। तदा नारदः दशभिः गाथाभिः अस्य प्रश्नस्य सुष्ठु उत्तरं प्रादात् - "स एकया पृष्टो दशभिः प्रत्युवाच" इति। नारदः अब्रवीत् यत् यदि पिता जीवद्दशायां पुत्रस्य मुखदर्शनं करोति तर्हि स वैदिकेभ्यो लौकिकेभ्यश्च ऋणेभ्यो मुक्तो भवति। किञ्च



ऋणमुक्तौ सत्याम् अमृतत्वप्राप्तिः तस्य सम्भवति। स स्वस्य ऋणसमूहं पुत्रे न्यस्तं कर्तुं शक्नोति। पुत्रजन्मना पितरौ मुदाकुलौ भवतः यतो हि समस्तेभ्यः पार्थिवसुखेभ्यः पुत्रलाभः अधिकसुखप्रदः। इदं बहुप्राचीनकालादेव प्रसिद्धं समेषाम् अनुभवसिद्धं च मतम्। तस्मात् वैयाकरणाः अपि अर्धमात्रलाघवेन उत्पन्नं सुखं पुत्रोत्सवेन उपमान्ति - "अर्धमात्रालाघवेन पुत्रोत्सव इव मन्यन्ते वैयाकरणाः"। पुत्ररहितः पिता बहुसम्पन्नोऽपि दुःखाविग्नः तिष्ठति। मनुसंहितादिधर्मशास्त्रेषु आम्नातं - पुत् नाम भीषणः घनतमसाच्छन्नः एको नरकः वर्तते। पुत्रः तस्मान् नरकात् पितरं पातुं शक्तः। अतः स पुत्रः। पुंनामनरकात् त्रायते स पुत्रः इति पुत्रशब्दस्य व्युत्पत्तिरपि। ततो मल-अजिन-श्मश्रु-तपः - एतैः चतुर्भिः प्रतीकभूतैः शब्दैः नारदः भारतीयचतुराश्रमव्यवस्थां निर्दिष्टवान्। इमे चत्वारः आश्रमाः निष्फलाः यदि संसारे सन्तानः न स्यात्। पुत्रहीनः समाजे निन्दास्पदम्, सपुत्रकस्तु सर्वथा श्लाघार्हः। अतः पुत्रलाभः अत्यन्तम् आवश्यकः। कन्यासन्तानः अपि दुःखास्पदम् (कृपणं ह दुहिता, ३३।१) । केवलं पुत्रः एव पितुः सम्मानम् अभिवर्धयितुं शक्तः। यतो हि स स्वयमेव परमलोकस्य अमृतत्वस्वरूपः ज्योतिःस्वरूपश्च। पत्युः आत्मा एव पुत्ररूपेण जन्मलाभं करोति। पुत्रहीनस्य कृते समेषां सुलोकानां द्वाराणि रुद्धानि तिष्ठन्ति। अविवेकिनः पशवोऽपि संस्कारमिमं जानाति। अतः ते प्रयोजने सति सन्तानलाभाय स्वमात्रा स्वभगिन्या वा सह सङ्गमादिकं कुर्वन्ति। एतैः दृष्टान्तैः नारदः एतदेव बोधयितुम् इच्छति यत् पुत्रो न केवलम् इच्छाविषयः अपि तु ऋणमुक्तेः इहामुत्र सुखदुःखेभ्यो विमुक्तेः श्रेष्ठः मार्गः। अत एव पुत्रहीनस्य राज्ञः हरिश्चन्द्रस्य पुत्रसन्तानः अत्यन्तम् आवश्यकः। अतः नारदः पुत्रलाभोपायान् अपि महाराजं हरिश्चन्द्रं ज्ञापितवान्। नारदः उवाच – राजा यदि वरुणदेवं प्रार्थयित्वा सन्तोषयितुं समर्थः तर्हि त्वदीयम् अभीष्टं सिध्यति। नारदस्य उपदेशानुसारेण राजा हरिश्चन्द्रो वरुणं प्रार्थितवान्। वरेण सह वरुणः राज्ञे एकं पणमपि प्रदत्तवान् यत् नवजातपुत्रेण तस्य यागानुष्ठानं सम्पादनीयमिति। पुत्रविरहेण पीडितो राजा तेनैव सम्मतः अभवत्। यथाकालं राजा हरिश्चन्द्रः पुत्रसन्तानं लब्धवान्। तस्य नाम आसीत् रोहितः। तदनु राजा हरिश्चन्द्रः पुत्रवियोगम् अनिच्छन् विविधव्याजैः यागानुष्ठानं विलम्बितं करोति स्म। कदापि पुत्रस्य वयः दशदिनानि भवन्तु, कदापि पुत्रस्य दन्ताः जायन्तां, कदापि ते दन्ताः पतन्तु, पुनः दन्ताः जायन्ताम्, कदापि क्षत्रियसन्तानोऽयम् अतः किञ्चिद् धनुर्विद्यादिकं शिक्षताम् इत्यादिकम् उक्त्वा स प्रतिवारं वरुणं निराकरोति स्म। वरुणोऽपि प्रतिवारं यजस्व मानेन इति उक्त्वा तत्प्रार्थनम् आकर्ण्य दयावशः प्रतिनिवर्तमानः आसीत्। एवमेव षोडश वर्षाणि व्यतीतानि। एकदा निरुपायः राजा पुत्रम् आहूय तस्य सम्पूर्णमपि जन्मवृत्तान्तं न्यवेदयत्। किन्तु तदा पुत्रः रोहितः स्वाधीनचिन्तनादिकं कर्तुं समर्थः आसीत्। अतः स वरुणस्य पणम् अविगणय्य एव धनुर्बाणादिसज्जितः अरण्यभ्रमणाय निर्गतः। राज्ञः पणभङ्गः सञ्जातः। क्रुद्धः वरुणः राजानं हरिश्चन्द्रं शप्तवान् यत् राज्ञः कठिनः उदररोगो भविष्यतीति। अत्र अस्माभिः इदं स्मर्तव्यं यत् वेदे वरुणदेवस्य शापः अतीव प्रथितः। अयं रोगोऽपि तेषु पाशेषु एव अन्यतमः। स यं कमपि रोगग्रस्तं पाशग्रस्तं वा कर्तुं समर्थः। वने परिभ्रमणशीलस्य रोहितस्य पितुः कठिनरोगस्य वार्ताम् आकर्ण्य राज्यं प्रति आगन्तुकामस्य स्वयं देवराजः इन्द्रः ब्राह्मणवेशेन मार्गम् अवरुद्धवान्। स काभिश्चित् गाथाभिः रोहितं चरैवेतितत्त्वम् अवागमयत्। सोऽवदत् यत् यः सदा विचरणशीलः चरिष्णुप्रकृतिः तादृशः परिश्रमी मनुष्यः सम्पदा अभ्युदयेन च युक्तो भवति। तस्य पादद्वयं





बहुतीर्थानां पर्यटनेन श्रीमण्डितं भवति। स फलयुक्तवृक्षवत् अर्थयुक्तः। अलसस्य कर्महीनस्य अचलस्य वा जनस्य एकत्र स्थितस्य पापानि वर्धन्ते। शयानस्य जनस्य भाग्यमपि शेते। उपविशतः निष्कर्मणः जनस्य भाग्यमपि स्थाणुवत् एकस्मिन् स्थाने तिष्ठति, न कुत्रापि गन्तुं पारयति। एवंविधानां जनानाम् आलस्यं तामसिकता एव। चरिष्णुः परिश्रमी च मनुष्यः सत्यगुणाधिकारी। अलसानां मनो नानाविधकुकर्माचरणे पटु वर्तते। गच्छति शिलाखण्डे शैवालः नोत्पद्यते इति उक्तिः। एवमेव कर्मरतो मनुष्यः कदापि कुकर्माचरणे न प्रवर्तते। चरन् वै मधु विन्दति इति च ब्राह्मणस्य उक्तिः। स दृष्टान्तेन प्रदर्शितवान् यत् सूर्यस्य श्रेष्ठत्वं (सूर्यस्य पश्य श्रेमाणम्) तस्य अतन्द्रितपरिक्रमेणैव प्रकटितं भवति। एवम् इन्द्रस्य उपदेशान् शृण्वन् षट् वत्सराणि तत्रैव स्थितो रोहितः।

एकदा वने स कस्यचिद् दरिद्रस्य क्षुत्पीडितस्य ब्राह्मणपरिवारं प्राप्तवान्। परिवारकर्तुः नाम अजीगर्तः। तस्य त्रयः पुत्राः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूलः च। लोभी दरिद्रो ब्राह्मणो रोहितात् शतं गाः स्वीकृत्य मध्यमपुत्रं शुनःशेपं रोहिताय प्रादात्। वरुणदेवोऽपि क्षत्रियसन्तानस्य स्थाने ब्राह्मणसन्तानेन विहितं यागम् अनुमोदितवान्। तदनु सवनीयेन पुरुषपशुना शुनःशेपेन यागः आरब्धः। पुरुषमेधयागे पुरुषस्य यूपदारुणि बन्धनं करणीयं भवति। किन्तु अत्र शुनःशेपस्य बन्धनं कर्तुं कोऽपि न प्रावर्तत – यतो हि इदं कर्म अत्यन्तम् अमानविकम्। किन्तु अत्रापि शुनःशेपस्य पिता अजीगर्तः एकशतस्य गवां विनिमयेन स्वपुत्रस्य यूपदारुणि बन्धनं विहितवान्। परन्तु हन्तुं न कोऽपि प्रावर्तत। यतो हि मानुषवधं न कोऽपि कर्तुम् उद्यतः आसीत्। तत्रापि आङ्गिरसः सोयवसिः अजीगर्तः पुत्रस्य वधं कर्तुम् असिम् आदाय प्रवृत्तः। देशस्य राज्ञः श्रद्धेयानाम् ऋषीणां स्वस्य पितुः च निष्ठुराचरणेन भीतः शुनःशेपः देवान् स्मृतवान्। अत्र शुनःशेपः स्वस्य असीमधैर्यम् अविश्वसनीयाध्यवसायः स्थिरता मानसिकशक्तिः विद्या इत्यादिकं प्रकर्षेण प्रकटितवान्। क्रमेण प्रजापतिः वह्निः सविता वरुणः विश्वदेवाः अश्विद्वयम् इन्द्रः इत्यादिदेवानां बहुविधैः मन्त्रैः स्तुतिभिः च वन्दनम् अकरोत्। बलेः मुक्तिं च ऐच्छत्। किन्तु कोऽपि तस्य साहाय्यं न कृतवान्। अन्ते देवी उषा ममताक्रान्ता शुनःशेपं मोचितवती। न केवलम् एतदेव, राज्ञः कठिन उदररोगोऽपि निर्गतः। बद्धः शुनःशेपः मुक्तः सञ्जातः। एवं रोहितशुनःशेपः संवादः समाप्तः।

ततः चित्ताकर्षकं तृतीयपर्व आरभ्यते। शुनःशेपस्य विशिष्टं सामर्थ्यम् दृष्ट्वा अनुष्ठानकारिणः ऋत्विजः चमत्कृताः। एतेषु ऋत्विक्षु प्रधानम् आसीत् विश्वामित्रः। ते सर्वेऽपि यागस्य अवशेषभागसमाप्तेः भारं शुनःशेपाय प्रदत्तवन्तः। विश्वामित्रः परमस्नेहेन तं स्वक्रोडे अकरोत्। किञ्च निजपुत्ररूपेण अग्रहीत्। तस्य नाम अभवत् देवरातवैश्वामित्रः। इदं सर्वम् अवलोक्य अजीगर्तः पुनः स्वपुत्रस्य प्रत्यर्पणाय विश्वामित्रम् उक्तवान् - "ऋषे पुनर्मे पुत्रं देहि" इति। पुत्रः यथा वंशत्यागं कृत्वा न गच्छेत् तथा अनुरुद्धवान्। कृतकर्मणां कृते स आत्मनः अनुतापं प्रकटितवान्। किञ्च प्रयोजने सति स त्रिशतं गाः एकशतं पुत्रान् च दातुं सन्नद्धः इत्यपि उक्तवान्। किन्तु तदा शुनःशेपः प्रत्यावर्तनाय मतिं न चकार। स निर्दयं पितरं कठोरभाषया निन्दितवान्। ततःप्रभृति आङ्गिरसः शुनःशेपः देवरातः वैश्वामित्रः समजायत।

अत्रैव आख्यानं न समाप्तम्। महर्षिः विश्वामित्रः न केवलं शुनःशेपं पुत्ररूपेण गृहीतवान् अपि तु तस्य शतस्य पुत्राणां मध्ये शुनःशेपं पञ्चाशतः पुत्रेभ्यः ज्येष्ठतररूपेणापि अङ्गीकृतवान्। एते पञ्चाशत् आसन् मधुच्छन्दा इत्यपेक्षया ज्येष्ठाः अपरे पञ्चाशत् च तदपेक्षया कनिष्ठाः। देवरातवैश्वामित्रस्य



शुनःशेपस्य स्थानम् आसीत् मध्यवर्ति, मधुच्छन्दायाः उपरि। अत्रैव समस्यानाम् आरम्भः। ये मधुच्छन्दा इत्यपेक्षया वयोवृद्धाः ते शुनःशेपस्य पुत्रत्वं न अङ्गीकृवन्तः (न ते कुशलं मेनिरे)। अतः ते विद्रोहं कृतवन्तः। तेन तेषां सर्वेषाम् एव विद्रोहिणां विश्वामित्रपुत्रत्वं गतम्। न केवलम् एतत्, कौलीन्यराहित्येन विद्याया अभावेन ते क्रमेण अधोगतिं प्राप्तवन्तः। तेषां वंशीयाः दस्यवः सञ्जाताः। ब्राह्मणं तेषां कञ्चन वंशपरिचयं प्रदत्तवत् - यथा अन्ध्रः पुण्ड्रः शबरः पुलिन्दः मुतिबः इत्यादयः। इदानीम् एतेषां कानिचन प्रादेशिकनाम्ना कानिचन वा जातिरूपेण प्रसिद्धानि। अपरपुत्राणां कृते विश्वामित्रेण आशीर्वादाः वर्षिताः। स तेभ्यः पशुमान् वीरवान् भव – इत्यादिकम् बहुविधान् आशीर्वादान् प्रदत्तवान्। किञ्च ते एव विश्वामित्रस्य सम्पत्तीनाम् उत्तराधिकारिणो भविष्यन्ति इत्यपि ज्ञापितवान्। शुनःशेपः द्वैतोत्तराधिकारं प्राप्तवान्। स आङ्गिरसः गाथी इति उभयथा गृहीतः। तस्य दरिद्रताध्यवसायनिष्ठाविद्यावत्त्वधैर्यसहिष्णुतादयो गुणाः सार्थक्यमण्डिताः अभवन्।

॥ इति चतुर्दशः पाठः॥



# १५

# ॥विश्वामित्र-नदीकथा॥

## प्रस्तावना

कस्यापि भवनस्य भित्तिः यथा तथा भारतीयसंस्कृतेः भित्तिः वेदाः। अत एव संस्कृतसाहित्ये वेदानां स्थानं सर्वान् अतिशेते। भारते धर्मव्यवस्था वेदायत्ता एव। वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयः तु वेदमूलकतया वर्तते। अत एव श्रुतिस्मृत्योः विरोधे श्रुतिरेव गरीयसी। न केवलं धर्ममूलकतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतया अपि। प्राचीनानि धर्मसमाज-व्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। विद्यन्ते धर्मादयः पुरुषार्थाः यैः ते वेदाः इति। सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकम् उपायं यो वेदयति स वेद इति। तत्र कारिका -

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

वेदाः चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति। तत्र ऋग्वेदे नैके रसपूर्णसंवादासूक्ताः सन्ति। वैदिककथासहित्ये विश्वामित्र-नदीकथा एका अन्यतमा कथा। एवम् ऋग्वेदे अनेके सूक्ते कथोपकथनं प्राधान्येन दृश्यते। अतः कथोपकथनं संवादनाम्ना प्रसिद्धः। कथोपकथनमध्ये विश्वामित्र-नदीकथा अतीव मनोरमा। अत्र शुतुद्रु-विपाशयोः नद्योः कथा वर्तते। किं च तयोः सृष्टेः कारणं किम्। कः तयोः सृष्टिकर्ता। विश्वमित्रेण नद्याः का वार्ता अभवत् इत्यादि अत्र पाठे प्रस्तूयते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वैदिकसाहित्येतिहासं ज्ञास्यति।
- मुनि-ऋषीणां चारित्रिकं ज्ञास्यति।
- वैदिकयुगे याः नद्यः आसन् ताः ज्ञास्यति।
- कथं नद्यः सृष्टाः तत्र किं कारणमिति तदपि ज्ञास्यति।
- मन्त्रस्य संहितापाठं ज्ञास्यति।
- मन्त्रस्य पदपाठं ज्ञास्यति।

- स्वयमेव मन्त्राणां व्याख्यानं कर्तुं शक्यो भवेत्।
- स्वयमेव मन्त्राणाम् अन्वयं कर्तुं समर्थो भवेत्।
- मन्त्रे स्थितं व्याकरणं ज्ञास्यति।

## १५.१) अथ मूलपाठः

**प्र पर्व॑तानामुश॒ती उ॒पस्था॒दश्वे॑इव॒ विषि॑ते॒ हास॑माने।**
**गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे विपा॑ट्छुतु॒द्री पय॑सा जवेते॥१॥**

**इन्द्रे॑षिते प्रस॒वं भिक्ष॑माणे॒ अच्छा॑ समु॒द्रं र॒थ्ये॑व याथः।**
**स॒मा॒रा॒णे ऊ॒र्मिभिः॒ पिन्व॑माने अ॒न्या वा॑म॒न्याम॒प्ये॑ति शु॒भ्रे॥२॥**

**अच्छा॒ सिन्धुं॑ मा॒तृत॑मामयासं॒ विपा॑शमु॒र्वीं सु॒भगा॑मगन्म।**
**व॒त्समि॑व मा॒तरा॑ संरिहा॒णे स॑मा॒नं योनि॒मनु॑ सं॒चर॑न्ती॥३॥**

**ए॒ना व॒यं पय॑सा॒ पिन्व॑माना॒ अनु॒ योनिं॑ दे॒वकृ॑तं॒ चर॑न्तीः।**
**न वर्त॑वे प्रस॒वः सर्ग॑तक्तः किं॒युर्विप्रो॑ न॒द्यो॑ जोहवीति॥४॥**

**रम॑ध्वं मे॒ वच॑से सो॒म्याय॒ ऋता॑वरी॒रुप॑ मुहू॒र्तमेवैः॑।**
**प्र सिन्धु॒मच्छा॑ बृह॒ती म॑नी॒षाव॒स्युर॑ह्वे कुशि॒कस्य॑ सू॒नुः॥५॥**

**इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑हन्वृ॒त्रं प॑रि॒धिं न॒दीना॑म्।**
**दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः॥६॥**

**प्र॒वाच्यं॑ शश्व॒धा वी॒र्यं१॒॑ तदिन्द्र॑स्य॒ कर्म॒ यदहिं॑ विवृ॒श्चत्।**
**वि वज्रे॑ण परि॒षदो॑ जघा॒नाय॒न्नापोऽय॑नमि॒च्छमा॑नाः॥७॥**

**ए॒तद्वचो॑ जरित॒र्मापि॑ मृष्ठा॒ आ यत्ते॑ घोषा॒नुत्त॑रा यु॒गानि॑।**
**उ॒क्थेषु॑ कारो॒ प्रति॑ नो जुषस्व॒ मा नो॒ नि कः॑ पुरुष॒त्रा नम॑स्ते॥८॥**

**ओ षु॒ स्व॑सारः का॒रवे॑ शृणोत य॒यौ वो दू॒रादन॑सा॒ रथे॑न।**
**नि षू न॑मध्वं॒ भव॑ता सु॒पा॒रा अ॑धोअ॒क्षाः सि॑न्धवः स्रो॒त्याभिः॑॥९॥**



आ ते कारा शृणवामा वचांसि ययाथ दूरादनसा रथेन।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते॥१०॥

यदङ्ग त्वा भरता संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः।
अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम्॥११॥

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम्।
प्र पिन्वमाध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम्॥१२॥

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत।
मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम्॥१३॥

### १५.१.१) अथ मूलपाठाध्ययनम् -

प्र पर्वतानामुशती उपस्थादश्वेइव विषिते हासमाने।
गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते॥१॥

**पदपाठः-** प्र। पर्वतानाम्। उशती इति। उपस्थात्। अश्वे इवेत्यश्वेऽइव। विसिते इति विऽसिते। हासमाने इति॥ ग्रावाऽइव। शुभ्रे इति। मातरा। रिहाणे इति। विऽपाट् शुतुद्री। पयसा। जवेते इति॥१॥

**अन्वयः-** पर्वतानाम् उपस्थात् विपाट्शुतुद्री उशती, विषिते अश्वेइव, हासमाने शुभ्रे मातरा रिहाणे पयसा प्र जवेते।

**व्याख्या** - 'पर्वतानां' गिरिणां शैलानाम् 'उपस्थात्' उत्सङ्गान्निर्गत्य 'उशती' समुद्रगमनं कामयमाने। गमने दृष्टान्तः। 'अश्वेइव'। यथा 'विषिते' मन्दुरातो विमुक्ते 'हासमाने' अन्योन्यजवने स्पर्धमाने। यद्वा हृष्यन्त्यावश्वे इव वडवे इव त्वरया गच्छन्तौ परस्परं हृष्यन्तौ। तथा 'गावेव शुभ्रे'। यथा द्वौ गावौ शोभमानौ वर्तेते तद्वच्छुभ्रे शोभमाने। किंच 'मातरा'। यथा मातरौ धेनू। 'रिहाणे'। अन्तर्णीतसन्नर्थो लिहि। वत्सं जिह्वया लेढुमिच्छन्त्यौ शीघ्रं गच्छतस्तद्वत् समुद्रं गन्तु जवात् गच्छन्त्यौ 'पयसा' संयुक्ते 'विपाट्'। कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विमोचनाद्वा विपाट्। 'शुतुद्री'। शु क्षिप्र



तु तुन्न तुन्नेव द्रवति गच्छतीति शुतुद्री। एतन्नामके नद्यौ प्र 'जवेते' समुद्रं प्रति शीघ्रं गच्छतः। अत्र निरुक्तं 'पर्वतानामुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धाया हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते' (निरु. ९.३९) इति॥

**सरलार्थः -**

(विश्वामित्रः नदीं प्रति कथयति यत्) पर्वतक्रोडात् निर्गच्छन्त्यौ (समुद्रमुद्दिश्य) गमनलिप्सया (परस्परं) स्पर्धिनीरूपेण धावन्त्यौ, उन्मुक्तप्रग्रहे अश्वे इव, (स्ववत्सं) लेहनकारिण्यौ मातारौ गावौ इव, विपाट्-शुतुद्र्यौ (स्वस्याः) महता वेगेन प्रवहतः।१

**व्याकरणम् -**

- शती-वश्-धातोः शतरि ङीपि। ग्रहिज्या इत्यादिसूत्रेण संप्रसारणेन उशती।
- उपस्थात्-उपस्थीयते अत्र। उपपूर्वकात् स्था-धातोः कप्रत्यये उपस्थ इति।ततः पञ्चम्येकवचने।
- विषिते-विपूर्वकात् षिञ्-धातोः क्तप्रत्यये विषित। ततः स्त्रीलिङ्गे प्रथमाद्विवचने।
- हासमाने-हस्-धातोः शनचि हसमान इति। ततः स्त्रीलिङ्गे प्रथमाद्ववचने।
- शुभ्रे- शुभ्-धातोः रप्रत्यये स्त्रीलिङ्गे प्रथमाद्विवचने।
- रिहाणे- लिह्धातोः शानचि लस्य छन्दसि रादेशे नस्य णादेशे ततः स्त्रीलिङ्गे प्रथमाद्विवचने।
- जवेते-जुङ्धातोः लटि प्रथमापुरुषद्विवचने।

**इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः।**
**समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे॥२॥**

**पदपाठः- इन्द्रेषिते इतीन्द्रऽइषइवे। प्रऽसवम्। भिक्षमाणे इति। अच्छ। समुद्रम्। रथ्याऽइव। याथः॥ समाराणे इति सम्ऽआराणे। ऊर्मिऽभिः। पिन्वमाने इति। अन्या। वाम्। अन्याम्। अपि। एति। शुभ्रे इति॥**

**अन्वयः-** इन्द्रेषिते प्रसवं भिक्षमाने समुद्रम् अच्छा रथ्येव याथः। (हे) शुभ्रे! समारणे ऊर्मिभिः पिन्वमाने वाम् अन्या अन्याम् अति एति।

**व्याख्या-** हे नद्यौ 'इन्द्रेषिते' इन्द्रेण प्रेषिते 'प्रसवं' तस्येन्द्रस्यानुज्ञां 'भिक्षमाणे' प्रार्थयमाने युवां 'समुद्रम्' 'अच्छ' आभिमुख्येन 'याथः' गच्छथः। तत्र दृष्टान्तः। 'रथ्येव' इति। यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत्। किं कुर्वत्यौ। 'समाराणे' परस्परं संगच्छन्त्यौ 'ऊर्मिभिः' तरङ्गैः 'पिन्वमाने' परिसरप्रदेशे संतर्पयन्त्यौ 'शुभ्रे' शौभमाने। युवां समुद्रं गच्छथ इति पूर्वेणान्वयः। तथा 'वां' युवयोर्मध्ये 'अन्या' एका 'अन्याम्' अपरां नदीम् 'अप्येति' अपिगच्छति। परस्परमैक्यमापद्यत इत्यर्थः॥

**सरलार्थः -**



इन्द्रेण प्रेषिते, प्रवाहं भिक्षयित्र्यौ, किञ्च द्वे सारथ्यौ इव समुद्रमुद्दिश्य (युवाम्) प्रधावतः। हे शुभ्रजले, (युवाम्) यौगपद्येन गच्छन्त्यौ, ऊर्मिभिः धावन्त्यौ परस्परं परस्परं प्रति गच्छतः। २

**व्याकरणम् -**

- इन्द्रेषिते- इन्द्रेण इषिते, इष्-धातोः क्तप्रत्यये इडागमे।
- भिक्षमाणे- भिक्ष-धातोः शानचि।
- प्रसवम्- प्रपूर्वकात् सू-धातोः अप्प्रत्यये प्रसव इति।
- रथ्या- रथ्यास्य इदम्।तस्येदम् इत्यर्थे रथाधत् इति सूत्रेण यत्प्रत्यये रथ्य इति।
- याथः-या-धातोः लटि मध्यमपुरुषद्विवचने।
- समाराणे-सम्पूर्वकात् आपूर्वकात् ऋ गतौ इतिधातोः कानचि गुणे।
- पिन्वमाने-पिविधातोः शानचि नमागमे मुकागमे।

**अच्छा सिन्धुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म।**
**वत्समिव मातरा संरिहाणे समानं योनिमनु संचरन्ती॥३॥**

**पदपाठः- अच्छ। सिन्धुम्। मातृऽतमम्। अयासम्। विऽपाशम्। उर्वीम्। सुऽभगाम्। अगन्म॥**
**वत्सम्ऽइव। मातरा। संरिहाणे इति सम्ऽरिहाणे। समानम्। योनिम्। अनु। संचरन्ती इति सम्ऽचरन्ती॥३॥**

**अन्वयः-** मातृतमां सिन्धुम् अच्छ अयासम्, उर्वीं सुभगां विपाशाम् अगन्म। मातरा वत्समिव संरिहाणे समानं योनिम् अनु सञ्चरन्ती (अगन्म)।

**व्याख्या-**हो नद्यौ 'मातृतमाम्' अतिशयेन मातरं 'सिन्धुं' स्रवन्तीं शुतुद्रीं त्वाम् 'अच्छ' आभिमुखेन 'अयासं' विश्वमित्रोऽहं प्राप्तोऽभूवम्। 'उर्वीं' महतीं 'सुभगां' सौभाग्यवतीं 'विपाशं' त्वाम् 'अगन्म' वयं प्राप्ताः स्मः। किं कुर्वत्यौ। 'मातरा' मातरौ द्वे धेनू वत्समिव 'संरिहाणे'। अन्तर्णीतसन्नर्थो लिहिः। जिह्वया लेढुमिच्छन्त्यौ यथा वत्समनुगच्छतस्तद्वत् 'समानम्' एकं 'योनिं' स्थानं समुद्रम् 'अनु' अभिलक्ष्य 'संचरन्ती' सम्यकं चरन्त्यौ। युवामयासिषमिति पूर्वेणान्वयः॥

**सरलार्थः -** श्रेष्ठायाः मातुः नद्याः (शुतुद्र्याः) समीपं, विस्तृतायाः तथा मनोहरायाः विपाट्-नद्याः समीपञ्च आगतः अस्मि। यथा एकमेव वत्सं मातरौ लिढः, तथा एकमेव स्थानं (समुद्रमुद्दिश्य) प्रवहन्त्यौ शुतुद्री-विपाशौ आगच्छतः।३

**व्याकरणम् -**

- मातृतमाम्-अतिशयेन मातरम्। अतिशयार्थे तमपि।
- अयासम्- या-धातोः लुङ्लकारे उत्तमपुरुषैकवचने।



- सुभगाम्- शोभनः भगः यस्याः ताम्।
- संरिहाणे- सम्पूर्वकात् लिह्-धातोः शानचि लस्य रादेशे नस्य च णकारे।
- अगन्म- गम्-धातोः लुङि उत्तमपुरुषद्विवचने।
- सञ्चरन्ती- सम्पूर्वकात् चर्-धातोः शतरि ङीपि प्रथमाद्विवचने। पदान्त ईकारः प्रगृह्यः।



## पाठगतप्रश्नाः-१

१. पर्वतक्रोडात् के नद्यौ प्रवहतः।

२. काः इव नद्यौ प्रवहतः।

३. पिन्वमाने इत्यस्य व्युत्पत्तिं लिखत।

४. इन्देषिते इत्यस्य कः अर्थः।

५. विपाशानद्याः तीरं कः आगतः।

६. संरिहाणे इत्यस्य व्यत्पत्तिं लिखत।

---

**एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः।**
**न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति॥४॥**

**पदपाठः- एना। वयम्। पयसा। पिन्वमानाः। अनु। योनिम्। देवऽकृतम्। चरन्तीः॥ न। वर्तवे। प्रऽसवः। सर्गऽतक्तः। किम्ऽयुः। विप्रः। नद्यः। जोहवीति॥४॥**

**अन्वयः-** एना वयं पयसा पिन्वमाना देवकृतं योनिम् अनु चरन्तीः। सर्गतक्तः प्रसवः न वर्तवे। किंयुः विप्रः नद्यो जोहवीति।

**व्याख्या-**एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः। 'एना' एनेन 'पयसा' 'पिन्वमाना' संतपर्यन्त्यः 'देवकृतं' देवेनेन्द्रेण कृतं संदिष्टं 'योनिं' स्थानं समुद्रम् अनु लक्षीकृत्य 'चरन्तीः' गच्छन्त्यः वयम् आस्महे। द्वयोर्बहुवचनं पूजार्थम्। तासामस्माकं 'सर्गतक्तः' सर्गे गमने प्रवृत्तः प्रसवः उद्योगः 'न वर्तवे' निर्वतनाय न भवति। 'किंयुः' किमिच्छन् असौ 'विप्रः' ब्राह्मणः नद्यः नदीः अस्मान् 'जोहवीति' भृशमाह्वयति॥

**सरलार्थः -** (एवं स्तुतिं कुर्वन्तं विश्वामित्रं प्रति नद्यौ आहतुः यत्) एतादृश्यः वयं (नद्यः) स्वजलधाराभिः इन्द्रेण निर्मितं समुद्रं प्रति गच्छामः। स्वभावतः प्रवहन्तीनाम् अस्माकं गतिः अरोधनीया। कथम् ऋषिः नदीं वारं वारं स्तौति।४



**व्याकरणम् -**

- एना- इदम्शब्दस्य तृतीयैकवचने, विभक्ति इत्यस्य आदेशे।
- देवकृतम्- देवेन कृतम्।कृ-धातोः क्तप्रत्यये।
- वर्तवे- वृ-धातोः तवेन प्रत्यये। (वैदिकरूपम्)।
- प्रसवः - प्रपूर्वकात् षू-धातोः अप्प्रत्यये।
- सर्गतक्तः - सर्गे तक्तः। सृज्-धातोः घञ्प्रत्यये सर्ग। तक् +क्त।
- किंयुः- किम् इच्छन् इत्यर्थे क्यच्प्रत्यये। क्यछन्दसि इत्यनेन उप्रत्यये।
- जोहविति- पुनः पुनः ह्वयति। यङ्प्रत्यये सति द्वित्वे अभ्यासे जादेशे गुणे संप्रसारणे इडागमे गुणे अवादेशे च।

**रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः।**

**प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः॥५॥**

**पदपाठः- रमध्वम्। मे। वचसे। सोम्याय। ऋतऽवरीः। उप। मुहूर्तम्। एवैः॥ प्र। सिन्धुम्। अच्छ। बृहती। मनीषा। अवस्युः। अह्वे। कुशिकस्य। सूनुः॥५॥**

**अन्वयः-** (हे) ऋतावरीः मे सोम्याम् वचसे मूहर्तम् एवैः उप रमध्वम्। कुशिकस्य सूनुः (अहम्) अवस्युः बृहती मनीषा सिन्धुम् अच्छा प्र अह्वे।

**व्याख्या-**विश्वामित्रो नदीः प्रति ब्रुते। 'ऋतावरीः'। ऋतमुदकम्। तद्वत्यो हे नद्यो यूयं 'मे' विश्वामित्रस्य मम 'सोम्याय' उत्तीर्याहं सोमं संपादयामीत्येवं सोमसंपादिने 'वचसे' तदर्थम् 'एवैः'। पञ्चम्यर्थे तृतीया। शीघ्रगमनेभ्यः 'मुहूर्तं' मुहूर्तमात्रम् उपरमध्वम्। उपपूर्वो रमिरुपसंहारे वर्तते। क्षणमात्रं शीघ्रगमनादुपरता भळत। सामन्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनी शुतुद्रीं प्रति ब्रुते। 'कुशिकस्य' राजर्षेः 'सुनुः' विश्वामित्रोऽहं 'बृहती' महत्या 'मनीषा' मनीषया स्तुत्या 'अवस्युः' आत्मनो रक्षणमिच्छन् सन् 'सिन्धुं' शुतुद्रीं त्वाम् 'अच्छ' आभिमुख्येन 'प्र अह्वे' प्रकर्षणाह्वयामि। अत्र निरुक्तम्- 'उपरमध्वं मे वचसे सोम्याय सोमसंपादिने। ऋतावरीर्ऋतवत्यः ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा। प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या वाऽवनाय कुशिकस्य सूनुः। कुशिको राजा बभूव' (निरु. २/२५) इति॥

**सरलार्थः -**

(विश्वामित्रः नदीः प्रति कथयति) हे पूतसलिलवत्यः, मे हितवचनं प्रति आदरभावनया स्वगतिं क्षणाय रुन्द्ध। स्वस्मै हितेच्छुः (अहं) कुशिकपुत्रः (विश्वामित्रः) उच्चैः नदीं (शुतुद्रीम्) आहूतवान्।५



**व्याकरणम् -**

- ऋतावरीः -ऋतम् यस्याः सा इत्यर्थे मतुपि छन्दससीवनिपौ इत्यनेन वनिपि, वनो र च इत्यनेन ङीपि वनः नकरारस्य रादेशे वाछन्दसि इत्यनेन दीर्घे। ततः सम्बोधनबहुवचने।
- एवैः- इण्-धातोः इणशीङ्भ्यां वन् इत्यनेन वन्प्रत्यये गुणे ततः तृतीयाबहुवचने।
- मनीषा-मनसः ईषा मनीषा।
- अवस्युः-अवः आत्मन इच्छति इत्यर्थे सुप आलन क्यच् इत्यनेन क्यचि ततः क्याच्छन्दसि इत्यनेन उप्रत्यये अवस्युः।

**इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्रबाहु॒रपा॑हन्वृ॒त्रं प॑रि॒धिं न॒दीना॑म्।**

**दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः॥६॥**

**पदपाठः- इन्द्रः॑। अ॒स्मान्। अ॒र॒द॒त्। वज्र॑ऽबाहुः। अप॑। अ॒ह॒न्। वृ॒त्रम्। परि॒ऽधिम्। न॒दीना॑म्॥**

**दे॒वः। अ॒न॒य॒त्। स॒वि॒ता। सु॒ऽपा॒णिः। तस्य॑। व॒यम्। प्र॒ऽस॒वे। या॒म॒ः। उ॒र्वीः॥६॥**

**अन्वयः-** वज्रबाहुः इन्द्रः अस्मान् अरदत्, नदीनां परिधिं वृत्तम् अप अहन्। सुपाणिः सविता देवः (अस्मान्) अनयत्। वयं उर्वीः तस्य प्रसवे यामः।

**व्याख्या-**नद्यः प्रत्यूचुः। ह विश्वमित्र, 'वज्रबाहुः' वज्रयुक्तो बाहुर्ययस्यासौ वज्रबाहुः। तादृशो बलवान् 'इन्द्रः' नदीः 'अस्मान्' 'अरदत्'। रदति खनतिकर्मा। अखनत्। कथमखनत्। उच्यते। 'नदीनां' शब्दकारिणीनामपां 'परिधिं' परितो निहिमुदकमन्तः कृत्वा परितो वर्तमानमित्यर्थः। तादृशं 'वृत्रम्'। वृणोत्याकाशमिति वृत्रो मेघः। तं मेघम् 'अपाहन्' जघान। तस्मिन् हते आपः पतिताः। ताभिर्गच्छन्तीभिर्वयं खाताः। एवं मेघहननद्वारेणाखनत्। न केवलमखनत्। किं तर्हि। 'सविता' सर्वस्य जगतः प्रेरकः 'सुपाणिः' शोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात्तादृशः 'देव' द्योतमानः इन्द्रः अस्मान् अनयत्। मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत्। 'तस्य' तादृशसामर्थ्योपेतस्य इन्द्रस्य प्रसवे अभ्यनुज्ञायां वर्तमाना 'उर्वीः' उदकैः प्रभूताः 'वयं' 'यामः' गच्छामः। न तव वचनादुपरमामहे। उक्तार्थं यास्को ब्रवीति- 'इन्द्रो अस्मानरदद्वज्रबाहू। रदति खनतिकर्म। अपाहन्वृत्रं परिधिं नदीनामिति व्याख्यातम्। देवोऽनयत्सविता सुपाणिः कल्याणपाणिः। पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति। तस्य वयं प्रसवे याम उर्वीरुर्व्यः' (निरु. २/२६) इति।

**सरलार्थः -**

पाणिभ्यां वज्रं धारयन् इन्द्रः अस्मान् (नदीः) बहिः आनीतवान्। सः (इन्द्रः) नदीनां गतिबाधकं वृत्रं (मेघम्) हतवान्। शोभनहस्तवान् इन्द्रः अस्मान् (नदीः) आनीतवान्। वयं (नद्यः) तस्यैव (इन्द्रस्य) आज्ञया वहामः।६

**व्याकरणम् -**



- अरदत्- रद्-धातोः लङि प्रथमपुरुषैकवचने।
- अनयत्-नी-धातोः लङि प्रथमपुरुषैकवचने।
- यामः-या-धातोः लटि प्रथमपुरुषैकवचने।



## पाठगतप्रश्नाः-२

७. नद्यौ कुत्र गच्छतः।

८. ऋषिः नदीं कथं स्तौति।

९. भरताः इत्यस्य कः अर्थः।

१०. शीभम् इत्यस्य कः अर्थः।

११. वज्रबाहुः कः।

१२. वृत्रः कः।

---

**प्रवाच्यं शश्वधा वीर्यं१ तदिन्द्रस्य कर्म यदहिं विवृश्चत्।**

**वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः॥७॥**

**पदपाठः- प्रऽवाच्यम्। शश्वधा। वीर्यम्। तत्। इन्द्रस्य। कर्म। यत्। अहिम्। विऽवृश्चत्॥ वि। वज्रेण। परिऽसदः। जघान। आयन्। आपः। अयनम्। इच्छमानाः॥**

**अन्वयः-** इन्द्रस्य तत् वीर्यं कर्म यदहिं विवश्चत् शश्वधा प्रवाच्यम्। वज्रेण परिषदः वि जघानः (तदनन्तरम्) आपः अयनम् इच्छमानाः आयन्।

**व्याख्या-** योऽयमिन्द्रः 'अहिं' मेघं 'विवृश्चत्' उदकप्रेरणार्थं जघानेति 'यत्' 'कर्म' छेदनरूपं 'तत्' इदं तस्य 'इन्द्रस्य' 'वीर्यं सामर्थ्यं' 'शश्वधा' सर्वदा 'प्रवाच्यं' प्रकर्षेण वचनीयम्। तथा स इन्द्रः 'परिषदः' परितः सीदत आसीनान् प्रतिबन्ध-कारिणोऽसुरान् 'वज्रेण' 'वि' 'जघान'। अथ 'अयनं' स्थानम् 'इच्छमानाः' इच्छन्त्यः 'आपः' 'आयन्' यान्ति॥

**सरलार्थः -**

इन्द्रस्य तत् पराक्रमशालि कार्यं यत् सः अहिं (वृत्रम्) हतवान्, तत् (प्रशंसनीयम्) एव। सः वज्रेण (जलस्य प्रतिबन्धकं) मेघं कर्तितवान्। आपः स्वमार्गम् अन्विषन्ति प्रवहन्ति। ७

**व्याकरणम् -**



- प्रवाच्यम्- प्रपूर्वकात् वच्-धातोः ण्यत्प्रत्यये।
- वीर्यम् - वीर्-धातोः यत्प्रत्यये।
- विवृश्चत् - व्रश्च्-धातोः लङि प्रथमपुरुषैकवचने।
- परिषदः -परिपूर्वकात् सद्-धातोः क्विपि।
- जघान- हन्-धातोः लिटि प्रथमपुरुषैकवचने।
- आयन्-इ-धातोः लङि प्रथमपुरुषबहुवचने।
- इच्छमानाः -इष्-धातोः शनचि प्रथमाबहुवचने।

**एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि।**

**उक्थेषु कारो प्रति नो जुषस्व मा नो नि कः पुरुषत्रा नमस्ते॥८॥**

**पदपाठः-** **एतत्। वचः। जरितः। मा। अपि। मृष्ठाः। आ। यत्। ते घोषान्। उत्ऽतरा। युगानि॥**

**उक्थेषु। कारो इति। प्रति। नः जुषस्व। मा। नः। नि। करिति कः। पुरुषऽत्रा। नमः।**

**ते॥८॥**

**अन्वयः-** (हे) जरितः एतद् वचः मा अपि मृष्ठाः यत्ते आ घोषान् उत्तरा युगानि। हे कारो उक्थेषु नः प्रति जुषस्व। मा नः पुरुणत्रा नि कः, ते नमः।

**व्याख्या-**नद्यः प्रसङ्गाद् इन्द्रस्तोत्रं श्रुत्वा विश्वामित्रं प्रत्यूचुः। 'जरितः' स्तोतर्हे विश्वामित्र 'ते' त्वदीयं यत् संवादात्मकं 'वचः' त्वं 'नः' अभीत्य 'आ घोषान्' उद्घोषयन् वर्तसे तद्वचः 'मापि मृष्ठाः' मा विस्मार्षीः। किं कारणम्। 'उत्तरा युगानि' उत्तरेषु याज्ञिकेषु युगेषु अहःसु 'उक्थेषु' 'कारो' शस्त्राणां कर्तस्त्वं 'नः' अस्मान् 'प्रति जुषस्व' संवादात्मकेन तेन वाक्येन प्रतिसेवस्व। इदानीं 'नः' अस्मान् पुरुषत्रा पुरुषेषु 'मा नि कः' उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितारां पुंवत् प्रागल्भाः ना कार्षीः। 'ते' तुभ्यं 'नमः'॥

**सरलार्थः -**

हे स्तुतिगायक, एतद्वचः न कदापि विस्मरतु येन भाविनो युगस्य मानवाः ते इदं वचनं श्रोतुं शक्नुयुः। हे कवे, स्तुत्या माम् आदरतु। (उक्ति-प्रत्युक्तिभिः) मनुष्यकोटेः अधः अस्मान्(नदीः) मा नयतु। ८

**व्याकरणम् -**

- जरितः-जॄ-धातोः तृचि ततः सम्बोधने।
- मृष्ठाः-मृष्-धातोः लुङि मध्यमपुरुषैकवचने।
- घोषान्- घुष्श्रवणे इतिधातोः लटि प्रथमपुरुषबहुवचने।



- कारो- कृ-धातोः उणि सम्बोधने।
- जुषस्व- आत्मनेपदिनःजुष्-धातोः लोटि मध्यमपुरुषैकवचने।
- कः -कृ-धातोः लुङि मध्यमपुरुषैकवचने वैदिकरुम्।
- पुरुषत्रा- सप्तम्यर्थ देवमनुष्यपुरुमतर्येभ्यो द्वितीयसप्तम्योर्बहुलम् त्रा प्रत्यये।

**ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन।**

**नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः॥९॥**

**पदपाठः- ओ इति। सु। स्वसारः। कारवे। शृणोत। ययौ। वः। दूरात्। अनसा। रथेन॥ नि। सु। नमध्वम्। भवत। सुऽपाराः। अधःऽअक्षाः। सिन्धवः। स्रोत्याभिः॥९॥**

**अन्वयः-** ओ स्वसारः कारवे सु शृणोत, दूरात् अनसा रथेन वः ययौ। हे सिन्धवः स्रोत्याभिः निनमध्वम्, अधोअक्षाः सुपाराः भवतः।

**व्याख्या-** विश्वामित्रो नदीः प्रत्युवाच। स्वसारः भगिन्यः सिन्धव हे नद्यः कारवे स्तोत्रं कुर्वाणस्य मम वचनं सु सुष्ठु ओ शृणोत शृणुतैव। अनसा शकटेन रथेन च सह दूरात् विप्रकृष्टाद्देशात् वः युष्मान् ययौ पाप्तोऽस्मि। यूयं सु सुष्ठु नि नमध्वम् आत्मना स्वयं प्रह्वाः भवत। किंच स्रोत्याभिः स्रवणशीलाभिरद्भिः अधोअक्षाः रधाङ्गस्याक्षास्याधस्ताद् भवत। यदापोऽक्षस्याधस्ताद्भवन्ति तदा रथादीनि नेतुं शक्यते। तस्मुत् तत्परिमाणोदकाः भवेति अर्थाभिप्रायः॥

**सरलार्थः** - (तदनन्तरं विश्वामित्रः नदीं प्रत्युवाच) भोः स्वसारः, (मम) कवेः वाक् सम्यक्तया शृण्वन्तु (यतो हि) सः त्वत्समक्षं बहोः दूरात् रथेन समागतः अस्ति। स्वजलधारां हे प्रवहमानाः नद्यः रथस्य अक्षस्य अधो नयन्तु, येन रथः तरणयोग्यो भवेत्।९

**व्याकरणम्-**

- ओ- सम्बोधनवाचकनिपातः।
- शृणोत- श्रु-धातोः लोटि मध्यमपुरुषबहुवचने।
- ययौ- या-धातोः लिट्  उत्तमपुरुषैकवचने।
- नमध्वम्- नम्-धातोः लोटि मध्यमपुरुषैकवचने।
- भवत- भू-धातोः लोटि मध्यमपुरुषैकवचने।



## पाठगतप्रश्नाः -३

१३. इन्द्रः केन वृत्रं हतवान्।



१४. शश्वधा इत्यस्य कः अर्थः।

१५. नद्योः का प्रार्थना।

१६. मापि मृष्ठाः इत्यस्य कः अर्थः।

१७. विश्वामित्रः केन आगतः।

१८. नदीं प्रति विश्वामित्रस्य का प्रार्थना।

## १५.१.२) मूलपाठम् अवगच्छाम -

**आ ते कारा शृणवामा वचांसि ययाथ दूरादनसा रथेन।**

**नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते॥१०॥**

**पदपाठः- आ। ते। कारो इति। शृणवाम। वचांसी। ययाथ। दूरात्। अनसा। रथेन॥ नि। ते। नंसै। पीप्यमाऽइव। योषा। मर्यायऽइव। कन्या। शश्वचै। त इति ते॥१०॥**

**अन्वयः-** (हे कारो) ते वचांसि शृणवाम (यत् त्वं) दूराद् अनसा रथेन ययाथ। पीप्याना इव योषा ते नंसै, मर्याय इव कन्या ते शश्वचैः।

**व्याख्या-** नद्यः पूर्वं विश्वमित्रं प्रत्याख्यायानयर्चा तस्य वाक्यमाशुश्रुवुः। 'कारो' स्तोत्रं कुर्वाण हे विश्वामित्र 'ते' तव 'वचांसि' इमानि वाक्यानि 'आ शृणवाम' शृणुमः। तव समीहितं प्रयोजनं कुर्म इत्यर्थः। 'अनसा' शकटेन 'रथेन' च सह 'ययाथ'। यतो 'दूरात्' आगतोऽसि। वयं च 'ते' त्वदर्थं 'नि नंसौ' नीचैर्नमाम। प्रत्येकविवक्षया अत्रेवचनम्। रथेन गन्तुं गाधोदका भवामेत्यर्थः। तर् दृष्टान्तः। 'पीप्यनेव योषा'। पीप्याना पुत्रं स्तनं पाययन्ती योय़षा माता यथा प्रह्वीभवति। दृष्टान्तान्तरम्। यथा 'कन्या' युवतिः 'मर्यायेव' मनुष्याय पित्रे भ्रात्रे वा 'शश्वचैः' परिष्वजनाय नम्रीभवति तद्वत् ते त्वदर्थं प्रह्वीभवामः। 'ते' इति पुनरुक्तिरादरार्थम्। एतामृचं यास्क एवं व्याचष्टे- 'आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा' (निरु. २.२३) इति॥

**सरलार्थः -**

हे कवे, वयं ते अनुज्ञां शृणुमः, (यतो हि) त्वं दूराद् रथेन आगतः असि। यथा स्तनवती माता (स्वपुत्रार्थं) किञ्च यथा कापि बाला स्वपितरं भातरं वा आलिङ्गति (तथैव) त्वदर्थम् अहं मम नीचैः गच्छामि (जलस्तरं स्वल्पं विदधामि इत्यर्थः)।

**व्याकरणम् -**

- शृणवाम-शृ-धातोः लटि उत्तमपुरुषबहुवचने वैदिकरूपम्।



- ययाथ- या-धातोः लिटि मध्यमपुरुषबहुवचने।
- नंसौ- नम्-धातोः लुङि उत्तमपुरुषबहुवचने।
- शश्वचैः - श्वच्-धातोः क्वपि।

**यदङ्ग त्वा भरता संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः।**

**अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम्॥११॥**

**पदपाठः- यत्। अङ्ग। त्वा। भरताः। सम्ऽतरेयुः। गव्यन्। ग्रामः। इषितः। इन्द्रजूतः॥ अर्षात्। अह। प्रऽसवः। सर्गतक्तः। आ। वः। वृणे। सुऽमतिम्। यज्ञियानाम्॥११॥**

**अन्वयः-** अङ्ग यद् गव्यन् इन्द्रजूतः इषितः भरताः ग्रामः त्वा संतरेयुः सर्गतक्तः प्रसवः अर्षाद् अह। यज्ञियानाम् व सुमतिम् आ वृणे।

**व्याख्या-** विश्वामित्रो नदीं प्रत्युवाच। अङ्ग इत्यामन्त्रणा। हे नद्यः यत् यस्मात् युष्माभिरुत्तितीर्षोः ममोत्ररणमभ्यनुज्ञातं तस्मात् भराताः भरतकुलजाः मदीया सर्वे परस्परमेकतामापन्ना नदीं ता संतरेयुः सम्यगुत्तीणां भवेयुः। तदेव विशिनष्टि। गव्यन् गा उदकानि तरीतुमिच्छन् इषितः त्वयाभ्यनुज्ञातः इन्द्रजूतः युष्माकं प्रवर्तकेनेन्द्रेण च प्रेरितः ग्रामः भरतानां संघः अर्षात् संतरेत्। यत् सर्गतक्तः गमनाय प्रवृत्त प्रसवः तेषामुद्योगः अह पूर्वं युष्माभिरनुज्ञातः। अहं तु यज्ञियानां यज्ञार्हाणणां वः युष्माकं सुमतिं शोभनां स्तुतिम् आ वृणे सर्वतः संभजे॥

**सरलार्थः** - भोः (नद्यः), (युष्माकमनुमतिः प्राप्ता, अतः) भरतवंशीयाः (वयं) युष्मान् (नदीः) उत्तारयिष्यामः। (त्वया) अनुज्ञाप्राप्तानां तथा इन्द्रेण प्रेषितानां समूहं उत्तारयिष्यामः। युष्माकं गतिः स्वाभाविकरूपेण प्रवहतु। पूतसलिलानां समर्थनम् इच्छामि अहम्।११

**व्याकरणम् -**

- सन्तरेयुः-सम्पूर्वकात् तृ-धातोः विधिलिङि प्रथमपुरुषबहुवचने।
- इन्द्रजूतः-इन्द्रेण जूतः।
- गव्यन्- गोः क्यचि।
- अर्षात्- ऋष्-धातोः लेटि प्रथमपुरुषैकवचने।
- वृणे- वृ-धातोः लटि उत्तमपुरुषैकवचने।

**अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम्।**

**प्र पिन्वमाध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम्॥१२॥**



**पदपाठः- अतारिषुः। भरताः। गव्यवः। सम्। अभक्त। विप्रः। सुऽमतिम्। नदीनाम्॥ प्र।**

**पिन्वध्वम्। इषयन्ती। सुऽराधाः। आ वक्षणाः। यात। शीभम्॥१२॥**

**अन्वयः-** गव्यवः भरताः अतारिषुः। विप्रः नदीनाम् सुमतिम् सम् अभक्त। सुराधाः (यूयं) इषयन्तीः प्र पिन्वध्वम्, वक्षणाः आ पृणध्वम्, शीभं यात।

**व्याख्या-** 'गव्यवः' गा आत्मन इच्छतः 'भरताः' भरतकुलजाः सर्वे 'अतारिषुः' तां नदीं समतरन्। 'विप्रः' मेधावी विश्वामित्रः 'नदीनां सुमतिं' शोभनां स्तुतिं 'समभक्त' समभजत। यूयं तु यथापूर्वम् 'इषयन्तीः' कुल्यादिद्वारा अन्नं कुर्वाणा अत एव 'सुराधाः' शोभनधनोपेता यूयं 'वक्षणाः' कृत्रिमसरितः कुल्याः 'प्र पिन्वध्वं' प्रकर्षेण तर्पयत। 'आ पृणध्वं' ताः सर्वतः पूरयत च। 'शीभं' शीघ्रं 'यात' गच्छत च॥

**सरलार्थः -** पारं गन्तुम् इच्छवः भरतवंशीयाः पारं जग्मुः। ब्राह्मणः नदीनां समर्थनं सम्यक्तया प्राप्तवान्। शोभनधनवत्यो (यूयं) धनम् उत्पादयन्तः स्वस्थाने एव सम्यक् प्रवहन्तु, प्लाविता भवन्तु, वेगेन प्रवहन्तु।१२

**व्याकरणम् -**

- आतारिषुः-तृ-धातोः लुङि प्रथमपुरुषबहुवचने।
- भक्त-भज्-धातोः लुङि प्रथमपुरुषैकवचने।
- इषयन्तीः- इष्-धातोः णिचि।
- पिन्वध्वम्- पिन्व-धातोः लोटि मध्यमपुरुषबहुवचने।
- पृणध्वम् -पृञ्-धातोः लोटि मध्यमपुरुषबहुवचने।
- यात- या-धातोः लोटि मध्यमपुरुषबहुवचने।

**उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत।**

**मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम्॥१३॥**

**पदपाठः- उत्। वः। ऊर्मिः। शम्याः। हन्तु। आपः। योक्त्राणि। मुञ्चत। मा। अदुःऽकृतौ।**

**विऽएनसा। अघ्न्यौ। शूनम्। आ। अरताम्॥१३॥**

**अन्वयः-** आपः ऊर्मिः वः शम्या उद् हन्तु, आपः योक्त्राणि मुञ्चत। अदुष्कृतौ व्येनसौ अघ्न्यौ शूनताम् मा अरताम्।

**व्याख्या-**पूर्वमुत्तितीर्षुर्विश्वामित्रो नदीरुक्त्वा अधुना उत्तितीर्षुः पुनराह। हे नद्यः 'वः' युष्माकम् 'ऊर्मिः' तरङ्गः 'शम्याः' युग्यकण्ठपार्श्वादिसंलग्ना रज्जवः 'उत्' ऊर्ध्वं यथा भवन्ति तथा 'हन्तु' गच्छतु। स तरङ्गो रज्जूनामधो गच्छत्विभिप्रायः। तथा हे 'आपः' यूयं 'योक्त्राणि' ता रज्जूः मुञ्चत।



यथा न स्पृशन्ति तथा यान्त्वित्यभिप्रायः। 'व्येनसा' विगतपापे अत एव अदुष्कृतौ वल्याणकर्मकारिण्यौ 'अघ्न्यौ' अघ्न्ये न केनापि तिरस्करणीये विपाट्छुतुद्र्यौ 'शूनं' समृद्धिं मा आरताम् आगच्छताम्। एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातोऽतरदिति॥

**सरलार्थः -**

भोः नद्यः प्रग्रहान् त्यजध्वम्। दुष्कृतिरहिताः पापरहिताः तिरस्कारायोग्याः एता नद्यः वृद्धिं न प्राप्नुवन्तु।१३

**व्याकरणम् -**

- हन्तु- हन्धतोः लोटि प्रथमपुरुषैकवचने।
- मुञ्चत- मुञ्च्-धातोः लोटि प्रथमपुरुषबहुवचने।
- अरताम्- ऋ-धातोः लुङि प्रथमपुरुषद्विवचने।



## पाठगतप्रश्नाः - ४

१९. प्र पिन्वध्वमित्यस्य कः अर्थः।

२०. समभक्त इत्यस्य कः अर्थः।

२१. उर्मिः इत्यस्य कः अर्थः।

२२. शून इत्यस्य कः अर्थः।

२३. विश्वामित्रः कस्य राज्ञः पुरोहितः।

२४. विश्वमित्रः कस्य पुत्रः।

२५. विश्वामित्रः पौरहित्येन किम् आनीतम्।

२६. विश्वामित्रः केन नदीतटम् आगतवान्।

२७. विश्वामित्रः कयोः नदीतीरं प्राप्तवन्।

२८. विश्वामित्रः नद्याः समीपे किं प्रार्थितवान्।

२९. नद्यौ केन सृष्टे।

३०. वृत्रासुरं कः हतवान्।

## १५.२) विश्वामित्र-नदीसंवादः (संक्षेपेण)

ऋग्वेदे नैके रसपूर्णसंवादासूक्ताः सन्ति। वैदिककथासहित्ये विश्वामित्र-नदीकथा एका अन्यतमा कथा। एवम् ऋग्वेदे अनेके सूक्ते कथोपकथनं प्राधान्येन दृश्यते। कथोपकथनमेव संबादनाम्ना प्रसिद्धः।



संबादविषये पाश्चात्यपण्डितानां मतपार्थक्यं दृश्यते। डः ओल्डेन वर्गमतानुसारेण संवादाः प्राचीनोपाख्यानाम् अवशिष्टस्वरुम्। तस्य मतानुसारेण ऋग्वेदीयोपाख्यानानि गद्यात्मकानि। डः ज्रोदरादि पण्डितानां मतानुसारेण संवादाः वैदिकनाटकस्वरूपम्। डः विन्टरनित्स अस्य मतानुसारेण लोकगीतस्य काव्यस्य स्वरूपमिदम्। काले काले काव्यस्य उत्पत्तिः नवीननाटकानम् उत्पत्तिः च अभवत्। एवमेव भारतीसाहित्येतिहासे संवादानां महत्त्वपूर्णं स्थानं वर्तते।

एतेषु सेवादेसु विश्वामित्र-नदीसंवादः अन्यतममहत्वपूर्णसंवादः। प्राचीनकाले विश्वामित्रः राज्ञः सुदासस्य पुरोहितः आसीत्। विश्वामित्रः पौरहित्येन प्राप्तं धनं नीत्वा शकेटेन विपाशानद्याः किञ्च शुतुद्रीनद्याः तीरं प्राप्तवान्।अतः परं नदीपारं गमनाय यथा नद्याः जलस्तरं नीचैः भवति तदर्थं महर्षिविश्वामित्रः नद्योः स्तुतिं कुर्वन् कथयति - प्रग्रहात् मुक्तौ अश्वौ यथा धावतः तथा सागरसंगमनाय पर्वताङ्कात् गत्या प्रवाहत्योः श्रेष्ठनदीमात्रोः शुतुद्रीविपाशायोः तीरमागतवान्। तथा विस्तिर्णसौन्दरे नद्योः तटं प्राप्तवान्।द्वौ गावौ यथा एकमेव वत्स्यं लिढः तथा नद्यौ अपि सागरसंगमनाय एकमेवलक्षे प्रवहत्यौ एवं नद्योः तीरम् आगतवान्। एवं विश्वामित्रः नद्यौ स्तुवन् अस्ति। तदा विश्वामित्रमुद्दिश्य नद्यौ कथयतः-

**नदी-**

आवाम् इन्द्रदेवन सृष्टे स्वगत्या प्रवहाव। अवयोः गतिः न रोधनीया इति। अस्यार्थः यदा वृत्रासुरः पृथ्वीनाशाय नदीनां प्रवाहधारां रुद्धवान्। तदा इन्द्रदेवः वृत्रासुरं हत्वा पर्वताङ्कात् अस्याः नद्याः सृष्टिं कृतवान्। तर्हि किमर्थम् ऋषिः वारं वारं नदीं स्तौति। ऋषिपुत्रः कुशिकः स्वस्य रक्षणाय सोमयुक्तवचसा नदीं क्षणाय रोद्धुं स्तौति। वज्रहस्तः इन्द्रः नदीयाम् अवरोधकं वृत्तासुरं घातयित्वा निरविच्छिन्नतया प्रवहणाय मां बहिरानयत्। इन्द्रः अहिं हतवान् इति इन्द्रस्य पराक्रमयुक्तं कार्यम् अवश्यं कथनयोग्यम्। इदमेव विश्वामित्रः नदीं प्रति कथयति। नद्यः प्रत्युत्तरन्ति- हे स्तावकः इदं स्तुतिवचनं कदापि मा विस्मरतु यतो हि भाविपुरुषाः भवतः इदं स्तुतिवचनं श्रोतुं शक्नुयुः। हे ऋषे स्तुत्या माम् आदरतु अपि च मां स्तुत्या अलौकिकशोभां प्रददातु। अहं तुभ्यं प्रणमामि। ततः विश्वामित्रः नदीः भगिनीरूपेण सम्बोध्य कथयति- हो सुन्दर्यः भगिन्यः कवेः मम वचनं शृण्वन्तु, यतो हि बहुदूरं यानेन रथेन वा अतिक्रम्य अहं युष्मत्सकाशम् आगतवान् अस्मि। हे नद्यः किञ्चित् नीचैः गच्छतु। स्वस्य जलधाराम् अन्तः सङ्कोच्य तरणयोग्या भूत्वा प्रवहन्तु- विश्वामित्रः वचनं श्रुत्वा नद्यः तथा अभवन्। तदा विश्वामित्रः नदीभ्यः साधुवादं प्रददन् सपरिजनः नदीम् उत्तीर्णवान् ततः उत्तरणानन्तरं पुनः पूर्ववत्प्रवहणाय नदीं प्रार्थितवान् इति।

एवमिदं संवादसूक्तं नाटकीयौजस्वितया सम्पूर्णं परिपूर्णं तथा कलनात्मकदृष्ट्या सुन्दरं सरसं च अस्ति।





## पाठसारः

प्राचीनकाले विश्वामित्रः राज्ञः सुदासस्य पुरोहितः आसीत्। विश्वामित्रः पौरहित्येन प्राप्तं धनं नीत्वा शकेटेन विपाशानद्याः किञ्च शुतुद्रीनद्याः तीरं प्राप्तवान्।अतः परं नदीपारं गमनाय यथा नद्याः जलस्तरं नीचैः भवति तदर्थं महर्षिविश्वामित्रः नद्योः स्तुतिं कुर्वन् कथयति - प्रग्रहात् मुक्तौ अश्वौ यथा धावतः तथा सागरसंगमनाय पर्वताङ्कात् गत्या प्रवाहत्योः श्रेष्ठनदीमात्रोः शुतुद्रीविपाशायोः तीरमागतवान्। तथा विस्तिर्णसौन्दरे नद्योः तटं प्राप्तवान्। द्वौ गावौ यथा एकमेव वत्स्यं लिढः तथा नद्यौ अपि सागरसंगमनाय एकमेवलक्षे प्रवहत्यौ एवं नद्योः तीरम् आगतवान्। एवं विश्वामित्रः नद्यौ स्तुवन् अस्ति।तदा विश्वामित्रमुद्दिश्य नद्यौ कथयतः-यदा वृत्रासुरः पृथ्वीनाशाय नदीनां प्रवाहधारां रुद्धवान्। तदा इन्द्रदेवः वृत्रासुरं हत्वा पर्वताङ्कात् अस्याः नद्याः सृष्टिं कृतवान्। ऋषिपुत्रः कुशिकः स्वस्य रक्षणाय सोमयुक्तवचसा नदीं क्षणाय रोद्धुं स्तौति। वज्रहस्तः इन्द्रः नद्याम् अवरोधकं वृत्तासुरं घातयित्वा निरविच्छिन्नतया प्रवहणाय मां बहिरानयत्। इन्द्रः अहिं हतवान् इति इन्द्रस्य पराक्रमयुक्तं कार्यम् अवश्यं कथनयोग्यम्। इदमेव विश्वामित्रः नदीं प्रति कथयति। नद्यः प्रत्युत्तरन्ति- हे स्तावकः इदं स्तुतिवचनं कदापि मा विस्मरतु यतो हि भाविपुरुषाः भवतः इदं स्तुतिवचनं श्रोतुं शक्नुयुः। हे ऋषे स्तुत्या माम् आदरतु अपि च मां स्तुत्या अलौकिकशोभां प्रददातु। अहं तुभ्यं प्रणमामि। ततः विश्वामित्रः नदीः भगिनीरूपेण सम्बोध्य कथयति- हो सुन्दर्यः भगिन्यः कवेः मम वचनं शृण्वन्तु, यतो हि बहुदूरं यानेन रथेन वा अतिक्रम्य अहं युष्मत्सकाशम् आगतवान् अस्मि। हे नद्यः किञ्चित् नीचैः गच्छतु। स्वस्य जलधाराम् अन्तः सङ्कोच्य तरणयोग्या भूत्वा प्रवहन्तु- विश्वामित्रः वचनं श्रुत्वा नद्यः तथा अभवन्। तदा विश्वामित्रः नदीभ्यः साधुवादं प्रददन् सपरिजनः नदीम् उत्तीर्णवान् ततः उत्तरणानन्तरं पुनः पूर्ववत्प्रवहणाय नदीं प्रार्थितवान् इति।



## पाठान्तप्रश्नाः

१. स्वभाषया विश्वामित्र- नदीकथां लिखत।
२. विश्वामित्र-नदीसंवादस्य सारं संक्षेपेण लिखत।
३. प्र पर्वतानामुशती ....इत्यादिमन्त्रं व्याख्यात।
४. इन्द्रषिते प्रसवं भिक्षमाणे....इत्यादिमन्त्रं व्याख्यात।
५. अच्छा सिन्धुं मातृतमामयासं....इत्यादिमन्त्रं व्याख्यात।
६. एना वयं पयसा....इत्यादिमन्त्रं व्याख्यात।
७. रमध्वं मे वचसे....इत्यादिमन्त्रं व्याख्यात।
८. इन्द्रो अस्माँ ....इत्यादिमन्त्रं व्याख्यात।



९. प्रवाच्यं शश्वधा वीर्यं....इत्यादिमन्त्रं व्याख्यात।

१०. ओ षु स्वसारः ....इत्यादिमन्त्रं व्याख्यात।

११. यदङ्ग त्वा भरताः....इत्यादिमन्त्रं व्याख्यात।

१२. अतारिषुर्भरता....इत्यादिमन्त्रं व्याख्यात।

१३. उद्वः ऊर्मिः शम्या....इत्यादिमन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तरकूटः-१

१. विपाशा।

२. शुतुद्रु।

३. पिविधातोः शानचि नमागमे मुकागमे

४. इन्द्रेण प्रेषिते।

५. विश्वामित्रः।

६. सम्पूर्वकात् लिह्-धातोः शानचि लस्य रादेशे नस्य च णकारे

### उत्तरकूटः-२

७. समुद्रं प्रति।

८. पारं गमनाय।

९. भरतकुलजाः।

१०. शीघ्रम्।

११. इन्द्रः।

१२. मेघः।

### उत्तरकूटः-३

१३. वज्रेण।

१४. सर्वदा।

१५. स्तुतिः इयम् मा विष्मार्षीः येन भाविनि काले जनाः अपि स्मरिष्यन्ति।

१६. मा विस्मार्षीः।

१७. रथेन।

१८. यथा नदी पारंगमनाय अधोगामी भवति।



**उत्तरकूटः-४**

१९. प्रकर्षेण तर्पयत।

२०. समभजत।

२१. तरङ्गः।

२२. समृद्धिः।

२३. सुदासस्य।

२४. कुशिकस्य।

२५. धनम्।

२६. रथेन।

२७. शुतुद्रुविपाशयोः।

२८. यथा नद्याः प्रवाहः स्तब्धी भवतु .।

२९. इन्द्रेण।

३०. इन्द्रः।

---

॥इति पञ्चदशः पाठः ॥

---

